# किरातार्ज्जुनीयम्

[ महाकवि-श्रीभारविप्रणीतम् ]



(महामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितया घण्टापथसमाख्यया व्याख्यया
अन्वय वाच्यपरिवर्त्तन वङ्गभाषानुवाद-हिन्दिभाषानुवाद-
श्लोकसूची विस्तृतभूमिकाप्रश्नादिभिश्च
समुद्भासितम् )

——:o:——

अध्यापक—श्रीमद्गुरुनाथविद्यानिधि-भट्टाचार्य्येण

सम्पादितम्

श्रीमद् गोविन्दचन्द्र काव्यतीर्थ-पुराणशास्त्रिणा

संशोधितम्




मूल्यम् मुद्रात्रयम्—३)

# समालोचना।

दुर्भाग्यवशात् विगतहर्षात् भारतवर्षात् आर्णज्ञानविभाकरे चिराय अस्तं गतेऽपि, तमःसमावृतमानसा भारतवर्षीया आर्य्यवर्य्याः कथमिदानीमपि तिरोहितानन्दसन्दोहं सुखस्मृतिमात्रसर्व्वस्वं स्वजीवनं सार्थकमिव मन्यन्ते, मन्यन्ते च केषाञ्चित् सरसवस्तूनां सञ्जीवनमदिरामहिम्ना, इति चेदनुसन्धीयते केनचिदनुसन्धित्सुना, तर्हि तन्मनसि एतदेव प्रतिभासते यत् अस्यां विजयवैजयन्तीलाञ्छितभूम्यां साम्प्रतमपि विभासन्ते एवंविधाः केषाञ्चित् निखिललोकचेतःसमाकर्षणचतुराणां पदार्थानां गौरवप्रभाः, याभिः सुरञ्जितहृदयाः सन्तः अद्यापि सर्व्वे अस्मिन्नेव भगवच्चरणरेणुपवित्रीकृते भारतवर्षे जन्मग्रहणेन आत्मानं सफलीकर्त्तुं कामयन्ते। महादेशस्यास्य नैसर्गिकशोभागौरवेण, सनातनधर्म्ममहिम्ना संस्कृतभाषागरिम्णा च, अधुनापि आर्य्यवर्य्याणां भारतवर्षीयाणामासनं सर्व्वोपरि वरीवर्त्ति।

यशःसुधाधवलितदिङ्मण्डलानां वाणीचरणकमलमधुपानां व्यासवाल्मीकिकालिदासभवभूतिप्रभृतीनां भारतीयकविमुख्यानां कवित्ववीणानिक्वणो यद्यपि अस्माकं भाग्यवैगुण्यात् चिराय विलुप्ततामधिगतवान्, तथापि पीयूषवर्षिणी तदनुरणनधारा समीरणसम्पर्कं आत्मानमर्पयन्तीव, स्मारयन्तीव कतिविधा अतीतकथाः, जनयन्तीव विस्मयं वैदेशिकसुधीसमूहानां, मज्जयति विपुलविपुले आनन्दसन्दोहसागरे सहृदयरसिकान्।

इह खलु जगति कति कति जनाः समुत्पद्यन्ते विलीयन्ते च कालसागरे जलबुद्बुदवत्; किन्तु "कीर्त्तिर्यस्य स जीवति" इत्यादि सुभाषितं प्रमाणीकर्त्तुमेव अद्यापि भारविकवीनां अर्थगौरवपूर्णवचनरचनपटीयसां प्रसन्नगम्भीरपदायाः विविक्तवर्णाभरणायाः सरस्वत्याः शान्तमूर्त्तिः शान्तिधारां वितरति प्रशान्तमानसेभ्यः सुमनोभ्यः। यद्यपि अयं कविकुलकरीन्द्रो भारविः कदा कतमं जनपदं जन्मना पवित्रीचकार कमन्वयं वा अलमकार्षीत्, तत् सम्यक् निर्णेतुं शक्तिविरहिता वयं, धारावाहिकेतिहासाभावात् अस्माकमसामर्थ्यनिबन्धनाच्च; तथापि अनुसन्धाननैपुण्यवतां प्रत्नतत्त्वविदां वदनारविन्दसङ्कोचशङ्कया अस्य कवयितुराविर्भावकालादिनिरूपणार्थं कथञ्चिदयत्नाश्रयणं न दोषमावहेत्।

दृश्यते मुम्बय्यांमुद्रितकाव्यमाला-ग्रन्थगर्भे प्राचीनलेखमालाशीर्षकपरिच्छेदे त्रयोदशप्राचीनलेखे,—"किरातार्जुनीय पञ्चदश सर्गादिकोंकारो

दुर्व्विनीत नामधेय" इति अस्मदालोचनीयेन महाकविना विरचितस्य किरातार्जुनीयस्य महाकाव्यस्य नाम।

तथा तत्रैव योऽयमप्राचीनलेखे—"येनायोजि नवेऽश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म। स विजयतां रविकीर्त्तिः कविताश्रित-कालिदास-भारविकीर्त्तिः" इति षट्पञ्चाशदधिकपञ्चशततमे शकसंवत्सरे (५५६) राज्ञा पुलकेशिना प्रदत्ते ताम्रशासने उत्कीर्णं वचनम्। अत्र कालिदासेन सह भारवेर्नामोल्लेखः समुपलभ्यते। पूर्व्वोक्तयोर्दशलेखस्तु अष्टनवत्युत्तर-शकाब्दे उत्कीर्णो बभूव। अत एतदेवानुमीयते यत् खिस्ताब्दीय-सप्तमशतकारम्भेऽपि कालिदासस्येव भारवेः कीर्त्तिर्दिगन्तव्यापिनी आसीत्, न हि अल्पेन समयेन केषाञ्चित् कीर्त्तिकौमुदीधारा समस्तानां दिग्वधूनां मुखमाप्नोतीति।

खिस्ताब्दीयषष्ठशतकात् पूर्व्वतनो भारविरिति निर्व्विकल्पमनेने-नानुमानेन ज्याकविप्रभृतयः शार्म्मण्यदेशीयाः पाश्चात्यपण्डिताः भारवे-राविर्भावकालं खिस्तीयषष्ठशताब्दीमध्यभागात् पूर्व्वं निर्द्धारयन्ति। मत-मिदमस्माकमपि रोचते।

ये केचित् प्रत्नतत्त्वविदो भारविमाघयोः समकालवर्त्तित्वमुद्घोषयन्ति न तेषां साधीयान् पन्थाः, "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।" इत्यादरसिकवचनस्य एकान्ततो मूले एव भ्रमापातस्य अयुक्तत्वात्, श्लोकोऽयं अवश्यं कविताप्रकर्षानुधावनासमर्थेन नैषधादिगुणपक्षपात-दोषदूषितेन विरचितः। वयन्तु ब्रूमः—माघकविर्न अर्व्वाचीनः, किन्तु भारविस्ततोऽपि प्राचीन इति। माघकविर्भारविकृतं काव्यमनुकृत्य स्वीय-काव्यं रचितवान् इत्यत्रापि नास्ति सन्देहलेशावसरः। शिशुपालवधस्य प्रायेण प्रतिस्थानमिव भारवेरनुकारः संदृश्यते; तथाच प्रथमे सर्गे नारद-मुखेन प्रतिनायकस्य कृष्णविपक्षस्य शिशुपालस्य अवस्थावर्णनं तच्छ्रवणेन अनुस्मृतमहावैरस्य बलदेवस्य महदौद्धत्यं, तदुपशान्तये च उद्धवस्य शान्तभावेन नीतिगर्भवचनप्रपञ्चेन सान्त्वनं; भारवावपि प्रथमतो वनेचरः किरातस्य मुखेन प्रतिपक्षस्य दुर्य्योधनस्य अवस्थावर्णनं, तदनन्तरं अनुस्मृतवैरस्य भीमादेः समुत्तेजनपूर्णवाक्प्रपञ्चः, तत्सान्त्वनाय च शान्तभावेन युधिष्ठिरप्रमुखैः सान्त्वनं, इत्यादिकमारभ्य पर्य्यालोच्यमाने शेषपर्य्यन्ते उभयत्रैव सम्यक् परस्परसादृश्यमुपलभ्यते, अतएव यत् परकालीनः स माघः पूर्व्वकालीनस्य भारवेरनुकरणं चकारेति सुव्यवस्थितं, एवं यथा विषययोः साम्यं तथा श्लोकगतानां भावानामपि मिथस्तथा, यथा केवल-मेकस्य श्लोकस्य अपरः श्लोकः अनुवादकतामिवात्मनः प्रत्याययति, तत्र

आलोचनाविधौ केषाञ्चिदपि चेतसि अप्रतिभातं अतो न तद्विषये विस्तरः क्रियते ।

इदानीं कवेर्जन्मभूमिमधिकृत्य किञ्चिदालोचयामः । महाराष्ट्रदेशवास्तव्येन राजारामरामकृष्णभागवतपण्डितेन "मर्हाट्टां चासंबधानि चार उद्गार" इति नामधेये महाराष्ट्रभाषाग्रथितप्रबन्धे उट्टङ्कितं—भारविः स्वाविर्भावेन महाराष्ट्रप्रदेशं द्राविड़देशं वा भूषितवान् । 'उरसि शूलभृतः प्रहिता मुहुः, प्रतिहतिं ययुरर्जुनमुष्टयः । भृशरया इव सह्यमहीभृतः, पृथुनि रोधसि सिन्धुमहोर्म्मयः" । इति किरातार्जुनीयस्य अष्टादशसर्गस्थपञ्चमश्लोकसमालोचनेन स्थिरीक्रियते यत्—सह्यपर्व्वतमाला महाराष्ट्रदेशे विराजते, तत्रैव कवेर्जन्मभूमिरिति । मतमिदं सुनिपुणं विचार्य्य कृतः कटाक्षपातः श्रीमता महामहोपाध्यायेन दुर्गाप्रसादेन, यथा सह्याद्रिनामोल्लेखमात्रेण यदि तत्सन्निहितं किमपि स्थानं कवेर्जन्मभूमितया निर्द्दिश्येत, तदा दक्षिणदिक्प्रसिद्धानां मलयसह्यसुवेलादिपर्व्वतानां कावेरीगोदावरीताम्रपर्णीभीमावेनादिनदीनाञ्च वर्णयिता हरविजयकाव्यप्रणेता काश्मीररत्नाकरोऽपि किमिति न दक्षिणापथवासीति निर्णीयताम् ? अपिच विन्ध्यारण्यवर्णननिपुणः कविर्वाणोऽपि विन्ध्यवासी कश्चित् भिल्लो भवितुमर्हति । नहि कवयः स्वर्गपातालाद्यनधिगतलोकवर्णनचतुराः तत्तद्देशवासिनो भवन्ति, अपि तु मर्त्त्या एव । अतएव केवलं तामेव युक्तिमवलम्ब्य नास्य कवेः महाराष्ट्रीयता शक्यते व्यवस्थापयितुमिति ।

केचित्तु दक्षिणादिगेव प्रायेण पण्डितान् प्रसूते, अतः सुपण्डितो भारविस्तस्या एव दिशः प्रसव इति व्याचक्षते, तन्न समीचीनं, तथाभूतानामपि पण्डितप्रकर्षवतां कालिदासकह्लनादीनां दक्षिणदिग्जातत्वाभावात् पाण्डित्यरूपस्य च हेतोर्व्यभिचारात् । अतो नेयमपि युक्तिस्तन्निश्चयमनुकूलयति ।

अपरे ये च केचिद् विद्वांसः किरातार्जुनीये प्रभूतहिमवद्विभूतिवर्णनमवलोक्य हिमगिरिसन्निहितं कमपि जनपदं श्रीमतः कविवरस्यास्य निवासस्थानमिति समामनन्ति, विलसति अस्मिन्नेवानुमाने कथञ्चित् अस्माकमास्था, यतः अद्यापि विद्यते "सिकिम्" इत्यभिधेयस्य जनपदस्य उत्तरदिगुपान्ते इन्द्रकीलनामको हिमवदंशविशेषः, स्थानमिदं महाकविः स्वग्रन्थे सविस्तरं वर्णितवान् । तत्र उपत्यकायां अधित्यकायाञ्च अनार्य्याः किरातजातीयाः निवसन्ति, एतेषामेव पूर्व्वपुरुषाः लौकिककिरातवेशस्य विरूपाक्षस्य पक्षाश्रिताः सन्तः पार्थेन सह युयुत्सवः—इत्येतत् सर्व्वं समालोच्य वयन्तु ब्रूमः, यत्—कविशिरो-

मधिरय' उत्तरदिग्वासव्य एव, अपरिज्ञात-महिम्ना दूरस्थेन न केनापि तथा हिमवदैश्वर्य्यवर्णनचातुर्य्यं प्रकाशयितुं शक्यते। किम्बदन्ति-कापि मतमेतत् सप्रमाणीकरोति,—

यथा अध्ययनसमये गुरुगृहमधिवसतो गोचारणच्छलेन हिमालयोत्सङ्गदेशं परिभ्रमतस्तत्रत्यनैसर्गिकसौन्दर्य्यसन्दर्शनेन भारवेर्भारती-लीलाप्रकटनचातुरी स्फुरिताभूत्। ततश्च स महाभारतीय-वनपर्व्वस्थ-षड्विंशाध्यायादेकचत्वारिंशदध्यायपर्य्यन्तां घटनाबलीमवलम्ब्य विरच्य च प्रतिदिनमेकैकं श्लोकं भूर्ज्जपत्रे लिलेख। ततः समयेन तानेव श्लोकनिवहान् एकत्र संगृह्य किरातार्ज्जुनीयमिति नाम्ना प्रकाश्य जनसमाजे परां प्रतिष्ठामलभत। परञ्चैतस्य ग्रन्थस्य भारविरित्यपरमभिधानमपि "कवेर्व्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा" इत्यादि शास्त्रप्रमाणतः प्रचरतितराम्।

किरातार्ज्जुनीयं विना अस्य महाकवेर्नान्यत् किमपि काव्यादिकमस्माकं लोचनपथे मनोमार्गे वा पान्थायते, अयमेकमिदमेव काव्यं किरातार्ज्जुनीयं निर्म्माय महाकविसंज्ञया सुधीसमाजे प्रख्यातो जातः।

रामायणमहाभारतादिनिबद्धं वस्तुजातमवलम्ब्य ये कवयः काव्यं निर्म्मितवन्तः तेषु कालिदासभवभूतिभारविमाघश्रीहर्षभट्टनारायणादय एव उल्लेखयोग्याः, अपरेषां कवितावली सामाजिकानां मानसं तथा न समाकर्ष्टुं शक्नोति।

यद्यपि कविर्भारविः कविकुलशिरोमणिकालिदासभवभूतिवत् वाग्देवतायाः पवित्रचरणामृतं निपीय तादृशममरत्वमधिगन्तुं न शशाक, तथापि कठोरसाधनासन्तोषितायाः रूर्व्वलोकसमाराधनायास्तस्याः शुभाशीर्व्वादबलेन सुधीसमितौ कवित्वशक्तेः परां काष्ठां प्रदर्श्य सुमहतीमनन्यसुलभसम्माननामर्ज्जितवानिति यत् तत्र नास्ति केषाञ्चिद् वैमत्यम्। संसारेऽस्मिन् प्रत्येकमेव पदार्थस्य विशेषत्वं परिलक्ष्यते; नहि जायते पिकस्वरे शुकवाक्यभ्रान्तिः आनन्दाधायकत्वात् प्रत्येकं स्वरामृतमेव रसपिपासूनां ग्राह्यम्, कालिदासगुणमुग्धानां भवभूति-भारतीदृप्तचेतसां वा चेतांसि नूनं भारविकविता समाकर्ष्टुं शक्यते। ऋतूनां षण्णामेव समागमेन वत्सरस्य परिपूर्त्तिर्भवति, यथा तेषु ऋतुषु ऋतुराजो वसन्तः तथा कविमुख्येषु कालिदासः कविकुलशिरोमणिरिति मतं सर्व्वथा वितर्करहितं, किन्तु तथात्वेऽपि भारविभनितिर्न उपेक्षणीया। वसन्तशोभालोलुपानामपि नीलाम्बनिधिलावण्यपरिचायिनाम् श्यामलतरुवल्लीशोभासन्तानसमासक्तचित्तानामपि नावहेलनीयतां गन्तुमर्हति शारदेन्दुसौन्दर्य्यमनन्यसाधारणं वस्तु, प्रत्येकमेव कवीनां

काव्येषु भवति कापि विलक्षणता, यया तस्य कवेः स्वभावः सूक्ष्मं सूक्ष्मं तत्र तत्र उपगम्यते, यया च प्रत्येकमेव अनुरागातिरेकः सम एव सम्पद्यते काव्यरसरसिकानाम्, तत्तदत्र सुतरामसुलभमिति प्रस्तुतम्। अस्य भारविकवेः पापं प्रति अपकृष्टं कार्य्यं प्रति वीतस्पृहता आसीत् कर्त्तव्यं प्रति सत्कार्य्यं प्रति अनुच्छृङ्खलतां प्रति तस्य अनुरागः आसीत्। भारविरधिगतवान्—यत् तरलभाषया नृत्यमयच्छन्दसा वा गुरुगम्भीराणां विषयाणां उपदेशदानं नैव युज्यते, गम्भीरस्य समुद्रस्य वक्षसि यथा उत्तुङ्गतरङ्गावली परात्परं विच्छिन्नभावेन समुत्थाय सिन्धोर्गम्भीरतां आधिक्येन वर्द्धयति, भारविकवेर्गम्भीरा भारती भावनिवहस्य तथैव विच्छिन्नभावेन जिगीषावशेनेव काव्यस्य गाम्भीर्य्यं ततोऽपि वर्द्धितमकरोत्। अनुकरणप्रियतां भारविरति निकृष्टाममन्यत, स हि व्यासमन्तरेण नान्यस्य कस्यापि साहाय्यमाददे स्वीयकाव्यनिर्म्माणे, वाग्देवता तस्मै यावतीं शक्तिं प्रादात् तावतीमेव सम्बलतया गृहीत्वा काव्यं विनिर्म्माय गन्तव्यपथमियाय, परकीयं गौरवं आत्मीयतया मत्वा न श्लाघते स्म। तपस्यायामेकाग्रताव्यतिरेकतो न भवति कस्यापि कार्य्यस्य निःशेषतः सिद्धिरिति भारविः सम्यक् जानाति स्म तदेव तस्य काव्यस्य जीवितरूपम्। तस्य काव्यमालोच्य समाजः, समुन्नतः संयमो दृढप्रतिज्ञः कर्त्तव्यपरायणश्च भवतु, अवसन्ने च चेतसि जागर्त्तु भयानुत्साहः इत्येतावतीव तस्य वासना समवर्त्तत। अलङ्कारगौरवं भारविः न तथा श्लाघाकरममन्यत, अलङ्कारसौन्दर्य्येण कवित्वस्य सौन्दर्य्ये क्रियमाणे बहुष्वेव स्थलेषु कविता भावमाधुर्य्यादिपरिशून्येव व्यवतिष्ठते, प्राणहीनेव व्यवतिष्ठते, किन्तु वर्णनाप्रसङ्गे यदि कदाचित् सुसमञ्जसा अलङ्काराः उन्मेषं गताः, तत्र स कथमपि न बाधको जातः। तदीये काव्ये अलङ्काराणां गहनत्वविरहेऽपि तावद्भिरेव तस्य निपुणालङ्कारिकता प्रतीयते। अस्य च कृतेः किरातार्ज्जुनीयस्य नायकोऽर्ज्जुनः, स च नारायणानुगृहीत इति प्रतिद्वन्द्विशून्यः, तस्य उत्कर्षं साधयितुमेव भगवान् भूतभावनः प्रतिपक्षतया व्यवस्थापितः कविना, तथाचात्र मल्लिनाथस्य संग्रहश्लोको यथा—"नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः तस्योत्कर्षकृतेऽनुवर्ण्यचरितो दिव्यः किरातः पुनः। शृङ्गारादिरसोऽयमत्र विजयी वीरप्रधानो रसः, शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्"। यद्यपि शृङ्गारादयः केचिदङ्गरसाः बहुशोऽत्र प्रतिपादिताः तथापि तेषां प्रकृतस्य वीररसस्य अनपकर्षकतया नायकमाहात्म्यसमुद्भावकतया च न ते दोषमावहन्ति। मुख्यतया शान्तिप्रवणाः भारतीयाः सामाजिकाः शान्तिमयान् विषयानेव बहु समाद्रियन्ते। शान्तभावस्य सुशीतलच्छायामाश्रित्य यदि चिरं अवस्थानस्य,

सम्बन्धना स्यात् तदा तासुमुच्य न कदापि ते रसान्तरमनुभवितु-मीहन्ते। कालिदासः सुगृहीतमानवमानसतत्त्वो निखिलमेवेदमात्मना परिज्ञाय, तदुचितञ्च शृङ्गारादिरससम्बलितं वस्तुजातं निर्म्माय भारतवासिनां उपाजहार, परिहृतमिव सुमहतीमेव तैस्तैः कालिदासवस्तुभिः समधिजगाम भारतवर्षं। भवभूतिरपि प्रायेण तेनैव कालिदास-भावेनानुप्राणितप्राणः करुणरसं बहुधा परिचाय्य स्वकं काव्यजातं विनिर्ममे, येन "किमन्यथा रोदिति ग्रावा" इत्यपि जल्पनं तत्-काव्यसम्बन्धे प्रतिभाति। यत्र यत्र प्रयोजनं अवश्यमेव रसान्तराणा-मजायत तत्र तत्र अतिसङ्क्षेपतो निपुणभावेनैव तत्तद्रसान्तरं प्रतिपादयितुं प्रवृत्ते न तु निर्व्वाधम्। भारविस्तु एताभ्यामनाविद्धे पथि सञ्चरणपरायणः काव्यमन्यथैव सज्जयामास। स हि मुख्यभावेन वीर-रसमेव समुत्ते-जनबहुलं काव्यस्य जीवनतया व्यवस्थाप्य काव्यं निर्म्मितवान्, रसान्तराणि च तत्प्रभावेण तिरोहितानीव विदधे, यतः सर्व्वत्रैव समुपलभ्यते रसान्तरवर्णनाद्यवसरेषु स्वल्पतया आधिक्येन वा वीर-रसस्य सप्रकाश आभासः। कालिदासस्य कविता शारदी चन्द्रिकेव कुसुमसम्भारसम्भृता नवीना वल्लरीव निष्कलङ्कालङ्कारान् आदधाना रूप-सम्पदा सम्पादिताभिमाना तरुणीव स्वसौन्दर्य्येणैव स्वयमुन्मनस्का विह्वला समापतितेव मनोहारिणी च। भवभूतिकविता तु वर्षीय-सीव महिषी, अभयप्रदायिनी कात्यायनीव स्नेहसुधाप्रस्रवणभूता, करुणामयी जननीव शान्तिसम्पर्कमधुरा स्निग्धा च। भारविकविता तु सुगम्भीरसागरप्रतिमा, निराभरणा धूसरकान्तिः अक्षसूत्रमात्रसम्भृतकरा सन्न्यासिनीव, तमस्विनी निशीथिनीव गाम्भीर्य्यवती।

भारविकविताशरीरे शारदचन्द्रिकायाः स्निग्धविलेपनं नास्ति, नास्ति च सौदामिन्याः सुचिरचञ्चला कान्तिः, किन्तु धवलवसना संयमिनी ब्रह्म-चारिणीव सा अलौकिकतेजोगौरवेण सुप्रशस्ता। कालिदासो हि स्वाभा-विकेषु भावेषु एव यान् भावान् मधुरतया चमत्कारकारितया उपलक्षया-मास, येषां निबन्धेन लोकानां शान्तिप्रवणता वा वर्णनीयविषयस्य सौन्दर्य्यं वा स्वाभाविकता वा चिरमक्षुण्णपथमेवाश्रयति, तान् तानेव भावान् संगृह्य संगृह्य स्वीयकाव्ये निबबन्ध, न तु किञ्चिदस्वाभाविकं भव्यं वस्तु।

भवभूतिस्तु घटनामेव स्वेच्छया आत्मना वर्णनीयस्य विषयस्य अनु-कूलां विधाय तत्र सौन्दर्य्यधारां जनयामास, प्रकृतं वृत्तं यथा तथा वा अस्तु तदेव वृत्तं आत्मकल्पनानैपुण्येन विपरिवर्त्य तथा तथा काव्य-कलां विकाशयामास।

किन्तु भारविः वर्णनीयस्य विषयस्य लौकिकतां अलौकिकतां वा न विचारयति स्म, नापि शान्तिप्रवणानामिव मनोमोहनं भावमात्मनः काव्ये सन्निवेशयति स्म, येन दुर्बलाः सबलायन्ते, रोगोपहतचित्तोत्साहस्य चिरादिव सुमहानुत्साहः पुनरावर्त्तते, मृतस्यापि अभिभूतस्यापि उक्तकुलस्यापि चेतसि कोऽपि महानुत्साहः समभ्यर्चनीयो भावमहिमा च समुदेति, तथा तथैव आत्मनः काव्यकल्पनां असाधारणीं प्रवर्त्तयामास समुद्दीप्तेन भावकदम्बकेन सर्व्वथा अनुप्राणितः सः समुत्तेजनापूर्णमेव काव्यं करणीयतया सुष्ठु मेने। अतएव स्वीये काव्ये समुद्धतं भीमं समुद्धतभावप्रवक्तृतया द्रौपदीञ्च स्वनन्दिनीं तदुचितौजस्विवाक्प्रयोगचातुर्य्येण समुपन्यस्य प्रस्तुतवानात्मकृत्यं, सपूर्णताञ्च कृतवान् मनोरथस्य कविकुलललामो महाकविः भारविः। प्रथिता च कीर्त्तिकला दिगन्तेष्वस्य भीमस्य। उक्तिजातं प्रशस्तां राजनीतिमेवावलम्बते प्रतिपाद्यत्वेन, तथा हि नाम उक्तिपरम्परया विलीनतां व्रजति प्रायेण सर्व्वेषां हृदये सिद्धा भीमस्य स्वाभाविकोद्धतभावमात्रप्रवणता, तथाहि क इव सुतरां समुद्धतभावमात्रसमालम्बनः पुरुषः प्रतिपादयितुमर्हति "द्विषतामुदयः सुमेधसा, गुरुरस्वन्ततरः सुमर्षणः। न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः" इत्यादि, "अचिरेण महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः" इत्यादि, अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः। क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा" इत्यादि—यः स्वयं तथानीतिपूर्णतामात्मनो न लभते। अपिच नैपुण्यमिदमेव काव्यकलाकुशलस्य भारविकवेः यत् भीमस्य नीतिपूर्णापि वाक्यपरम्परा ईषत्प्रकाशिन समुद्धतभावनिवहेन अनुप्राणिता एव समुपतिष्ठते तत्काव्यमनुशीलयतां चेतसि, अतः प्रशंसनीयास्य निपुणता। अन्यत्रापि कविस्तमेव भावमुपजीव्य वाचमारचयामास यथा—'इति दर्शितविक्रियं सुतं, मरुतः कोपपरीतमानसं उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे" इत्यादि, अत्र भीमसेने दुष्टद्विरदसाम्यवर्णनया तथा भावः समभ्युपगम्यते। परत एव शान्तभावप्रवणो युधिष्ठिरः तद्वाचमुत्तरयितुं यथा यथा "सहसा विधीत न क्रियाम्, अविवेकः परमापदां पदम्। वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" इत्यादि नीतिबहुलां सान्त्वनावाचं प्रयुयुजे, तत्रापि कविकल्पना गरीयसी। कविर्नामयोग्यतामतिक्रम्य वक्तृमुखेन वाचं प्रवर्त्तयन् अस्वाभाविकताबोधसम्पादनतः प्रवक्तॄणां विपश्चिताम् शिक्षाकामुकानाञ्च अनवधेयवचनो भवति। कविरयं न तथा, जातश्च तेनैव प्रकर्षेण बालादारभ्य वृद्धपण्डितपर्य्यन्तेरस्य कवेः सुगभीरनीतिबहुलानां "सहसे" त्यादिक--

वितार्गा कस्य वयावसरे स्मरणीयतया सुप्रशस्तः। एतद्दृशमेव वस्तु भारविकवेः अनन्यकविसाधारणं, एतस्मादेव कारणादसौ "भारवेरर्थगौरव"मित्यादि वाचा 'नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभुज्यताम्' इत्यादि वाचा च प्रशस्यते काव्यानुशीलनपरायणै रणुमात्रमपि भावादिदोषमनुपेक्षमाणैः समालोचनायां सुगृहीतसम्मानैः। एतदेव चास्य काव्यमेकमेव निर्म्मितवतोऽपि महाकविसंज्ञालाभहेतुरिति।

भारविकृतस्य किरातार्ज्जुनीयस्य शरद्वर्णनात्मकं चतुर्थसर्गमनुकृत्य भट्टिकाव्यस्य द्वितीयः सर्गः किरातार्ज्जुनीयस्य द्वितीयं तृतीयञ्च सर्गमधिकृत्य भट्टिकाव्यस्य द्वादशः सर्गो निर्म्मितस्तत्कविना इति नातिनिपुणवीक्षणादेव प्रतिभाति, किरातस्य चतुर्थे सर्गे "समन्यरावल्गितपीवरस्तनौः" इत्यादि स्मारयति भट्टिकाव्यस्य "विवृत्तपार्श्वं रुचिराङ्गहारं" इत्यादि श्लोकं; किरातस्य "नुनोद तस्य स्थलपद्मिनीगत" इत्यादि श्लोकः, "सितारविन्दप्रचयेषु लीना" इत्यादि भट्टिकाव्यश्लोकश्च एकमेवानुभवं प्रमाणीकृत्य लिखितौ कविभ्यां, किरातस्य चतुर्थसर्गे निबद्धं "कृतावधानं जितबर्हिणध्वनौ" इत्यादि श्लोकमनुकृत्य भाषया च यत् "दत्तावधानं मधुलेहिगीतौ" इत्यादि निबन्धः, तत्र प्रायेण सर्व्वेषामेव ऐकमत्यम्। किराते द्वितीयस्य 'सहसा विदधीत न क्रियां' इत्यादि भट्टौ "प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यम्" सहसा कथञ्चित् समम्।

किराते "मतिमान् विनयप्रमाथिनः" इत्यादि भट्टिकाव्ये उपेक्षणीयैव परस्य वृद्धि" रित्यादि। किराते "समवृत्तिरुपैति मार्द्दवं, समये यश्च तनोति तिग्मतां" इत्यादि तदीयमेवानुभवमालम्ब्य भट्टिकारः "यदा विगृह्णन् न च सन्दधानः वृद्धिं क्षयं चानुगुणं प्रपश्येत्" इत्यादि प्राह।

तत्रैव निबद्धः प्रहस्तप्रमुखानां राक्षसानां दशास्यं प्रति वाक्प्रपञ्चः स्मारयति सुतरां भीमसेनस्य स्थलविशेषे द्रौपद्याश्च युधिष्ठिरं प्रति उक्तिजातम् उत्तेजनापूर्णं। विभीषणस्य तदनन्तरमेव रावणप्रबोधाय प्रयुक्तं वचनजातं स्मारयति आपातत एव समुद्धतं भीमं प्रति तेजस्विनीं द्रौपदीञ्च प्रति शान्तभावपूर्णस्य युधिष्ठिरस्य वाग् जातम्।

भारविनिर्म्मितकिरातार्ज्जुनीयस्य अश्वघोषकृतबुद्धचरितग्रन्थस्य अष्टमसर्गीयैः कतिपयैः श्लोकैः कुत्रचित् साम्यमुपलभ्यते, अलं वा तदालोच्य? दृश्यते तावदस्य महाभारतीयवनपर्व्वस्थ-सप्तविंश सर्गादिवस्तूनि समग्राणीव प्रायेण भवती भाषातश्च निबद्धानि कविना, केवलं नवीनमिदमेव यत् प्रथमतो वर्णिवेशधारिणः किरातस्य युधिष्ठिरेण हस्तिनापुरं प्रति प्रस्थापितस्य आगत्य दुर्य्योधनस्य राज्यवृत्तान्तवर्णनं अन्यत् सर्व्वमेव वस्तु प्रायेण अक्षुण्णं परिरक्ष्य कुत्रचित् वर्द्धितं कुत्र-

चिन्न संक्षेपः सम्पादितः कविमुख्येन ; अतो नास्य घटनानिर्म्माणपटुत्वं तथा कविजनोचितं स्तोकत्तु प्रवर्त्तामहे, परं भाषाया गाम्भीर्य्यादिकमेव अनन्य-कविसुलभं तस्य ; येन प्रत्यक्षतो दृश्यमानेऽपि महाभारतवस्तुनिवहानां निःशेषानुकरणे प्रकृष्टमहाकविवादेन तस्य पूजामारचयन्ति काव्यरस-रसिकाः महान्तः। अहो कवेरस्य गभीरा तत्त्वपूर्णा च वाक् "समुन्नयन् भूतिमनार्य्यसङ्गमाद् वरं विरोधोऽपि समं महात्मभिः" इति।

दुर्य्योधनः निकृष्टैः सह शकुनिप्रभृतिभिर्म्मैत्रीं विधाय यथा लाभ-वान् जातः, तदपेक्षया महात्मना युधिष्ठिरेण सह वैरमारचयन्नेव परम-लाभवान् जातः यतस्तस्य विजयसाधनाय प्रयोजनीयो जातः सुमहत्सु प्रशंसाकरेषु कर्म्मजातेषु पक्षपातः।

भारविकवेः किरातार्ज्जुनीयस्य नायिका राजनन्दिनी द्रौपदी, न कालिदासस्य कोमलताया एकः समाश्रयः शकुन्तला, वा भवभूतेः कारुण्यरसैकसमाश्रयभूता सीतादेवी, भारताधीश्वर्य्याः यथा यथा हृदयभावाः यथा यथा च व्यवहाराः उपयुज्यन्ते, तथा तथैव कविना कल्पितो द्रौपद्या अन्तःकरणमहिमा, तथा तथैव च समारचितस्तस्या उत्तेजनपूर्णो वाक्प्रपञ्चः। तस्य नायिका सम्पत्काले कुसुमपरिपेलवा, विपत्काले च समुत्तेजनपूर्णभावबहुला, विपक्षविताड़नाय स्वामिमन्यु-व्यवसायदीपकवाक्प्रयोगपटीयसी।

न खलु द्रौपदी दुर्य्योधनस्य राजकार्य्ये सुशृङ्खलां शृन्वती विपक्षो-न्नतिमसहमाना असूयापरवशा सती युधिष्ठिरस्य मन्युकरं वाक्प्रपञ्चं आरचितवती, किन्तु विपत्काले आत्मीयजनानां पुनरभ्युदयाय यथैव हितकारिण्याः विपदतिक्रमेण पुनरात्मीयजनानां अभ्युदयमवेक्षितुमे-कान्ततो रतिमत्याः रमण्याः वाचो युज्यन्ते, तथैव कृतवती, एवैव वाणी इन्धनीभूता ज्वलयामास शत्रुनिकार-सम्भूतं पाण्डूनां अनु-तापाग्निं, प्ररोचयामास तदुच्छित्तये राजानं तदनुगतांश्च भ्रातॄन्, तस्यैव परिणामः कृष्णद्वैपायनरूपसहकारिलाभतः क्रमेण अर्ज्जुनस्य दिव्यास्त्रलाभः तेनचास्त्रेण शत्रुपराभवः।

एवं क्रमेण काव्यरत्नेनानेन विजयते श्रीमान् कविकुलमुकुटो भारविः, यस्य वाग्विन्यासमतुलनीयमालोचयन्तो वयमद्य धन्याः, काव्यरसिकाः धन्याः, संस्कृतभारती च धन्या। काव्यरसिकाः दृष्टिं पातयन्तु भवन्तः सुमहदुद्देश्यं प्रति प्रकृतकाव्यस्य, अनुशीलयन्तश्च शिक्षन्तां कतिचित् सदुपदेशान्, शोधयन्तु च भूयः स्वर्गीयमाहात्म्येन क्षणभङ्गुरस्य दोषप्रधानस्य संसारस्य निखिलं भावजातमिति।

# किरातार्जुनीयस्थविषयाणां संक्षेपतो विवरणम् ।

प्रथम-सर्गे—द्वैतवने युधिष्ठिरसविधौ दौत्यनियुक्तस्य वनचरस्य समागमः, वनेचरेण दुर्य्योधनस्य राजनीतिनैपुण्यवर्णनम्, तस्य प्रस्थानम्, युधिष्ठिरं प्रति द्रौपद्या ओजस्विनी युद्धोद्दीपनी वाणी च ।

द्वितीय-सर्गे—युधिष्ठिरं प्रति भीमस्य ऊर्ज्जस्वलं समरपक्षपाति वाक्यं, भीमं प्रति युधिष्ठिरस्य शान्तिपूर्णं वचनजातं, पाण्डवसमीपे भगवतो व्यासस्य समागमः पाण्डवकृतो व्याससत्कारश्च ।

तृतीय-सर्गे—व्यासस्वरूपवर्णनम्, व्यासं प्रति युधिष्ठिरस्य सभक्ति-वाक्यम्, युधिष्ठिरं प्रति व्यासस्य नीतिगर्भमाश्वासपूर्णं वाक्यं, व्यासस्या-र्ज्जुनाय विद्यादानपूर्वकं तपस्यार्थमुपदेशः, मुनेः प्रस्थानम्, अर्जुन-समीपे यक्षसमागमः, अर्जुनस्य प्रस्थानोपक्रमः, भाव्यर्जुनविरहेण पाण्डवानां वैमनस्यम्, अर्जुनकृतद्रौपदीदर्शनम्, द्रौपद्या उद्दीपनोक्तिः, व्यासाज्ञप्तेन यक्षेण सहार्जुनस्य हिमालयपादविशेषमिन्द्रकीलं प्रति प्रस्थानञ्च ।

चतुर्थ सर्गे—शरत्-शोभावर्णनम्, अर्जुनस्य हिमाद्रिदर्शनञ्च ।

पञ्चम-सर्गे—हिमवतो वर्णनम्, अर्जुनस्य हिमाद्रिमूलप्राप्तिः, यक्षस्य प्रतिप्रस्थानञ्च ।

षष्ठ-सर्गे—इन्द्रकीले अर्जुनस्यारोहणादिवर्णनम्, तत्रार्जुनस्य तपश्चरणं, वनरक्षकमुखादिन्द्रस्य धनञ्जयकृततपस्याश्रवणम्, अर्जुनस्य तपोभङ्गाय गन्तव्यमित्यप्सरसां गणं प्रति शक्रनिदेशश्च ।

सप्तम-सर्गे—गन्धर्वैः सहाप्सरसामिन्द्रकीले सविलासगमनादिकथनं, तत्रागतानां तेषां शिबिरसन्निवेशादिवर्णनञ्च ।

अष्टम-सर्गे—गन्धर्वाणामप्सरसाञ्च कुसुमचयनादिविविधक्रीड़ावर्णनम् ।

नवम-सर्गे—सायंसमयवर्णनं, चन्द्रोदयवर्णनं, सुरतक्रीड़ावर्णनं, पानगोष्ठीवर्णनं, पुनरपि संक्षेपतः सुरतवर्णनं प्रभातवर्णनञ्च ।

दशम-सर्गे—पार्थप्रलोभनार्थमप्सरसामनेकविधा विलासाः, अर्जुनस्य तात्कालिकी अवस्था, वर्षादि ऋतुवर्णनम्, अर्जुनतपोविघ्नार्थमप्सरसां प्रयासः, तासां प्रयासवैफल्यञ्च ।

एकादश-सर्गे—अर्जुनाश्रमे विप्ररूपधारिणो वासवस्य समागमः, इन्द्रार्जुनयोः कथा, प्रत्यक्षमूर्त्तेरिन्द्रस्य पार्थं प्रति शिवाराधनो-पदेशश्च ।

द्वादशसर्गे—अर्जुनकृतस्य शिवाराधनम्, अर्जुनतपसातितप्तानां सिद्धतापसानां शिवसमीपे गमनं तत्तपोवर्णनञ्च, शिवकृतं तापसशान्तनमर्जुनस्य स्वरूपकथनञ्च, वराहमायया मूकदानवस्य धनञ्जयवधार्थं प्रयाणम्, सगणसैन्यस्य किरातवेशिनः शिवस्य मृगयाव्याजेनार्जुनाश्रमसमागमः।

त्रयोदशसर्गे—मूकदानवार्जुनयोरन्योन्यमवलोकनं, तद्दर्शनेनार्जुनस्य मनसि नानावितर्काः, शूकरशरीरिणं मूकं प्रति पार्थस्य शरक्षेपः, मूकदानववधः, पार्थसमीपे शिवदूतागमः, तदुक्तपार्थाधिक्षेपश्च।

चतुर्दशसर्गे—शिवदूतं प्रत्यर्जुनस्य जिगीषावचनं, तच्छ्रुत्वागतस्य शिवचरस्य वचनमाकर्ण्य गृहीतकिरातपतिवेशस्य शिवस्य सदेवगणसैन्यमर्जुनविजयार्थमागमनम्, शिवार्जुनयोर्युद्धवर्णनम्।

पञ्चदशसर्गे—चित्रयुद्धवर्णनम्।

षोड़शसर्गे—किरातवेशस्य शिवस्यानन्यसाधारणसमरकौशलसन्दर्शनेनार्जुनस्य मनसि वितर्काः, शिवेन सहार्जुनस्यास्त्रयुद्धवर्णनम्।

सप्तदशसर्गे—प्रथमतः शिवसेनया ततो भगवता सहार्जुनस्य युद्धम्।

अष्टादशसर्गे—अर्जुनस्य सत्त्वातिशयदर्शनेन शिवस्य प्रसादः, तत्रेन्द्रादिदेवानां समागमः, अर्जुनकृता भगवत्स्तुतिः, अर्जुनकृतं वरयाचनम्, पाशुपतास्त्रप्राप्तिः, इन्द्रादिदेवानामपि भगवदादेशेन वरदानपुरःसरं स्वस्वास्त्रप्रदानम्, कृतकार्य्यस्यार्जुनस्य युधिष्ठिरसमीपे समागमः, ग्रन्थसमाप्तिश्च।

---

## किरातार्जुनीय-सम्बन्धिनी पौराणिकी वार्त्ता।

"त्रिःसप्तकृत्वो जगतीपतीनां" इत्यादौ—

अथैकदा हैहयपतिः कार्त्तवीर्य्यस्तपोवीर्य्योर्ज्जितदेहस्य द्वितीयदहनमूर्त्तेर्जमदग्नेराश्रमपदमाससाद। मुनेरेकासीत् कामधेनुः। अतिथेयः स निःस्वो मुनीश्वरस्तदा तत्कामधेनुप्रभावेण प्रभूतबलवाहनस्य भूपतेर्यथायथमातिथ्यं कारयामास। ततस्तत्कामधेनुमाहात्म्यमवलोक्य लोभाकृष्टः कार्त्तवीर्य्यो जमदग्निसन्निधौ तां धेनुं प्रार्थयामास। किन्तु धेनुधनो मुनिर्न तावत् क्षत्रियाय तद्दानमङ्गीचकार। तेन क्रोधान्धः

अतबन्धु: स हैहयराजो जमदग्निं निहत्य धेनुमाजह्रे, परन्तु तत्पत्नीमपि त्रि:समत्वाल: प्रहृत्य आश्रमत: प्रस्थित:। अथान्तरे विदितवृत्तान्त: क्रोधेन कृतान्तोपम: परशुराम: पुष्करत: स्वगृहमागत्य दुर्मते: कार्त्तवीर्य्यस्य कृतकार्य्यमालोक्य 'पृथिवीं नि:क्षत्त्रां करोमी''ति प्रतिज्ञाय जननीप्रहारसंख्यया धरित्रीं त्रि:सप्तकृत्वो नि:क्षत्त्रामकरोत्। परन्तु स्यमन्तपर्य्यन्तके देशे तेन निहतक्षत्त्रियशोणितेन पञ्च सरांसि परिपूर्य्य तत्र पितरं तर्पयामास।

'वीर्य्यावधूत: स्म तदा विवेद' इत्यादौ—

पुराकिल काशीपतिरम्बाम्बिकाम्बालिकानामात्मजानामुद्वाहार्थं स्वयं स्वयंवर-सभामाह्वयामास। तत्र सर्वधनुष्मतामग्रणीर्भीष्मो निखिलनृपतीन् पराजित्य तिस्र: कन्या जग्राह। अथ स स्वपुरमागत्य यदा विचित्रवीर्य्येण सह ता विवाहयितुमुद्यतस्तदा शाल्वराजानमहमात्मनावृणव'' मित्यम्बामुखादश्रौषीत्, एवं च तां विनयेन शाल्वराजानं प्रति विससर्ज्ज। धर्म्मदर्शी शाल्वोऽपि तामवीर्य्यशुल्कतया प्रत्याख्यातवान्। अथ विधिविड़म्बिताया अम्बाया: प्रार्थनया भीष्मगुरु: परशुरामस्तद्ग्रहणाय भीष्मं बहुश: कथयामास। तत: शिष्योऽपि भीष्मो यदा गुरुवाक्यं नाङ्गीचकार, तदा जामदग्न्यस्तेन सह युयुध किन्तु समरेऽस्मिन् 'शिष्यादिच्छेत् पराजय' मिति वचनं जगति प्रचारयितुमेव परशुराम: शिष्यत: पराभवमवाप।

'निपुणमिति मूकदानव'' इत्यादौ—

पुरा किलेन्द्रकीलपर्वते तपस्यन्तमर्जुनमवलोक्य मूको नाम दानवस्तत् तप: सुरकार्य्यसिद्ध्यर्थमिति मत्वा वराहरूपमास्थाय तं व्यापादयितुमुद्यत:। अर्जुनोऽपि तं वीभत्सं वराहं लक्ष्यीकृत्य शरं मुमोच। इत्यन्तरे वराहमनुसरन् कोऽपि किरात: शरेण तं विव्याध। अथैकं लक्ष्यं प्रति द्वयो: शरनिक्षेपस्य मृगयाधर्म्मविरुद्धतया किरातार्जुनयो: परस्परयुद्धमभवत्। ततोऽर्जुनसमरकौशलेन ससन्तोष: किरातरूपी हरस्तस्मै पाशुपतास्त्रं ददाविति दिक्।

इति पौराणिकी कथा।

---

# किरातार्जुनीयावलम्बितो महाभारतीयकथानुक्रमः ।

पुरासन् हस्तिनापुरे सोमवंशीया नृपतयः। तेषामन्यतमतः कुरोः कौरववंशः प्रसिद्धिं गतः। सर्वथैव कुरुरेकः प्रशस्यतरो नरपतिराविरासीत्। तदन्वये शान्तदान्तगुणोपेतः शान्तनुर्नाम परमपूतचेता नरपतिः प्रादुर्बभूव—त्रिलोकपावनी गङ्गापि यमर्द्धाङ्गभाक्त्वे नाङ्गीचकार। शान्तनोरन्याप्येकासीत् सहधर्म्मिणी—सत्यवती नाम। तयोर्यथाक्रमं भागीरथ्या भीष्मः सत्यवतीतो विचित्रवीर्य्यश्चित्राङ्गदश्च जज्ञिरे। तेषामस्खलितप्रतिज्ञो भीष्मः सत्यपालनार्थं चिरकौमारः सन् राज्यं न जग्राह, अल्पायुष्कतयापूर्णयौवन एव चित्राङ्गदः शमनसदनमगात्, तेन हि कनीयानपि विचित्रवीर्य्यो राज्याधिकारमवाप। स काशीराजात्मजामम्बिकामम्बालिकाञ्च परिणयन्नपि अपुत्रकः परेतपुरं प्रविवेश। ततस्तत्क्षेत्रयोर्महर्षिर्व्यासो यथाक्रमं धृतराष्ट्रपाण्डुनामानौ द्वौ पुत्रावुत्पादयामास, तयोर्ज्येष्ठो धृतराष्ट्रः कनिष्ठः पाण्डुरिति। व्यासवीर्य्येण तदा दासीतो विदुरः समजनीति शास्त्रीया कथा श्रूयते। यातु तावद् ज्येष्ठोऽपि धृतराष्ट्रो जन्मान्धतया राज्यं न प्राप, कनिष्ठः पाण्डुरेव पृथ्वीपतिः अभूत्। पाण्डोर्द्वे पत्न्यौ—कुन्ती, माद्री च। तयोः कुन्तीतो युधिष्ठिरभीमार्जुनाः माद्रीतो नकुलसहदेवौ—एते पाण्डोः पञ्च पुत्राः सञ्जाताः, ते हि पाण्डोरपत्यतया पाण्डवसंज्ञया प्रख्यातवन्तः। कुन्तीतः कन्यकावस्थायां सूर्य्यसम्पर्केण कर्णो नामाप्यपरः पुत्रो जज्ञे स कानीन इति शास्त्रप्रसिद्धिः। धृतराष्ट्रस्य पत्नी गान्धारी, तस्याः दुर्य्योधन-दुःशासनप्रभृतयः शतपुत्राः सञ्जज्ञिरे ते च धार्त्तराष्ट्राः पूर्वपुरुषस्य कुरोर्नामानुसारतः कौरवसंज्ञामभजन्त।

अथ शापवशादकाले कालनिलयं गतवति पाण्डौ धृतराष्ट्रः पाण्डवानपत्यनिर्विशेषं पालयामास। एते कौरवाः पाण्डवाश्च सर्व्वे एव प्रभूतबलशालिनस्तथापि तेषामन्तिके कुन्तीतनयं युधिष्ठिरमेकमनन्यसाधारणं धर्म्मशीलं ज्ञात्वा धृतराष्ट्रस्तमेव राज्येऽभिषेक्तुमभिललाष, किन्तु हिंसापरतन्त्रः क्रूरमतिर्दुर्य्योधनो जनकाभिप्रायमवज्ञाय स्वमातुलशकुनिमन्त्रणया वारणावतनगर्य्यां जतुगृहं निर्म्माय कौशलेन पाण्डवान् तत्र प्रेरयामास। अथ धर्म्ममात्रसहायाः पाण्डवास्तदा विदुरमुखतस्ताद्दशीं दुर्मन्त्रणां विदित्वा स्वयमेवानलेन तज्जतुनिलयं दग्ध्वा ततः प्रस्थिताः पाण्डवाः प्रेतपुरं गता इति मनसि निर्द्धार्य्य दुर्य्योधनो निःशङ्कमना बभूव। पाण्डवा अपि पुनर्दुर्य्योधनाक्रमणाशङ्कया छद्मवेशिनो यत्र तत्र परिभ्रमन्तः क्रमेण द्रौपदीस्वयंवरसभामासेदुः, तत्र अर्जुनः पञ्चालपतेरङ्गीकृतं मत्स्यलक्ष्य भित्त्वा द्रौपदीं लभते स्म ततो मातुराज्ञया पाण्डवाः सर्वएव भ्रातरस्तामेकां द्रौपदीं पत्नीत्वेनाङ्गीचक्रुः। ततो

विवाहान्ते स्वपुरगच्छतां पाण्डवानां प्रार्थनया धृतराष्ट्रः स्वराज्यं द्विधा विभज्य आत्मजाय हस्तिनापुरम् युधिष्ठिराय च इन्द्रप्रस्थं नाम नगरं ददौ।

अथानन्तरमपि पापमतिर्दुर्य्योधनः स्वराज्यमनिष्कण्टकं मन्यमानः शकुनिकुमन्त्रणया पाशकक्रीड़ार्थं युधिष्ठिरमाह्वयामास, धर्म्ममूर्त्तिरपि युधिष्ठिरो दैवविड़म्बित इव व्यसनदोषमनालोचयन् सह कौरवैस्त्रिक्रीड़ क्रमेणानया कपटक्रीड़या पराभवमवाप, परन्त पाशकपणानुसारेण त्रयोदशवर्षं वनवासमङ्गीचकार च। एषु द्वादशवर्षं यथेच्छदेशावस्थितिरेकमज्ञातवनवास इति। अथ सत्यप्रतिज्ञेन राज्ञा भ्रातृपत्नीमात्रसहायेन स्वराष्ट्रं परित्यज्य प्रथमं दीनवेशेन द्वैतवनमासादितम्। इत एव कवेर्वर्णनारम्भः, यत्—"युधिष्ठिरं द्वैतवने वनेचर" इति।

## कविवर्णितस्थानानां संक्षिप्तः परिचयः।

द्वैतवनम्—वनमिदं शोकमोहविरहितम्, अपि तु सरस्वतीतीरवर्त्तिकुरुक्षेत्रसन्निहितं कतमदपि स्थानमिति देशकोविदा वदन्ति। अस्य खलु द्वैतकाननस्य काम्यकवनमित्यपरमभिधानं दृश्यते, तन्नामान्तरकारणानुसन्धाने मनसि समापतति यत्—कुरुक्षेत्रसन्निहितः प्रदेशस्तावत् प्रायशः काञ्चनमयः तत्काननमयप्रदेशस्य एकांशः काम्यकमपरो द्वैतमिति। बहुगवेषणयापि न तावदलमस्य वर्त्तमानं नाम समवधारयितुमितुग्रदासीना वयन्तत्र।

खाण्डववनम्।—वनमिदमासीदिन्द्रप्रस्थसन्निधाविति महाभारते महर्षिणा व्यासेन बाहुल्यं वर्णितम्। अस्य साम्प्रतिकं नाम मध्यप्रदेशान्तर्गतनिमार इति। यादा कृष्णसहायः पार्थः पावकप्रार्थनया वनमिदं ददाह, तदा खाण्डवरक्षार्थमाखण्डलः सहार्ज्जुनेन युयुधे किन्तु पावकात् प्राप्तगाण्डीवः प्रभूतभुजवीर्य्योर्ज्जुनः सुरराजं पराजित्य जातवेदसः सुमहतीं तृप्तिमापादयामास तेन हि पावकः पार्थायाग्नेयास्त्रमक्षयतूणीरादिकमपि ददाविति दिक्।

हिमालयः।—यः खलु पृथिव्या मानदण्डरूपेण विराजते, तस्यासीममहिम्नो हिमालयस्य सीमानिर्देशविधौ महाकवेः कालिदासस्य श्लोक एव बहुलतया प्रामाणिक प्रतिभाति। यदुक्तं कविना—"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥" इति।

इन्द्रकीलपर्व्वतः।—स तु हिमवद्देशविशेषः। अस्याधुनिकं नाम "सिकिम" इत्यस्माभिरसकृदुक्तं ग्रन्थभूमिकायाम्।

## किरातार्जुनीयश्लोकानामकारादिवर्णक्रमेण

# सूचीपत्रम् ।

इति किरातार्ज्जुनीयस्थ-श्लोकानां सूचीपत्रं समाप्तम्

# किरातार्जुनीयम्।

——:(o):——

## प्रथमः सर्गः।

—:०:—

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः॥ १॥

अन्वयः—(युधिष्ठिरः) कुरूणाम् अधिपस्य श्रियः पालनीं प्रजासु वृत्तिं वेदितुम् यम् (वनेचरम्) अयुङ्क्त, वर्णिलिङ्गी स वनेचरः, विदितः (सन्) द्वैतवने युधिष्ठिरं समाययौ। वाच्यपरिवर्त्तनम्—यः अयुज्यत, वर्णिलिङ्गिना तेन वनेचरेण युधिष्ठिरः समाययौ। अन्यत् सर्वं पदं तुल्यमेव, एवं सर्वत्र ज्ञेयम्। १

अथ तत्रभवान् भारविनामा कविः "काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये, कान्तासम्मिततयोपदेशयुजे॥" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्य अनेकश्रेयःसाधनताम्, "काव्यालापांश्च वर्ज्जयेत्" इति निषेधशास्त्रस्य असत्काव्यविषयताञ्च पश्यन् किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन् कथामुपक्षिपति—श्रिय इति। आदितः श्रीशब्दप्रयोगाद् वर्णगणादिशुद्धिः अत्र उपयुज्यते। तदुक्तम्—"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा" इति। कुरूणां निवासाः कुरवो जनपदाः। "तस्य निवासः" इत्यण्प्रत्ययः। "जनपदे लुप्"। तेषामधिपस्य दुर्य्योधनस्य सम्बन्धिनीम्। शेषे षष्ठी। श्रियो राज्यलक्ष्म्याः। "कर्त्तृकर्म्मणोः कृति" इति कर्म्मणि षष्ठी। पाल्यतेऽनयेति पालनी, तां प्रतिष्ठापिकामित्यर्थः। प्रजारागमूलत्वात् सम्पद इति भावः। "करणाधिकरणयोश्च" इति सूत्रेण अत्र करणे ल्युट्। "टिड्ढाणञ्" इत्यादिना ङीप्। प्रजासु जनेषु विषये। "प्रजा स्यात् सन्ततौ जने" इत्यमरः। वृत्तिं व्यवहारं वेदितुं यं वनेचरम् अयुङ्क्त नियुक्तवान्। वर्णः प्रशस्ति-

रस्यास्तीति वर्णी ब्रह्मचारी । तदुक्तम्—“स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्” ॥ एतदष्टविधमैथुनाभावः प्रशस्तिः । “वर्णाद्ब्रह्मचारिणि” इतीनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी ब्रह्मचारिवेशवानित्यर्थः । स नियुक्तः, वने चरतीति वनेचरः किरातः । “भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः” इत्यमरः । “चरेष्टः” इति टप्रत्ययः । “तत्पुरुषे कृति बहुलम्” इत्यलुक् । विदितं वेदनमस्यास्तीति विदितः, परवृत्तान्तज्ञानवान् इत्यर्थः । “अर्श आदिभ्योऽच्” इत्यच्प्रत्ययः । अथवा कर्त्तरि कर्मधर्मोपचारात् विदितवृत्तान्तो विदित इत्युच्यते । उभयत्रापि “पीता गावः” “भुक्ता ब्राह्मणाः” “विभक्ता भ्रातरः” इत्यादिवत् साधुत्वं, न तु कर्त्तरि क्तः । सकर्म्मकेभ्यस्तस्य विधानाभावात् । अतएव भाष्यकारः—“अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः, भुक्तमेषामस्तीति भुक्ताः, इति सर्वत्र । अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः पीतोदकाः पीता भुक्तान्ना भुक्ता इति ।” अत्र लोपशब्दार्थमाह कैयटः—“गतार्थप्रयोग एव लोपोऽभिमतः । “विभक्ता भ्रातरः” इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्य्यते । “पीता गावः” इत्यत्रापुदकस्य पीतत्वं गोषु आरोप्यते । “भुक्ता ब्राह्मणाः” इत्यत्र “अन्नस्य भुक्तत्वं ब्राह्मणेषु उपचर्य्यते” इति । तद्वदत्रापि वृत्तान्तगतं विदितत्वं वेदितरि वनेचरे उपचर्य्यते । एतेन “वनायपीतप्रतिबद्धवत्साम्” इति “पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या” एवमादयो व्याख्याताः । अथवा विदितो विदितवान् सकर्म्मकादप्यविवक्षिते कर्म्मणि कर्त्तरि क्तः । “आशितः कर्त्ता” इत्यादौ यथाहुः—“धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया” इति । प्रतीहारादिना ज्ञापित इति वा । द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद्द्वीतं द्वीतमेव द्वैतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादिरहिते इत्यर्थः, युधि रणे स्थिरं युधिष्ठिरं धर्म्मराजम् । “हलन्तात् सप्तम्याः संज्ञायाम्” इत्यलुक् । “गवियुधिभ्यां स्थिरः” इति षत्वम् । समाययौ सम्प्राप्तः । अत्र “वने वनेचरः” इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकधैव आवृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन् सर्गे प्रायो वंशस्थं वृत्तम्, तस्य लक्षणम्—“जतौ तु वंशस्थमुदीरितं जरौ” इति ॥ १ ॥

১। যাহা রাজলক্ষ্মী-রক্ষার প্রধান কারণ, প্রজাবর্গের প্রতি কুরুরাজ দুর্য্যোধনের সেই ব্যবহার অবগতির নিমিত্ত (ধর্ম্মনন্দন যুধিষ্ঠির) যে বনেচরকে নিযুক্ত করিয়াছিলেন, ব্রহ্মচারি-বেশধারী সেই বনেচর নিখিলতত্ত্ব অবগত হইয়া দ্বৈতবনে যুধিষ্ঠিরসমীপে প্রত্যাগমন করিল।

कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २ ॥

द्विषां विघाताय विधातुमिच्छतो-
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्य्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥

अन्वयः । कृतप्रणामस्य सपत्नेन जितां महीं महीभुजे निवेदयिष्यतः तस्य मनो न विव्यथे, हि हितैषिणः मृषा प्रियं प्रवक्तुं न इच्छन्ति । वाच्य—मनसा विव्यथे । हितैषिभिः इष्यते । २

अन्वयः । सः रहसि द्विषां विघाताय विधातुमिच्छतः भूभृतः अनुज्ञाम् अधिगम्य सौष्ठवौदार्य्यविशेषशालिनीं विनिश्चितार्थाम् इति वाचम् आददे । वाच्य—तेन···शालिनी विनिश्चितार्था वाक् आददे । ३

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—कृतप्रणामस्येति । कृतप्रणामस्य तत्कालोचितत्वात् कृतनमस्कारस्य सपत्नेन रिपुणा दुर्य्योधनेन। "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः । जितां स्वाधीनीकृतां महीं महीभुजे युधिष्ठिराय, क्रियाग्रहणात् सम्प्रदानत्वम् । निवेदयिष्यतः ज्ञापयिष्यतः । "लृटः सद्वा" इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः । "व्यथ भयचलनयोः" इति व्यथधातोर्लिट् । उक्तमर्थमर्थान्तरोपन्यासेन समर्थयते—न हीति । हि यस्मात्, हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति । अन्यथा कार्य्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः । "अमौल्यममान्द्यममृषाभाषित्वमभूरहकत्वं चेति चारगुणाः" इति नीतिवाक्यामृते ॥२॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञायां न दुष्यतीत्याशयेनाह—द्विषामिति । रहसि एकान्ते सः वनेचरः द्विषां शत्रूणाम्, कर्म्मणि षष्ठी । विघाताय द्विषो विहन्तुमित्यर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । "भाववचनाच्च" इति तुमर्थे घञ् प्रत्ययः । अत्र

२। বসুধাপতি যুধিষ্ঠিরের নিকট 'শত্রু (দুর্য্যোধন) কর্ত্তৃক ভূমণ্ডল আয়ত্তীকৃত হইয়াছে' এই অপ্রিয় বাণী নিবেদন করিতে প্রণত বনেচরের হৃদয় ব্যথিত হইল না। কেননা, প্রভুর প্রিয়কারীরা কদাচ প্রিয়মিথ্যা কথা কহিতে অভিলাষ করেন না।

क्रियासु युक्तैर्नृप चारचक्षुषः
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

अन्वयः । ( हे ) नृप ! क्रियासु युक्तैः अनुजीविभिः चारचक्षुषः प्रभवः वञ्चनीयाः न भवन्ति । अतः साधु, असाधु वा ( मदुक्तम् ) क्षन्तुम् अर्हसि । हितं मनोहारि च वचः दुर्लभम् । वाच्य—युक्ताः अनुजीविनः प्रभून् न वञ्चयेयुः । अर्हसे हितेन मनोहारिणा च वचसा दुर्लभेन भूयते । ४

तादर्थ्ये चतुर्थीमपि न दोषः । तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते । विधातुं व्यापारं कर्त्तुमिच्छतः । "समानकर्त्तृकेषु तुमुन्" द्विषो विहन्तुमुद्युञ्जमानस्य[जान]स्येत्यर्थः । अतएव भूभृता युधिष्ठिरस्य अनुज्ञामधिगम्य । सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम् । सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः । उदारस्य भाव औदार्य्यमर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्य्ये । अत्र औदार्य्यशब्दस्याजाद्यदन्तत्वेऽपि "लक्षणहेत्वोः क्रियायाः" इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतेन पूर्वनिपातशास्त्रस्य अनित्यत्वज्ञापनान्न पूर्वनिपातः । उक्तञ्च काशिकायाम्—"अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्" इति । ते एव विशेषः, तयोर्वा विशेषः । तेन शालते शोभत इति सौष्ठवौदार्य्यविशेषशालिनी तां, ताच्छील्ये णिनिः । विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् उवाच इत्यर्थः ॥ ३ ॥

प्रथमं तावदप्रियनिवेदकमात्मानं प्रति अक्षोभं याचते—क्रियास्विति । हे नृप ! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैः अनुजीविभिर्भृत्यैः चारादिभिरित्यर्थः, चरन्तीति चराः पचाद्यच् । त एव चाराः, चरेः पचाद्यजन्तात् प्रज्ञादित्वादण्प्रत्ययः । त एव चक्षूंषि येषां ते चारचक्षुषः । "स्वपरमण्डलकार्य्याकार्य्यविलोकने चाराश्चक्षूंषि क्षितिपतीनाम्" इति नीतिवाक्यामृते । तदुक्तम्—"गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति पण्डिताः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" इति । प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः, सत्यमेव वक्तव्या इत्यर्थः । चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इति भावः । अतोऽप्रतार्य्यत्वाद्धेतोः असाधु

৩। তথাপি প্রিয়পাত্রের প্রতি কটু নিষ্ঠুর ভাষণ সুষ্ঠু নহে ; ইহা মনে করিয়া বনেচর শত্রুবিনাশে অভিলাষী রাজা যুধিষ্ঠিরের অনুজ্ঞাগ্রহণপূর্ব্বক যাহা সৌষ্ঠব ও বিশেষতঃ ঔদার্য্যযুক্ত এবং প্রমাণ দ্বারা যাহার অর্থ নির্ণীত হইয়াছে, নির্জ্জনে এইরূপ বাক্য বলিতে লাগিল।

स किंसखा साधु न शास्ति योऽधिपं
हितान्न यः संशृणुते स किम्प्रभुः।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः॥ ५ ॥

अन्वयः। यः अधिपं साधु न शास्ति, सः किंसखा। यः हितात् न संशृणुते सः किम्प्रभुः। हि नृपेषु अमात्येषु च सदा अनुकूलेषु (सत्सु) सर्वसम्पदः रतिं कुर्वते। वाच्य—येन अधिपः न शिष्यते। तेन किंसख्या (भूयते), येन न संश्रूयते, तेन किम्प्रभुणा भूयते। सर्वसम्पद्भिः रतिः क्रियते। ५

अप्रियं, साधु प्रियं वा, मदुक्तमिति शेषः, वाशब्दोऽप्यर्थे। क्षन्तुं सोढुमर्हसि, कुतः, हितं पथ्यं मनोहारि प्रियञ्च वचो दुर्लभम्। अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः॥ ४ ॥

तर्हि तूष्णीम्भाव एव वरमित्याशङ्क्याह—स इति। यः सुखा अमात्यादिः अधिपं स्वामिनं साधु हितं न शास्ति न उपदिशति। "ब्रुविशासि:" इत्यादिना शासेर्दुहादिपाठाद्द्विकर्म्मकत्वम्। स हितानुपदेष्टा, कुत्सितः सखा किंसखा दुर्मन्त्रीत्यर्थः। "किमः क्षेपे" इति समासान्तप्रतिषेधः। तथा यः प्रभुः निग्रहानुग्रहसमर्थः स्वामी हितात् आप्तजनात् हितोपदेष्टुः सकाशात्। "आख्यातोपयोगे" इत्यपादानत्वात् पञ्चमी। न संशृणुते न शृणोति हितमिति शेषः। "समो गम्यृच्छि" इत्यादिना सम्पूर्वाच्छृणोतेरकर्म्मकत्वादात्मनेपदमकर्म्मकत्वं वैवक्षिकम्। स हितस्याश्रोता [ 'हितमश्रोता' इति च पाठो दृश्यते ] प्रभुः किंप्रभुः कुत्सितस्वामी। पूर्ववत् समासः। सर्वथा सचिवेन वक्तव्यं श्रोतव्यं च स्वामिना। एवञ्च राजमन्त्रिणोः ऐकमत्यं स्यादित्यर्थः। ऐकमत्यस्य फलमाह—सदेति। हि यस्मात् नृपेषु स्वामिषु अमा सह भवा अमात्यास्तेषु च। "अव्ययात्त्यप्"। अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते कुर्वन्ति, न जातु जहतीत्यर्थः अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः। अत्रैवं राजमन्त्रिणोर्हितानुपदेश-तदश्रवणनिन्दासामर्थ्यसिद्धैरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्य्येण समर्थनात् कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। तदुक्तम्—"सामान्यविशेषकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" इति॥ ५ ॥

৪। বনেচর বলিল,—মহারাজ! চরই যাঁহাদের চক্ষু, সেইরূপ প্রভুগণকে বঞ্চিত করা কার্য্যে নিযুক্ত ভৃত্যদিগের কদাচ উচিত নহে। অতএব আমি প্রিয় বা অপ্রিয় যাহাই বলি না কেন, আমাকে ক্ষমা করিবেন; কেননা, হিতকর অথচ শ্রুতিমধুর বাক্য দুর্লভ।

৫। যে সচিব স্বামীর প্রতি সাধু উপদেশ করেন না, তিনি দুঃসচিব; আবার যে প্রভু

निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनां चरितं क्व जन्तवः।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

अन्वयः। निसर्गदुर्बोधम् भूपतीनां चरितम् क्व, अबोधविक्लवाः जन्तवः क्व। (तथापि) निगूढतत्त्वं विद्विषां नयवर्त्म मया यत् अवेदि, अयं तव अनुभावः। वाच्य—निसर्गदुर्बोधेन चरितेन, अबोधविक्लवैः जन्तुभिः (भूयते)। अहं अवेदिषम्, अनेन अनुभावेन (भूयते)। ६

अन्वयः। (सः) सुयोधनः नृपासनस्थः अपि वनाधिवासिनः भवतः पराभवम् विशङ्कमानः दुरोदरच्छद्म-

सम्प्रति स्वाहङ्कारं परिहरति—निसर्गेति। निसर्गदुर्बोधं स्वभावदुर्ग्रहम्। "ईषद्‌ः" इत्यादिना खल्प्रत्ययः। भूपतीनां चरितं क्व? अबोधविक्लवा अज्ञानोपहता जन्तवः, मादृशाः पामरजना इत्यर्थः, क्व, नोभयं सङ्घटत इत्यर्थः। तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोगः, ("सन्धिविग्रहयानानि संस्थाप्यासनमेव च। द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम्" इत्यादिरूपो यत् मया अवेदि ज्ञातमिति यावत्। विदेः कर्मणि लुङ्। अयम् इदं वेदनमित्यर्थः, विधेयप्राधान्यात् पुंलिङ्गनिर्देशः। तव अनुभावः सामर्थ्यम्। अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः। न तूपसृष्टात् घञ्प्रत्ययः। "श्रिणीभुवोऽनुपसर्गे" इत्यनुपसर्गाद्भवतेर्धातोर्घञ्विधानात्। अतएव काशिकायाम्—"कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमास" इति। दोषपरिहारो सम्यग् ज्ञात्वैव विज्ञापयामि; न तु वृथा कर्णकठोरं प्रलपामि इत्याशयः ॥ ६ ॥

হিতকারী মন্ত্রীর বাক্য গ্রহণ করেন না, তিনিও কুৎসিত প্রভু। নৃপ ও অমাত্যবর্গ পরস্পর অনুরক্ত হইলেই অখিল সমৃদ্ধি অনুরাগসহকারে বৃদ্ধিপ্রাপ্ত হইয়া থাকে।

৬। কোথায় সেই স্বাভাবিক-দুর্জ্ঞেয় ভূপতিচরিত, আর কোথায় এই অজ্ঞানাবৃত মাদৃশ পামর প্রাণী! তথাপি আমি যে শত্রুগণের নিগূঢ় তত্ত্ব নীতি-রীতি জানিতে পারিয়াছি, ইহা আপনারই মহিমা।

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्य्यसङ्गमात्-
वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥

जितां जगतीं नयेन जेतुं समीहते । वाच्य—सुयोधनेन नृपासनस्थेन अपि विशङ्कमानेन दुरोदर-च्छद्मजिता मही समीह्यते । ७

अन्वयः । तथापि जिह्मः सः भवज्जिगीषया गुणसम्पदा शुभ्रं यशः तनोति । भूतिं समुन्नयन् महात्मभिः समं विरोधः अपि अनार्य्यसङ्गमात् वरम् । वाच्य—जिह्मेन तेन यशः तन्यते । समुन्नयता विरोधेन वरेण ( भूयते ) । ८

सम्प्रति यदुक्तव्यं तदाह—विशङ्कमान इति । सुखेन युध्यते स सुयोधनः । "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः" इति युधे-र्युच् । नृपासनस्थः सिंहासनस्थोऽपि वनमधिवसतीति वनाधिवासिनो वनस्थात् राज्यभ्रष्टादपीत्यर्थः । भवतस्त्वत्तः पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाणः सन्, दुष्टमुदरमस्येति दुरोदरं द्यूतम्, पृषोदरादित्वात् साधु । "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः । तस्य छद्मना मिषेण जितां लब्धां दुर्य्याज्जितां जगतीं महीम् । "जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः" इति वैजयन्ती । नयेन नीत्या जेतुं वशीकर्त्तुं समीहते व्याप्रियते, न तूदास्ते इत्यर्थः । बलवत्स्वामिकम् अविशुद्धागमं च धनं भुञ्जानस्य कुतो मनःसमाधिरिति भावः । अत्र "दुरोदरच्छद्मजिताम्" इति विशेषणद्वारेण पदार्थं प्रति हेतुत्वेनोपन्यासाद्द्वितीयकाव्यलिङ्गमलङ्कारः । तदुक्तम्—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ ७ ॥

"नयेन जेतुं जगतीं समीहते" इत्युक्तम्, तत्प्रकारमाह—तथापीति । तथापि साशङ्कोऽपि जिह्मो वक्रः वञ्चक इति यावत् । सः दुर्य्योधनः भवज्जिगीषया गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः । "हेतौ" इति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणगरिम्णा करणेन शुभ्रं यशस्तनोति । स खलो गुणलोभनीयां त्वत्सम्पदमात्मसात् कर्त्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनः सताऽपि सज्जनविरोधो महान् दोष इत्याशङ्क्य सोऽपि सत्संसर्गलाभे नीचसङ्गमाद्वरमुत्कर्षावहत्वादित्याह—समिति । तथाहि भूतिं समुन्नयन् उत्कर्षमापादयन् । "लटः शतृशानचौ"

१ । ( महाराज ! ) আপনি রাজ্যভ্রষ্ট বনবাসী, আর দুর্য্যোধন সিংহাসনে সমাসীন, তথাপি তিনি আপনার নিকট পরাভব আশঙ্কা করিয়া কপট পাশক-ক্রীড়ায় জিত ভূমণ্ডলীকে নীতিমার্গে আয়ত্ত করিতে চেষ্টা করিতেছেন ।

क्रतारिषड्वर्गजयेन मानवी-
मगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

अन्वयः। कृतारिषड्वर्गजयेन अगम्यरूपां मानवीं पदवीं प्रपित्सुना अस्ततन्द्रिणा तेन ( दुर्योधनेन ) नक्तन्दिवं विभज्य नयेन पौरुषं वितन्यते। वाच्य—कृतारिषड्वर्गजयः, मानवीं पदवीं प्रपित्सुः, अस्ततन्द्रिः सः तनोति। ९

इत्यादिना शत्प्रत्ययः। पुनर्लङ्ग्रहणसामर्थ्यात् प्रथमासामानाधिकरण्यम्। महात्मभिः समं सहेत्यर्थः, "साकं सत्रा समं सह" इत्यमरः। अनार्य्यसङ्गमात् दुर्ज्जनसंसर्गात् "पञ्चमी विभक्तेः" इति पञ्चमी। विरोधोऽपि वरं मनाक् प्रियः। "देवाद्‌वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः। अत्र मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य "भूतिं समुन्नयन्" इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात् समाप्तपुनरात्ताख्यानदोषापत्तिः। तदुक्तं काव्यप्रकाशे—"समाप्तपुनरादानात् समाप्तपुनरात्तकम्" इति। न च वाक्यान्तरमेतत् येनोक्तदोषपरिहारः स्यात्। अर्थान्तरन्यासोऽलङ्कारः। स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवरत्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥

ननु "कातर्य्यं केवला नीतिः" इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह—कृतेति। षण्णां वर्गः षड्वर्गः। अरीणामन्तःशत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः, शिवभागवतवत् समासः। तस्य जयः कृतो येन तथोक्तेन विनीतेनेत्यर्थः। विनीताधिकारं प्रजापालनमिति भावः। अगम्यरूपां पुरुषमात्रदुष्प्राप्याम् मनोरिमां मानवीं मनूपदिष्टसदाचारञ्चुणामित्यर्थः। पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रतिपत्तुमिच्छुना प्रपद्यतेः सनन्तादुप्रत्ययः। "सनि मीमा" इत्यादिनेसादेशः। "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः। अस्ता तन्द्रिः आलस्यं यस्य तेन अस्ततन्द्रिणा अनलसेनेत्यर्थः। तदिः सौत्रो धातुः। तस्मात "वङ्ख्यादयश्च" इत्यौणादिकः क्रिन् प्रत्ययः। "कृदिकारादक्तिनः" इति वा ङीष्। "वन्दीघटीतरीतन्द्रीति ङीषन्तोऽपि" इति क्षीरस्वामी। तथा रामायणप्रयोगः—"निस्तन्द्रिरप्रमत्तश्च स्वदोषे परदोषवत्" इति। तेन दुर्य्योधनेन पुरुषस्य

৮। আপনা হইতে বিশঙ্কমান সেই বঞ্চক দুর্য্যোধন গুণসম্পদে আপনাকে অতিক্রম করিতে অভিলাষ করিয়া দয়াদানদাক্ষিণ্যাদিগুণগৌরবে নির্ম্মল যশ বিস্তার করিতেছেন। যাহা হউক, দুর্জ্জন-সংসর্গ অপেক্ষা মহাত্মাদিগের সহিত গৌরববর্দ্ধক বিরোধও বরঞ্চ ভাল।

सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥

अन्वयः । गतस्मयः सः सन्ततम् अनुजीविनः प्रीतियुजः सखीनिव सुहृदः बन्धुभिः समानमानान् बन्धुता च कृताधिपत्यामिव साधु दर्शयते । वाच्य—गतस्मयेन तेन सखाय इव समानमानाः बन्धुता कृताधिपत्या इव दर्श्यन्ते । १०

कर्म्म पौरुषं पुरुषकारः, उद्योग इति यावत् । युवादित्वादण्प्रत्ययः । "पौरुषं पुरुषस्योक्ते भावे कर्म्मणि तेजसि" इति विश्वः । नक्तं च दिवा च नक्तन्दिवम् अहोरात्रयोरित्यर्थः । "अचतुर" इत्यादिना समस्ययवृत्त्योरव्यययोर्द्वन्द्वनिपातितऽच्समासान्तः । विभज्य अस्यां वेलायामिदं कर्म्मेति [कार्य्यमिदमकार्य्यमिदमिति] विभागं कृत्वा नयेन नीत्या वितनुते विस्तारयति ॥९॥

सम्प्रति भृत्यानुरागमाह—सखीनिति । गतस्मयो निरहङ्कारोऽतएव स दुर्य्योधनः सन्ततम् अनारतं साधु सम्यक् अकपटम् इत्यर्थः । अनुजीविनो भृत्यान् प्रीतियुजः स्निग्धान् सखीनिव मित्राणि इव दर्शयते लोकस्येति शेषः । 'हेतुमति च' इति णिच् । "णिचश्च" इति आत्मनेपदम् । शोभनं हृदयं येषां तान् सुहृदो मित्राणि च । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातः । बन्धुभिः भ्रात्रादिभिः समानमानान् तुल्यसत्कारान् दर्शयते । बन्धूनां समूहो बन्धुता ताम् । "ग्रामजनबन्धुसहायेभ्यस्तल् ।" कृतम् आधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते, बन्धून् अधिपतीनिव दर्शयते इत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य, तथा तान् सम्भावयतीत्यर्थः । अनुजीव्यादीनाम् "कर्त्तुरीप्सिततमं कर्म्म" इति कर्म्मत्वम् । पूर्वं त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—स राजा अनुजीव्यादीन् सख्यादीनिव दर्शयते । सख्यादय इव तं तु तं पश्यन्ति । सख्यादिभावेन पश्यतस्तांस्तथा दर्शयते, स्वयमेव छन्दानुवर्त्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः । अत्रापि स्वस्थे(अर्थात्तस्थे)प्सितकर्म्मत्वम्, अणि कर्त्तुरनुजीव्यादेः "अभिवादिदृशोरात्मनेपदमुपसंख्यानम्" इति पाक्षिकं कर्म्मत्वम् । एवं चात्राण्यन्तकर्म्मणो राज्ञोऽण्यन्ते कर्त्तृत्वेऽपि "आरोहयते हस्ती स्वय-

৯। কামক্রোধাদি ষড়্রিপুজয়ী দুর্য্যোধন অনন্যসুলভ মনুপদিষ্ট প্রজাপালন-পদ্ধতি প্রাপ্ত হইবার জন্য অনলস হইয়া অহোরাত্র কর্ত্তব্য কর্ম্মের বিভাগপূর্ব্বক নীতিদ্বারা স্বীয় পৌরুষ বিস্তার করিতেছেন

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया।
गुणानुरागादिव सख्यमीयिवान्
न बाधतेऽस्य त्रिगणः परस्परम्॥ ११॥

अन्वयः। यथायथं विभज्य समपक्षपातया भक्त्या असक्तम् आराधयतः अस्य त्रिगणः गुणानुरागात् सख्यम् ईयिवान् इव परस्परं न बाधते। वाच्या—त्रिगणेन ईयुषा न बाध्यते। ११

मेव" इत्यादिवत् अश्रूयमाणकर्म्मान्तरत्वाभावात नायं णेरणादिसूत्रस्य विषय इति मत्वा "णिचश्च" इत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु णेरणादिसूत्र-विषयत्वमपि अस्योक्तम्। यथाह—"पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा, दर्शयते भृत्यै राजा अत्र आत्मनेपदं सिद्धं भवति" इति। अत्राह कैयटः—"ननु कर्म्मान्तरसद्भावादत्रात्मनेपदेन सम्भाव्यम्। उच्यते—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते। अण्यन्ता-वस्थायां ये कर्त्तृकर्म्मणी तद्व्यतिरिक्तकर्म्मान्तरसद्भावात् आत्मनेपदं न भवति। यथा "स्थलमारोहयति मनुष्यान्" इति, इह तु अण्यन्तावस्थायां कर्त्तृणां भृत्यानां णौ कर्म्मत्वमिति भवत्येवात्मनेपदम् इति॥ १०॥

न चायं त्रिवर्गात् प्रमाद्यतीत्याह—असक्तमिति। यथायथं यथास्वं विभज्य सङ्कीर्णरूपं विविच्येत्यर्थः। "यथास्वे यथायथम्" इति निपातनाद्-द्विर्भावो नपुंसकत्वञ्च। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वम्। पक्षे पातः पक्षपातः आसक्तिविशेषः समः तुल्यो यस्यां सा तथा तया सम-पक्षपातया, भक्त्या अनुरागविशेषेण,पूज्येषु अनुरागो भक्तिरितुप्रदेशः, पूज्यश्च अयं त्रिवर्ग इति भावः। असक्तमनासक्तम् अव्यसनितयेति यावत्, आरा-धयतः सेवमानस्य अस्य दुर्य्योधनस्य त्रयाणां धर्म्मार्थकामानां गणस्त्रिगण-स्त्रिवर्गः। "त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः। गुणानु-रागात् तदीयगुणेषु अनुरागात् गुणवदाश्रयलाभादित्यर्थः। सख्यं मैत्रीम्, "सख्युर्यः" इति यप्रत्ययः। ईयिवान् उपगतवानिव इति उत्प्रेक्षा।"उपेयि-वाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तो निपातः, "नात्रोपसर्गस्तन्त्रम्" इति काशिकाकार आह स्म। परस्परं न बाधते, समवर्त्तित्वादस्य धर्म्मार्थ-कामाः परस्परानुपमर्दन वर्द्धन्ते इत्यर्थः। उक्तञ्च—"धर्म्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः" इति॥ ११॥

১০। তিনি অহঙ্কার পরিহারপূর্ব্বক লোকসমক্ষে ভৃত্যগণকে অকপটভাবে স্নিগ্ধ মিত্রের ন্যায় প্রদর্শন করান, সুহৃদ্গণকে সোদরাদি বন্ধুর সমান সম্মান প্রদান করেন এবং স্বীয় আধিপত্য যেন বান্ধবগণের প্রতিই ন্যস্ত করিয়াছেন এরূপ ব্যবহার করেন।

निरत्ययं साम न दानवर्जितं
न भूरि दानं विरहय्य सत्क्रियाम्।
प्रवर्त्तते तस्य विशेषशालिनी
गुणानुरोधेन विना न सत्क्रिया॥ १२॥
वसूनि वाञ्छन्न वशी न मन्युना
स्वधर्म्म इत्येव निवृत्तकारणः।

अन्वयः। तस्य निरत्ययं साम दानवर्ज्जितं न, सत्क्रियां विरहय्य भूरिदानं न, विशेषशालिनी सत्क्रिया गुणानुरोधेन विना न [प्र]वर्त्तते॥ वाच्य—निरत्ययेन साम्ना दानवर्ज्जितेन, भूरिदानेन, विशेषशालिन्या सत्क्रियया प्रवृत्यते।

अथ श्लोकत्रयेण उपायकौशलं दर्शयन् आदौ सामदाने दर्शयति—निरत्ययमिति। तस्य दुर्य्योधनस्य निरत्ययं निर्बाधम्, अमायिकमित्यर्थः। अन्यथा जनानां दुःखहत्वादिति भावः। साम सान्त्वम्। "साम सान्त्वमुभे समे" इत्यमरः। दानवर्जितं न प्रवर्त्तते, अन्यथा [लुब्धप्रवर्त्तनस्य] लुब्धाद्यावर्ज्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः। उक्तञ्च—"लुब्धमर्थेन गृह्णीयात् साधुमञ्जलिकर्म्मणा। मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम्" इति। तथा भूरि प्रभूतं, न तु कदाचित् स्वल्पमित्यर्थः। दानं धनत्यागः, सदित्यादरार्थेऽव्ययम्; "आदरानादरयोः सदसती" इति निपातसंज्ञास्मरणात्। तस्य क्रियां सत्क्रियां विरहय्य विहाय। "ल्यपि लघुपूर्वात्" इत्ययादेशः। न प्रवर्त्तते, अनादरे दानवैफल्यादिति भावः। न चैवं सर्वत्र येनाविवेकित्वं कोशहानिश्च स्यादित्याह—प्रवर्त्तते इति। विशेषशालिनी अतिशययोगिनी सत्क्रिया आदरक्रिया गुणानुरोधेन गुणानुरागेण विना न प्रवर्त्तते। "पृथग्विना—" इत्यादिना तृतीया। गुणिष्वेवादरो भूरिदानञ्च इति न उक्तदोषावकाश इत्यर्थः। अत्र उत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनात् एकावल्यलङ्कारः। तदुक्तं काव्यप्रकाशे—"स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्। विशेषणतया वस्तु यत्र सैकावली द्विधा" इति॥ १२॥

১১। তিনি অনাসক্ত হইয়া অপক্ষপাত দৃষ্টিতে তুল্য অনুরাগসহকারে যথাযথ বিবেচনাপূর্ব্বক যে ধর্ম্মার্থকামের সেবা করিতেছেন, সেই ত্রিবর্গ যেন তদীয় গুণানুরাগভরেই মিত্রতা প্রাপ্ত হইয়া পরস্পর কেহ কাহাকেও বাধা দিতেছে না।

১২। তাঁহার কাপট্যবিহীন, সন্ধিপ্রয়োগ দানবর্জ্জিত নহে। তিনি সমাদর না করিয়া প্রভূত দান করেন না। তাঁহার সেই সবিশেষ সমাদরক্রিয়াও গুণাগুণবিবেচনাপূর্ব্বকই অনুষ্ঠিত হইয়া থাকে।

प्रसह्य योऽस्मासु परै: प्रयुक्त:
स्मर्त्तुं न शक्य: किमुताधिकर्त्तुम्।
नवीकरिष्यत्युपशुष्यदार्द्र:
स त्वद्‌विना मे हृदयं निकार: ॥४४

इति कलापकम्।

अन्वय:। परै: अस्मासु प्रसह्य प्रयुक्त: य: (निकार:) स्मर्त्तुं न शक्य:, अधिकर्त्तुं किम उत? स: निकार: आर्द्र: सन् त्वद्‌विना उपशुष्यत् मे हृदयं नवीकरिष्यति ॥ वाच्य—युक्त न येन न शक्येन (भूयते) तेन निकारेण आर्द्रेण नवीक्रियते।

स्कन्दन:। पुराकृतपराक्रमोद्भूतानि अपि प्रमृजन् इत्यर्थ:। "अवदानं कर्म्म वृत्तम्" इत्यमर:। अतएव सम्प्रतीतिं ख्यातिम्। "प्रतीते प्रथिताख्यानवित्तविज्ञातविश्रुता:" इत्यमर:। अभूतान् अविद्यमानान् इति उत्प्रेक्षा। सतोऽपि असत्त्वम् उत्प्रेक्ष्यते। तन्वन् कुर्वन्। पुनश्च अह्न: अवशेष: दिनान्त: अर्कत्विषाम् इव आयतीनाम् उत्तरकालानां प्रयामक्षयं दैर्घ्यनाशं कुर्वन् इति श्रौती पूर्णा इयम् उपमा। अरिनिराकृतस्य कुतश्चिरावस्थानम् इति भाव: ॥ ४३ ॥

प्रसह्येति। पुनश्च परै: शत्रुभि: अस्मासु प्रसह्य प्रयुक्त: आचरित: य: निकार: परिभव: केशाकर्षणरूप: स्मर्त्तुं न शक्य:, अधिकर्त्तुम् अनुभवितुं किमुत? यस्य स्मरणमपि दु:सहम् अनुभवस्तु सुतरां दु:सह इति किमुत वक्तव्यम् इत्यर्थ:। स निकार: त्वद्‌विना त्वया विना। "पृथग्विना" इत्यादिना पञ्चमी। आर्द्र: सन् कुतश्चित् अभिभू[ता] तात् पुराणप्रहार इव त्वद्विरहदु:खात् पुन: नवीकरिष्यति नवीभविष्यति इत्यर्थ:। उपशुष्यत् त्वया विना शुष्कम् इति भाव:। दु:खस्तम्भनं शोषपदार्थ: मे हृदयं नवीकरिष्यति आर्द्रीकरिष्यति व्रणम् इव इति भाव:। दु:खितस्य पुन: दु:खोपचय: प्रशान्तप्रायमपि दु:खहेतुं पुनरुद्घाटयति इत्यर्थ:। अत्र शोषादिविशेषणसाम्यात् व्रणाद्यप्रस्तुतार्थप्रतीति: समासोक्तिरलङ्कार: ॥ ४४ ॥

৪৩। এই অরিপরাভব আপনাদের পূর্ব্বকৃত শৌর্য্যবীর্য্যের কার্য্যসকল বিলোপ করিয়া কখনও যেন কোন কীর্ত্তি হয় নাই, এরূপ ঘটাইতেছে এবং দিবসের শেষভাগ যেরূপ সূর্য্যকিরণের দীর্ঘতা বিনাশ করে, তদ্রূপ উত্তরকালের খর্ব্বতা সাধন করিতেছে।

৪৪। শত্রুগণ আমাদের প্রতি বলপূর্ব্বক কেশাকর্ষণরূপ যে অসদাচরণ করিয়াছে, তাহা স্মরণ করিতেও পারা যায় না, অনুভব যে কিরূপ দুঃসহ তদ্বিষয়ে আর কি বক্তব্য? সম্প্রতি ভবদীয়

प्राप्तोऽभिमानव्यसनादसह्यं
दन्तीव दन्तव्यसनाद्विकारम्।
द्विषत्प्रतापान्तरितोरुतेजाः
शरद्घनाकीर्ण इवादिरह्नः॥ ४५॥
सव्रीड़मन्दैरिव निष्क्रियत्वात्
नात्यर्थमस्त्रैरवभासमानः।
यशःक्षयक्षीणजलार्णवाभ-
स्त्वमन्यमाकारमिवाभिपन्नः॥४६॥

अन्वयः। अभिमानव्यसनात् दन्तव्यसनात् दन्ती इव (त्वं) असह्यं विकारं प्राप्तः। द्विषत्प्रतापान्तरितोरुतेजाः (अतएव) शरद्घनाकीर्णः अह्नः आदिः इव (स्थितः)॥ वाच्य—दन्तिना इव (त्वया) असह्यो विकारः प्राप्तः।...तेजसा...कीर्णेन आदिना (स्थितम्)॥ ४५॥

अन्वयः। निष्क्रियत्वात् सव्रीडमन्दैः इव अस्त्रैः अत्यर्थं न अवभासमानः। यशः क्षयक्षीणजलार्णवाभः त्वम् अन्यम् आकारम् अभिपन्नः इव॥ वाच्य—...मानेन...भेन त्वया अन्यः आकारः अभिपन्नः॥ ४६

पुनः प्रकारान्तरेण मन्युम् उद्दीपयति—"प्राप्तः" इत्यादिभिः त्रिभिः। अत्र वक्ष्यमाणप्रत्यभिज्ञानहेतुभिः धनञ्जयं विशिनष्टि। अभिमानस्य व्यसनात् भ्रंशात्। "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। दन्तव्यसनात् दन्तभङ्गात् दन्ती इव असह्यं विकारं वैरूप्यं प्राप्तः। अतो न प्रत्यभिज्ञायते इति भावः। एवम् उत्तरत्रापि अनुसन्धेयम्। पुनश्च द्विषत्प्रतापेन शत्रुतेजसा अन्तरितं तिरस्कृतम् उरु तेजः प्रतापो यस्य स तथोक्तः। अतएव शरद्घनाकीर्णः शरन्मेघाच्छन्नः अह्नः आदिः प्रत्यूषः इव स्थितः। तद्वत् एव अप्रत्यभिज्ञायमान इत्यर्थः। मध्याह्नस्तु मेघावरणेऽपि च कथञ्चित् प्रत्यभिज्ञायत एव इति अतिशयेन उक्तम् आदिरिति॥ ४५

सव्रीड़ेति। पुनश्च निष्क्रियत्वात् अर्थक्रियाशून्यत्वात् सव्रीड़मन्दैः इव सव्रीड़ैः अतएव मन्दैः अपटुभिः इव स्थितैः इति उत्प्रेक्षा। "मूढ़ाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः। अस्त्रैः अत्यर्थं न अवभासमानः न

বিরহে সেই পরিভব পুনরায় নূতন হইয়া আমার শুষ্ক হৃদয়কে আবার নূতন ব্যথাগ্রস্ত করিয়া তুলিতেছে।

৪৫—৪৬। শত্রুগণের তেজে তোমার বিপুল তেজ আচ্ছাদিত হইয়াছে, তাই তুমি শরৎকালীন জলদাচ্ছন্ন প্রত্যুষের ন্যায় অবস্থান করিতেছ। এবং অভিমানচ্যুতিবশতঃ দন্তভগ্ন দন্তীর ন্যায় অসহ্য

दु:शासनामर्षरजोविकीर्णै-

रेभिर्विनाथैरिव भाग्यनाथैः।

केशैः कदर्थीकृतवीर्य्यसार:

कच्चित् स एवासि धनञ्जयस्त्वम् ॥४७॥

॥ विशेषकम् ॥

स क्षत्रियस्त्राणसहः सतां य-

स्तत् कार्मुकं कर्म्मसु यस्य शक्तिः।

अन्वय:। दु:शासनामर्षरजोविकीर्णै: (अतएव) विनाथै: इव भाग्यनाथै: एभि: (परिदृश्यमानै:) केशै: कदर्थीकृतवीर्य्यसार: स: त्वम् एव धनञ्जय: असि कच्चित्॥ वाच्य—···सारेण त्वया धनञ्जयेन भूयते॥ ४७

प्रकाशमान: पूर्वं तु नैवम् इति भाव:। किन्तु यश:क्षयात् हेतो: क्षीणजल: य: अर्णव: तदाभ: तत्सदृश: त्वम् अन्यम् आकारम् अभिपन्न: प्राप्त: इव स्थित: इव इति उत्प्रेक्षा। तस्य क्षीणजलार्णवाभ: इति उपमासंसृष्टि: ॥४६

दु:शासनेति। पुनश्च दु:शासनस्य कर्त्तु: आमर्ष: आमर्षणम् आकर्षणं स: एव रजः धूलि: मालिन्यहेतुत्वात् इति भाव:। तेन विकीर्णै: विक्षिप्तै: अतएव विनाथै: इव स्थितवतां युष्माकम् असत्त्वप्रायत्वात् अनाथै: इव स्थितै: इति उत्प्रेक्षा। अन्यथा कथम् इयं दुर्दशा इति भाव:। किन्तु भाग्यनाथै: दैवमात्रशरणै:। अन्यथा स्वरूपम् अपि लुप्येत इति भाव:। एभि: परिदृश्यमानै: असंयमितै: इति भाव:। केशै: शिरोरुहै: कुत्सित: अर्थ: वस्तु कदर्थ:। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमर:। "को: कत्तत्पुरुषेऽचि" इति कुशब्दस्य कदादेश:। कदर्थीकृतौ गर्ह्यार्थीकृतौ वीर्य्यसारौ शौर्य्यबले यस्य स: तथोक्त:। इत्थं पूर्वविलक्षण: त्वं स एव धनञ्जय: असि कच्चित्? "कच्चित्कामप्रवेदने" इत्यमर:। स एव चेत् त्वं नैवमस्मान् उपेक्षसे इति भाव: ॥ ४७ ॥

বিকার প্রাপ্ত হইয়াছে। আর সম্প্রতি কোন কার্য্য না থাকায় লজ্জিত ও দুর্ভাগ্যের ন্যায় অবস্থিত অস্ত্রশস্ত্রসকলে তুমি পূর্ব্ববৎ নিরতিশয় দীপ্যমান হইতেছ না, কিন্তু কীর্ত্তিক্ষয়হেতু ক্ষীণজল জলাশয়ের ন্যায় অন্যরূপ আকার যেন ধারণ করিয়াছ। মদীয় অনাথবৎ অবস্থিত, দৈবমাত্রশরণাপন্ন, এই অসংযত কেশকলাপ দ্বারা তিরস্কৃত-শৌর্য্যবীর্য্য তুমিই কি সেই অর্জ্জুন?

वहन् द्वयीं यद्यफलेऽर्थजाते
करोत्यसंस्काग्हतामिवोक्तिम् ॥४८॥
वीतौजसः सन्निधिमात्रशेषा
भवत्कृतां भूतिमपेक्षमाणाः-
समानदुःखा इव नस्त्वदीयाः
सरूपतां पार्थ गुणा भजन्ते ॥ ४९ ॥

अन्वयः। यः सतां त्राणसहः सः क्षत्रियः, यस्य कर्म्मसु शक्तिः, तत् कार्म्मुकम्; द्वयीम् उक्तिम् अफले अर्थजाते वहन् असंस्कारहतामिव करोति ॥ वाच्य—येन त्राणसहेन तेन क्षत्रियेण (भूयते) शक्त्या (भूयते) तेन कार्म्मुकेण (भूयते) वहता हता क्रियते ॥ ४८

अन्वयः। हे पार्थ! वी.ीजसः सन्निधिमात्रशेषाः भवत्कृतां भूतिम् अपेक्षमाणाः त्वदीयाः गुणा समानदुःखाः इव नः सरूपतां भजन्ते ॥ वाच्य—वीतौजोभिः···ग्रेषैः अपेक्षमाणैः त्वदीयैः गुणैः समानदुःखैः इव सरूपता भज्यते ॥ ४९

अथाप्युपेक्षणे दोषमाह—स इति। क्षतात् त्रायते इति क्षत्रं क्षत्रियकुलम्। "सुपि" इति योगविभागात् कप्रत्ययः। पृषोदरादित्वात् पूर्वपदस्य अन्त्यलोपः। अथवा क्षदिति क्विबन्तोपपदात् कप्रत्ययः। क्षत्रे जातः क्षत्रियः। "क्षत्राद्घः" इति घप्रत्ययः। कर्म्मणे प्रभवति इति कार्म्मुकम्। "कर्म्मण उकञ्" इति उकञ्प्रत्ययः। एवं स्थिते वाक्यार्थः कथ्यते यः सतां साधूनां सहते इति सहः पचाद्यच्। यः त्राणस्य सहः त्राणसहो रक्षणक्षमः स एव क्षत्रियशब्दवाच्यः। तथा यस्य कार्म्मुकस्य कर्म्मसु रणक्रियासु शक्तिः अस्तीति शेषः। तदेव कार्म्मुकशब्दवाच्यम्। अत्रैव एतौ शब्दौ मुख्यौ न अन्यत्र इत्यर्थः। एवं स्थिते द्वयीं द्विविधाम् उक्तिं द्वौ इमौ क्षत्रियकार्म्मुकशब्दौ इत्यर्थः। अफले पूर्वोक्तावयवार्थशून्ये अर्थजाते स्वाभिधेयसामान्यजातिमात्रे इत्यर्थः। "जातं जातौघजन्मसु" इति विश्वः। वहन् वर्त्तयन् असंस्कारहताम् अव्युत्पत्तिदूषिताम् इव करोति इति उत्प्रेक्षा। तस्मात् त्वम् अस्मद्रक्षणेन उक्तदोषात् आत्मानं मोचयस्व इत्यर्थः ॥ ४८ ॥

৪৭। যিনি সাধুগণের রক্ষণক্ষম, তিনিই ক্ষত্রিয়পদবাচ্য; আর যে কার্ম্মুকের সমরসামর্থ্য বিদ্যমান, সেই কার্ম্মুকই কার্ম্মুক। (এ অবস্থায়) যে পুরুষ ক্ষত্রিয় কর্ত্তব্য না করিয়া ক্ষত্রিয় ও কার্ম্মুক এই শব্দ দুইটীকে পূর্ব্বোক্ত ব্যুৎপত্তিলভ্য অর্থশূন্য ক্ষত্রিয়ত্ব ও কার্ম্মুকত্ব এই জাতিমাত্র অর্থে পরিণত করেন, তিনি ঐ শব্দ দুইটীকে অব্যুৎপত্তিদোষে দুষ্ট করিয়া থাকেন।

आक्षिप्यमाणं रिपुभि: प्रमादा-
न्नागैरिवालूनसटं मृगेन्द्रम् ।
त्वां धूरियं योग्यतयाधिरूढ़ा
दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥५०॥
करोति य: सर्वजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभि: ।

अन्वय:। प्रमादात् रिपुभि: आक्षिप्यमाणं नागै: आलूनसटं मृगेन्द्रम् इव त्वाम् इयं धू: तिग्मरश्मिं दीप्त्या दिनश्री: इव योग्यतया अधिरूढ़ा ॥ वाच्य—आक्षिप्यमाण: आलूनसट: मृगेन्द्र इव त्वम् अनया धुरा तिग्मरश्मि: दिनश्रिया अधिरूढ़: ॥ ५०

अथ त्वद्गुणा अपि नोज्जीवयेयुरित्याह—वीतेति। हे पार्थ! वीतौजस: निष्प्रभा: सन्निधिमात्रशेषा: सत्तामात्रावशिष्टा: भवत्कृतां भवता करिष्यमाणाम्, "आशंसायां भूतवच्च" इति भूतवत्प्रत्यय:। भूतिम् अभ्युदयम् अपेक्षमाणा: त्वदीया: गुणा: समानदु:खा समदु:खभाज: इव न: अस्माकं सरूपतां वीतौजस्त्वादिसाधर्म्यं भजन्ते इति उपमा, सा च समानदु:खा इव इति उत्प्रेक्षया वीतौजस्त्वादिसम्भावितया अनुप्राणिता इति अनुसन्धेयम् ॥ ४८ ॥

तथापि ममैव कोऽयं भार: इत्यत आह—आक्षिप्येति। प्रमादात् प्रज्ञाहीनत्वात् न तु दौर्बल्यात् इति भाव:। रिपुभि: आक्षिप्यमाणम् अधिक्षिप्यमाणम् अतएव प्रमादात् नागै: गजै:। "ग्रहभाहिगजा नागा:" इति वैजयन्ती। आलूनसटम् आक्षिप्तकेशरम्। "सटा जटाकेसरयो:" इति विश्व:। मृगेन्द्रं सिंहम् इव स्थितं त्वाम् इयं धू: कार्य्यभार: तिग्मरश्मिं सूर्य्यं दीप्त्या दिनश्री: इव योग्यतया निर्वाहकतया। अधिरूढ़ा आरूढ़वती। कर्त्तरि क्त:। त्वदधीना इत्यर्थ: ॥ ५० ॥

৪৮। হে পার্থ। স্বস্বসত্তামাত্রে পর্য্যবসিত ভবদীয় নিষ্প্রভ গুণনিচয় তুল্যদুঃখভাগী হইয়াই যেন আপনার অভ্যুদয়লাভের অপেক্ষা করিয়া আমাদিগের সারূপ্য গ্রহণ করিতেছে।

৫০। রিপুগণ প্রমাদবশে আপনাকে অভিভূত করিয়াছে; সুতরাং গজগণ প্রমাদক্রমে সিংহকে অভিভূত করিয়া তদীয় কেশরজাল বিক্ষিপ্ত করিলে তাহার যেরূপ অবস্থা হয়, আপনারও সেই অবস্থা হইয়া দাঁড়াইয়াছে। দিনশ্রী যেমন দীপ্তি নিমিত্ত সূর্য্যের শরণাপন্ন হয়, তেমনি এই কার্য্যভারও যোগ্যতাহেতু এক্ষণ আপনাকেই আশ্রয় করিতেছে।

संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥ ५१ ॥
प्रियेषु यैः पार्थ विनोपपत्ते-
र्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादघानां मघवा विघातम् ॥ ५२ ॥

अन्वयः । यः सर्वजनातिरिक्तां सम्भावनां क्रियाभिः अर्थवतीं करोति संसत्सु पुरुषाधिकारे जाते (सति) पूरणी संख्या तं न समुपैति ।[1] वाच्य—येन सर्वजनातिरिक्ता सम्भावना क्रियाभिः अर्थवती क्रियते, पूरण्या संख्यया स न समुपेयते ॥ ५१

अन्वयः । हे पार्थ ! प्रियेषु उपपत्तेर्विना यैः विचिन्त्यमानैः चेतः क्लममेति जयाय प्रयातस्य तव तेषाम् अघानां मघवा विघातं क्रियात् ॥ वाच्य—चेतसा क्लम ईयते मघाना विघातः क्रियेत ॥ ५२

पूर्वं निर्व्यवसायस्य "स क्षत्रियः" इत्यादिना दोष उक्तः, सम्प्रति व्यवसायिनो गुणमाह—करोतीति । यः पुमान् अशेषजनात् इतरजनात् अतिरिक्ताम् अधिकां सर्वातिशायिनीम् इत्यर्थः । सम्भावनां योग्यतां क्रियाभिः चरितैः अर्थवतीं सफलां करोति । तं पुमांसं संसत्सु सभासु । "सभासमितिसंसदः" इत्यमरः । पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति, पूर्य्यते अनेन इति पूरणी संख्या द्वित्वादिसंख्या न समुपैति न गच्छति, अद्वितीयो भवति इत्यर्थः । तस्मात् असाधारणलाभाय त्वया अपि महानुत्साहः आस्थेय इति भावः ॥ ५१ ॥

अथ द्वाभ्यां सुलभविपक्षस्य प्रोषितस्य अर्जुनस्य कर्त्तव्यम् उपदिशति—प्रियेषु इति । हे पार्थ ! प्रियेषु अस्मासु विषये उपपत्तेः कारणात् विना एव विचिन्त्यमानैः अकस्मात् एव आशङ्क्यमानैः यैः अघैः चेतः क्लमं खेदम् एति । जयाय प्रजातस्य तव सम्बन्धिनां तेषाम् अघानां व्यसनानाम् । "दुःखैनोव्यसनेष्वघम्" इत्यमरः । मघवा इन्द्रः यः अस्माभिः उपास्यते इति भावः । विघातं निवारणं क्रियात् करोतु । आशिषि लिङ् । तस्मात् अस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया । अन्यथा तदसम्भवात् इति भावः ॥ ५२ ॥

৫১। যে জন সর্ব্বাতিশায়িনী যোগ্যতাকে ক্রিয়ার দ্বারা সফল করিয়া তুলে, সভাক্ষেত্রে পুরুষগণনার প্রস্তাব উপস্থিত হইলে, পূরণী অর্থাৎ দ্বিত্বাদি সংখ্যা তাহাকে প্রাপ্ত হয় না, অর্থাৎ সেই ব্যক্তি অদ্বিতীয় হইয়া থাকে।

मा गास्चिरायैकचर: प्रमादं
वसन्नसम्बाधशिवेऽपि देशे।
मात्सर्य्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि ॥ ५३ ॥

तदाशु कुर्वन् वचनं महर्षे-
र्मनोरथान् न: सफलीकुरुष्व।
प्रत्यागतं त्वाऽस्मि कृतार्थमेव
स्तनोपपीडं परिरब्धुकामा ॥ ५४ ॥

अन्वय:। ( त्वं ) असम्बाधशिवे अपि देशे चिराय एकचर: वसन् प्रमादं मा गा:। मात्सर्य्यरागोपहतात्मनां मानसानि साधुषु अपि स्खलन्ति हि॥ वाच्य—एकचरेण वसता प्रमाद: मा गायि, मानसै: स्खल्यते॥ ५३ ॥

अन्वय:। तत् त्वं महर्षेर्वचनम् आशु कुर्वन् न: मनोरथान् सफलीकुरुष्व। ( किञ्च अहं ) कृतार्थं प्रत्यागतं त्वा स्तनोपपीडं परिरब्धुकामा अस्मि॥ वाच्य—महर्षेर्वचनं कुर्वता मनोरथा: सफलीक्रियन्तां परिरब्धुकामया भूयते॥ ५४ ॥

मा गा। असम्बाध: असङ्कट: विजन इत्यर्थ:। "सङ्कटं ना तु सम्बाध:" इत्यमर:। शिव: निर्बाध:, द्वयो: अन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमास:। अस्मिन् असम्बाधशिवे अपि देशे चिराय चिरम् एकश्चासौ चरश्चेति एकचर: एकाकी वसन् प्रमादं दौर्बल्यं मा गा:। "इणो गा लुङि" इति गादेश:। ननु निस्पृहस्य मम अकिञ्चित्कर: प्रमाद इति वाच्यम् इति आशङ्काह—मात्सर्य्येति। मत्सर: एव मात्सर्य्यं, द्वेष: राग: स्नेह: ताभ्याम् उपहतात्मनां रागद्वेषदूषितस्वभावानां मानसानि मनांसि साधुषु सज्जनेषु अपि विषये स्खलन्ति विकुर्वते हि। अत्र प्रमादनिषेधलब्धा-प्रमादरूपकारणेन अर्थप्राप्तिरूपकार्य्यस्य व्यतिरेककारणसमर्थनात् वैधर्म्येण कार्य्यकारणसमर्थनरूप: अर्थान्तरन्यास:॥ ५३ ॥

৫২। হে পার্থ! কারণ না থাকিলেও প্রিয়জনে বিঘ্নপাতের আশঙ্কায় তোমার চিত্ত খেদ প্রাপ্ত হইতেছে, তুমি জয়ার্থ প্রয়াণ করিলে দেবরাজ তোমার সেই সকল আশঙ্কিত বিঘ্ন নিবারণ করিবেন।

৫৩। যদিও সঙ্কটশূন্য মঙ্গলময় দেশেই তোমাকে বহুদিন একাকী বাস করিতে হইবে, তথাচ তুমি দৌর্ব্বল্য আশ্রয় করিও না। কেননা রাগদ্বেষদূষিতস্বভাব ব্যক্তিদিগের চিত্ত সাধুজনেও স্খলিত হইয়া থাকে।

उदीरितां तामिति याज्ञसेन्या
नवीकृतोद्ग्राहितविप्रकाराम्।
आसाद्य वाचं स भृशं दिदीपे
काष्ठामुदीचीमिव तिग्मरश्मिः॥ ५५ ॥
अथाभिपश्यन्निव विद्विषः पुरः
पुरोधसारोपितहेतिसंहतिः।
बभार रम्योऽपि वपुः स भीषणं
गतः क्रियां मन्त्र इवाभिचारिकीम्॥५६॥

अन्वयः। सः याज्ञसेन्या इति उदीरितां नवीकृतोद्ग्राहितविप्रकारां तां वाचम् आसाद्य उदीचीं काष्ठां तिग्मरश्मिरिव भृशं दिदीपे॥ वाच्य—तेन तिग्मरश्मिना इव दिदीपे॥ ५५॥

तदिति। तत् तस्मात् कारणात्, आशु शीघ्रं महर्षेः वचनं कुर्वन् इत्यर्थः। नः अस्माकं मनोरथान् सफलीकुरुष्व अरिनिर्य्यातनेन अस्मान् प्रतिष्ठापय इत्यर्थः। प्रार्थनायां लोट्। किञ्च कृतार्थं कृतकृत्यं प्रत्यागतम् एव त्वा त्वाम्। "त्वामौ द्वितीयायाः" इति त्वादेशः। स्तनयोः उपपीड्य इति स्तनोपपीडम्। "सप्तम्यां चोपपीड़रुधकर्षः" इति णमुल्। परिरब्धुं कामः यस्याः सा परिरब्धुकामा अस्मि। आलिङ्गितुम् इच्छामि इत्यर्थः। "तुङ्‌काममनसोरपि" इति मकारलोपः। प्राक् कार्य्यसिद्धेः प्रमदालिङ्गनम् अपि न प्रीतिप्रदमिति भावः॥ ५४॥

उदीरितामिति। सः अर्जुनः इति इत्थं यज्ञसेनस्य अपत्येन स्त्रिया याज्ञसेन्या द्रौपद्या उदीरिताम् उक्ताम्। नवीकृतः पुनः उद्घाटनेन तथा प्रत्याशितः अतएव उदग्राहितः मनसि निधापितश्च विप्रकारः परिभवः यया सा तां वाचम् आसाद्य आकर्ण्य इत्यर्थः। उदीचीं काष्ठां दिशम् "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः। तिग्मरश्मिः इव भृशं दिदीपे जज्वाल चुक्रोध इत्यर्थः॥ ५५॥

৫৪। অতএব তুমি মহর্ষির বচন পালন (অর্থাৎ তপস্যা করিয়া) আমাদের সমস্ত মনোরথ সফল কর। তুমি কৃতকার্য্য হইয়া আসিলেই আমি স্তনোপপীড়ন করিয়া তোমায় আলিঙ্গন করিতে ইচ্ছা করি।

৫৫। দ্রুপদনন্দিনী অর্জ্জুনকে এই যে সকল কথা কহিলেন, ইহাতে অর্জ্জুনের মনে জ্ঞাতিকৃত সেই পরাভব যেন নবীকৃত হইয়া উঠিল, তিনি সেই সকল কথা শ্রবণ করিয়া উত্তরদিগবলম্বী দিবাকরের ন্যায় দেদীপ্যমান হইতে লাগিলেন।

अविलङ्घ्यविकर्षणं परैः
प्रथितज्यारवकर्म्म कार्मुकम्।
अगतावरिदृष्टिगोचरं
शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥

अन्वयः। अथ विद्विषः पुरः अभिपश्यन्निव तथा पुरोधसारोपितहेतिसंहतिः स रम्योऽपि आभिचारिकीं क्रियां गतः मन्त्र इव भीषणं वपुः बभार ॥ वाच्य—विद्विषः अभिपश्यता इव स्थितेन पुरोधसारोपितहेतिसंहतिना तेन रम्येण सतापि आभिचारिकीं क्रियां गतेन मन्त्रेणेव भीषणं वपुः बभ्रे ॥ ५६ ॥

अन्वयः। [ अर्जुनः ] परैः अविलङ्घ्यविकर्षणं प्रथितज्यारवकर्म्म कार्मुकं तथा अरिदृष्टिगोचरम् अगतौ शितनिस्त्रिंशयुजौ महेषुधी उद्वहन् ॥ वाच्य—महेषुधी उद्वहता अर्जुनेन ॥ ५७ ॥

अथेति। अथ विद्विषः शत्रून् पुरः अभिपश्यन् इव स्थितः तथा पुरोधसा धौम्येन आरोपिता समन्त्रं समाहिता हेतिसंहतिः आयुधकलापः यस्य सः तथोक्तः। "हेतिर्ज्वालाङ्कुरायुधे" इति वैजयन्ती। सोऽर्जुनः रम्यः सौम्यः सन् अपि। अभिचारः परहिंसा प्रयोजनं यस्याः सा आभिचारिकी। "तदस्य प्रयोजनम्" इति ठक्। तां क्रियां गतः अभिचारकर्म्मणि नियुक्तः इत्यर्थः। मन्त्रः इव, रम्यः प्रकृत्या रमणीयः। भीषयते इति भीषणम्। नन्द्यादित्वात् ल्युप्रत्ययः। वपुः बभार। प्रशान्तो मन्त्रः प्रयोगभेदात् इव सोऽपि अवस्थाभेदात् भीषणः बभूव इत्यर्थः ॥ ५६ ॥

उक्तम् आयुधारोपणं विवृण्वन् प्रस्थानम् आह त्रिभिः—अविलङ्घ्येति। परैः शत्रुभिः अविलङ्घ्यम् अनतिक्रमणीयं विकर्षणं यस्य तत्, अमोघाकर्षणम् इत्यर्थः। किं च प्रथितः ज्यारवः गुणध्वनिः कर्म बाणमोचनादिकं च यस्य तत् कार्मुकं च उद्वहन् इति अन्वयः। तथा अरीणां दृष्टिगोचरं दृष्टिपथम् अगतौ, आहवेषु अनिवर्त्तित्वात् अस्य इति भावः। निर्गतः त्रिंशतः अङ्गुलिभ्यः निस्त्रिंशः खड्गः। डप्रत्यये सङ्ख्यायाः तत्पुरुषस्य उपसंख्यानात् समासान्तः। तेन शितेन तीक्ष्णेन युक्तः इति शितनिस्त्रिंशयुजौ। "सत्सूद्विष" इत्यादिना क्विप्। महेषुधी महानिषङ्गौ इषवः धीयन्ते अनयोः इति विग्रहः। "कर्मण्यधिकरणे च" इति किप्रत्ययः। "तूणोपा-

৫৬। অনন্তর অর্জ্জুন সম্মুখেই যেন শত্রুদিগকে দেখিতে লাগিলেন; পুরোহিত ধৌম্য তাঁহার আয়ুধসমূহ সমন্ত্রক সমাহিত করিয়া দিলেন। তিনি সৌম্যাকৃতি হইয়াও অভিচার-ক্রিয়াগত মন্ত্রের ন্যায় ভীষণ বপুঃ ধারণ করিলেন।

यशसेव तिरोदधत् मुहु-
र्महसा गोत्रभिदायुधक्षतीः ।
कवचं च सरत्नमुद्वहन्
ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥
अलकाधिपभृत्यदर्शितं
शिवमुर्वीधरवर्त्म सम्प्रयान् ।
हृदयानि समाविवेश स
क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥

॥ विशेषकम् ॥

अन्वयः। गोत्रभिदायुधक्षतीः महसा यशसेव मुहुः तिरोदधत्, तथा सरत्नं ज्वलितज्योतिः दिवः अन्तरमिव कवचं उद्वहन्—(परेणान्वयः) ॥ वाच्य—तिरोदधता—कवचं उद्वहता (अर्ज्जुनेन) ॥ ५८ ॥

अन्वयः। अलकाधिपभृत्यदर्शितं शिवम् उर्व्वीधरवर्त्म सम्प्रयान् सः क्षणम् उद्बाष्पदृशां तपोभृतां हृदयानि समाविवेश ॥ वाच्य—उर्व्वीधरवर्त्म सम्प्रयाता तेन हृदयानि समाविविशिरे ॥ ५९ ॥

सङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः। तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः ॥ ५७ ॥

यशसेति। किं च। गोत्रभिद इन्द्रस्य आयुधक्षतीः वज्रप्रहाररन्ध्राणि खाण्डवदाहसम्भवादिति भावः। महसा स्वकान्त्या यशसा इव मूर्त्तया कीर्त्या इव मुहुः तिरोदधत् आच्छादयन्। सरत्नं रत्नसहितम् अतएव ज्वलितज्योतिः दीप्ततारकम्। "ज्योतिस्ताराग्निभा ज्वाला दृक्पुत्रार्थधरासु च" इति वैजयन्ती। दिवः अन्तरं नभोमध्यम् इव अवस्थितम्। "अन्तरं परिधानीये बाह्ये स्वीयेऽन्तरात्मनि। छिद्रे मध्ये प्रकाशे च" इति वैजयन्ती। कवचं च उद्वहन् ॥ ५८ ॥

अलकेति। सः अर्ज्जुनः अलकाधिपभृत्येन यक्षेण दर्शितम्, अतः शिवं निर्बाधम् उर्वीधरवर्त्म हिमवन्मार्गं प्रति सम्प्रयान् प्रगच्छन्। क्षणम् उद्-

৫৭। শত্রুগণ যাহার আকর্ষণ অতিক্রম করিতে পারে নাই এবং যাহার জ্যারব ও কর্ম্ম চিরপ্রথিত, এ হেন কার্ম্মুক, তথা শত্রুর দৃষ্টিপথাতীত তীক্ষ্ণ খড়্গান্বিত মহানিষঙ্গদ্বয় অর্জ্জুন ধারণ করিলেন।

৫৮। ইন্দ্র খাণ্ডবদাহনকালে অর্জ্জুনের গাত্রে বজ্র প্রহার করিয়াছিলেন, সেই প্রহার-জনিত রন্ধ্রগুলি অর্জ্জুন এক্ষণে মূর্ত্তিমতী কীর্ত্তির ন্যায় স্বীয় প্রভায় তিরোহিত করিলেন। এবং বিবিধ রত্নখচিত এক কবচ ধারণ করিলেন। ঐ কবচ উদ্দীপ্ততারক নভোমধ্যবৎ প্রতিভাত হইতে লাগিল।

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥६०॥

इति श्रीभारविकृतौ किरातार्ज्जुनीये
महाकाव्ये तृतीयः सर्गः ॥ ३ ॥

अन्वयः । अथ आशाः दिव्यं दुन्दुभिध्वानम् अनुजगुः, व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने । अनिभृतवेलावीचिबाहुः पयोधिः स्फुरन्तीं भुवं प्रियं कथयिष्यन् इव आलिलिङ्ग ॥ वाच्य—आशाभिः दिव्यः दुन्दुभिध्वानः अनुजगे । सुरकुसुमनिपातैः लक्ष्मीः वितेने, अनिभृतवेलावीचिबाहुना पयोधिना स्फुरन्ती प्रियं कथयिष्यता आलिलिङ्गे ॥ ६० ॥

बाष्पदृशां वियोगदुःखात् साश्रुनेत्राणां तपोभृतां द्वैतवननिवासिनां तपस्विनां हृदयानि समाविवेश खेदयामास इत्यर्थः । संपूर्वस्य विशतेः खेदार्थत्वम् अवधेयम् ॥ ५९ ॥

अनुजगुरिति । अथ आशाः दिशः । दिवि भवं दिव्यम् । "दिगादिभ्यो यत् ।" दुन्दुभिध्वानम् अनुजगुः अनुदध्वनुः । अनुगायतेर्लिट् । व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने । पुष्पवृष्टिः च अजनिष्ट इत्यर्थः । किंच अनिभृताः चञ्चला वेलायां कूले या वीचयः ताः एव बाहवः यस्य सः तथोक्तः । "वेला कूलविकारयोः" इति शाश्वतः । पयोधिः स्फुरन्तीम् उल्लसन्तीं हर्षात् स्पन्दमानां च भुवं प्रियम् इष्टं भारावतारणरूपं कथयिष्यन् इव कथयितुमिव इत्यर्थः । "लृट् शेषे च" इति चकारात् क्रियार्थायां क्रियायां लृट् । आलिलिङ्ग । सर्वं च इदं शिवं दैवकार्य्यप्रवृत्तत्वात् अस्य इति भावः । अत्र विशेषणमात्रसाम्यात् अप्रस्तुतस्य गम्यत्वात् समासोक्तिरलङ्कारः । तत्र च अप्रस्तुतयोः भूमिसमुद्रयोः प्रतिपन्नाभ्यां नायकाभ्यां भेदे अभेदलक्षणातिशयोक्तिवशात् आलिङ्गनोक्तिः इति रहस्यम् ।

৫৯। অর্জ্জুন যক্ষ-প্রদর্শিত নিষ্কণ্টক হিমালয়পথে অগ্রসর হইতে লাগিলেন, তাঁহার বিয়োগদুঃখে দ্বৈতবনবাসী তপস্বীরা ক্ষণেকের তরে সাশ্রুনেত্র হইলেন। অর্জ্জুন তাঁহাদের হৃদয় খেদান্বিত করিয়া চলিলেন।

# चतुर्थः सर्गः ।

ततः स कूजत्कलहंसमेखलां
सपाकशस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ॥ १ ॥

अन्वयः। ततः जनप्रियः सः कलहंसमेखलां सपाकशस्याहितपाण्डुतागुणाम् आसादितयौवनां प्रियाम् इव भुवम् उपजनम् उपाससाद ॥ वाच्य—जनप्रियेण तेन कलहंसमेखला सपाकशस्याहितपाण्डुतागुणा प्रिया इव आसादितयौवना भूः उपासेदे ॥ १ ॥

एवम् अतिशयोक्त्यनुप्राणिता समासोक्तिः। प्रियकथनात् स्ने इवत् जीवयति तदङ्गभावं भजते इति उभयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥ ६० ॥
इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
तृतीयः सर्गः ॥ ३ ॥

---

तत इति। ततः प्रस्थानानन्तरं जनप्रियः सः अर्जुनः कलहंसाः मेखलाः इव इति उपमितसमासः। अन्यत्र कलहंसाः इव मेखलाः इति विशेषण-समासः। कूजन्तो कलहंसमेखला यस्याः ताम्। सह पाकेन वर्त्तन्ते इति सपाकानि शस्यानि, तैः शस्यैः आहितः सम्पादितः पाण्डुता एव गुणः यस्याः तां भुवम् आसादितयौवनां प्राप्तयौवनां प्रियाम् इव उपजनं जनसमीपे अन्यत्र सखीसमक्षम्। समीपार्थे अव्ययीभावः। उपाससाद उपगतवान्। उपमालङ्कारः ॥ १ ॥

৬০। দিক্সমূহে দিব্য দুন্দুভিধ্বনি হইতে লাগিল। দিব্য পুষ্পবৃষ্টিপাতে আকাশে অপূর্ব্ব শোভা বিস্তারিত হইল। বেলাসংলগ্ন চঞ্চল বীচিরূপ বাহুশালী পয়োনিধি হর্ষোল্লসিতা ধরণীকে যেন ভারাবতরণরূপ প্রিয়বার্ত্তা বিজ্ঞাপন করতই আলিঙ্গন করিতে লাগিল।

তৃতীয় সর্গ সমাপ্ত ॥ ৩

১। অনন্তর জনপ্রিয় অর্জ্জুন কূজনতৎপর কলহংসরূপ মেখলান্বিতা, পরিপক্ক শস্য জন্য পাণ্ডুবর্ণা পৃথিবীকে সখীজনসমক্ষে কূজননিরত কলহংসবৎ মেখলামণ্ডিতা যুবতী রমণীর ন্যায় জনগণ সমীপে প্রাপ্ত হইলেন।

विनम्रशालिप्रसवौघशालिनी-
रपेतपङ्काः ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स स्थली-
रुपायनीभूतशरद्गुणश्रियः ॥ २ ॥
निरीक्ष्यमाणा इव विस्मयाकुलैः
सरोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमाः
मनोऽस्य जह्रुः शफरीविवृत्तयः ॥ ३ ॥

अन्वयः । विनम्रशालिप्रसवौघशालिनीः अपेतपङ्काः ससरोरुहाम्भसः उपायनीभूतशरद्गुणश्रियः उपसीम स्थलीः पश्यन् ननन्द ॥ वाच्य—तेन स्थलीः पश्यता ननन्दे ॥ २ ॥

अन्वयः । विस्मयाकुलैः उन्मीलितपद्मलोचनैः सरोभिः निरीक्ष्यमाणा इव हृतप्रियादृष्टिविलासविभ्रमाः शफरीविवृत्तयः अस्य मनः जह्रुः ॥ वाच्य—निरीक्ष्यमाणाभिरिव हृतप्रियादृष्टिविलासविभ्रमाभिः शफरीविवृत्तिभिः मनः जह्रे ॥ ३ ॥

विनम्रेति । सः अर्जुनः विनम्रशालिप्रसवौघशालिनीः अवनतशालिफलस्तोमशोभिनीः अपेतपङ्काः निष्पङ्काः ससरोरुहाणि अम्भांसि यासु ताः तथोक्ताः । उपायनीभूताः अर्जुनं प्रति उपहारीभूताः शरद्गुणश्रियः पूर्वोक्ताः शरद्धर्मसम्पदः यासु ताः । उपसीम ग्रामसीमासु, विभक्त्यर्थे अव्ययीभावः, समासान्तविधेः अनित्यत्वात् "अनश्च" इति समासान्तो न भवति । केचित् तु "अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नि" इत्यादौ नपुंसकप्रयोगदर्शनात् "नपुंसकादन्यतरस्याम्" इति विकल्पात् साधुः इति आहुः । स्थलीः अकृत्रिमाः भुवः । "जनपद" इत्यादिना अकृत्रिमार्थे ङीष् । पश्यन् ननन्द जहर्ष । अत्र शरद्गुणेषु तादात्म्येन आरोप्यमाणस्य उपायनस्य प्रकृते नन्दनक्रियोपयोगित्वात् परिणामालङ्कारः ॥ २ ॥

निरीक्ष्यमाणा इति । विस्मयाकुलैः आश्चर्यरसाविष्टैः अतएव उन्मीलितानि पद्मानि एव लोचनानि येषां तैः सरोभिरम्भोभिः निरीक्ष्यमाणाः इव स्थिता हृतः प्रियादृष्टिविलासानां विभ्रमः शोभा याभिः ताः तथोक्ताः

২। অর্জ্জুন দেখিলেন—গ্রামসমূহের প্রান্তে প্রান্তে অবস্থিত ভূখণ্ডসকল বিনম্র কলম ফলে সুশোভিত হইয়া রহিয়াছে; তাহাতে কর্দ্দম কিছুই নাই; জল যেখানে যাহা আছে তাহা পদ্ম-পরিশোভিত; যেন শরৎকালের গুণসম্পত্তিই নিজের প্রতি উপহারীভূত দেখিয়া তিনি আনন্দিত হইলেন।

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम् ।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥ ४ ॥

नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति ।
अवाप्तकिञ्जल्कविभेदमुच्चकै-
र्विवृत्तपाठीनपराहतं पयः ॥ ५ ॥

अन्वय। स सवारिजे वारिणि कलमस्य रामणीयकं पश्यन् अधिकं तुतोष। तथाहि सुदुर्लभे अनुरूपसङ्गमे (सति) प्रकर्षलक्ष्मीं अभिनन्दितुं कः न अर्हति॥ वाच्य—तेन कलमस्य रामणीयकं पश्यता अधिकं तुतुषे। केन प्रकर्षलक्ष्मीः अभिनन्दितुं नार्ह्यते॥ ४॥

अन्वयः। आविष्कृतफेनसन्तति अवाप्तकिञ्जल्कविभेदं उच्चकैः विवृत्तपाठीनपराहतं पयः तस्य स्थलपद्मिनीगतं वितर्कं नुनोद॥ वाच्य—आविष्कृतफेनसन्तातिना अवाप्तकिञ्जल्कविभेदेन विवृत्तपाठीन-पराहतेन पयसा स्थलपद्मिनीगतो वितर्कः नुनुदे॥ ५॥

इति मनोहरणे हेतूक्तिः। "विभ्रमः संशये भ्रान्तौ शोभायां च" इति वैजयन्ती। शफरीविवृत्तयः प्रोष्ठीस्फुरितानि अस्य अर्जुनस्य मनः जह्रुः॥ ३॥

तुतोषेति। सः अर्जुनः सवारिजे वारिणि कलमस्य शालिविशेषस्य "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः। रमणीयस्य भावः रामणीयकम्। "योपधाद्गुरूपोत्तमाद् वुञ्" तत् पश्यन् अधिकं तुतोष, अनुरूपसङ्गमात् इति भावः। तथाहि सुदुर्लभे अनुरूपसङ्गमे योग्यसमागमे लब्धे सति इति शेषः, प्रकर्षलक्ष्मीं योग्यसमागमननिमित्ताम् उत्कर्षसम्पदम् अभिनन्दितुं स्तोतुं कः न अर्हति? सर्वः अपि अभिनन्दति एव इत्यर्थः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः॥ ४॥

नुनोदेति। आविष्कृता प्रकटीकृता फेनसन्ततिः डिण्डीरसमूहः यस्य तथोक्तम्। "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः। अवाप्तः किञ्जल्क-

৩। স্থানে স্থানে সরোবরজলে শফরীকুল স্ফুরিত হইতেছিল। বিস্ময়াবেশে সরোবরেরা যেন তাহাদের পদ্মনেত্র উন্মীলিত করিয়া তাহা দেখিতেছিল। ঐ শফরীস্ফুরণ প্রণয়িনীর দৃষ্টিবিলাসবিভ্রম হরণ করিতেছিল। তাহাতে অর্জ্জুনের মন হরণ করিল।

৪। অর্জ্জুন পদ্মপূর্ণ জলে কলমধান্যের রমণীয়তা দেখিয়া অধিক পরিতুষ্ট হইলেন। বস্তুতঃ দুর্লভ যোগ্যসমাগম লব্ধ হইলে উৎকর্ষশ্রীর অভিনন্দন কে না করিয়া থাকে?

क्षतोर्म्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितं चौमविपाण्डु सैकतम् ॥ ६ ॥
मनोरमं प्रापितमन्तरं भ्रुवो-
रलङ्कृतं केसररेणुनाऽणुना ।
अलक्तताम्राधरपल्लवश्रिया
समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥

अन्वयः । शिथिलत्वम् आयता. शनैः शनैः शान्तरयेण वारिणा क्षतोर्म्मिरेखं तरङ्गितं चौमविपाण्डु समुद्रयोषितां सैकतं निरीक्ष्य सः रेमे ॥ वाच्य—तेन...निरीक्ष्य रेमे ॥ ६ ॥
अन्वयः । पाण्डाः सुतेन अणुना केसररेणुना अलङ्कृत मनोरम भ्रुवोरन्तरं प्रापितं बन्धुजीवकम्

विभेदः केसरापगमः येन तत् तथोक्तम् । कुतः ? उच्चकैः उच्चकं यथा तथा विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतं ताडितम् । "सहस्रदंष्ट्रः पाठीनः" इत्यमरः । पयः कर्त्तृ । तस्य अर्जुनस्य स्थलपद्मिनीगतं तद्गोचरम् इत्यर्थः । वितर्कं संशयं नुनोद चिच्छेद । पाठीनपराहत्या किञ्जल्कापायेन जलदर्शनात् स्थलपद्मिनीशङ्का निवृत्ता इत्यर्थः । अत्र निश्चयोत्तरसन्देहालङ्कारः ॥ ५ ॥

क्षतेति । सः अर्जुनः शिथिलत्वम् आयता गच्छता दिने दिने चीयमाणेन इत्यर्थः । अतएव शनैः शनैः शान्तरयेण अन्यथा ऊर्म्मिरेखानुदयात् इति भावः । वारिणा क्षताः ऊर्म्मयः पर्वाण्येव रेखाः राजयः यस्य तत् तथोक्तं तरङ्गा अस्य सञ्जाताः तरङ्गितं भङ्गिमत् । "तदस्य सञ्जातम्" इति इतच् । तत् चौमं दुकूलं तद्वत् विपाण्डु शुभ्रम् इति उपमालङ्कारः । समुद्रयोषितां नदीनां सिकता अस्य अस्तीति सैकतं पुलिनम् । "सिकताशर्कराभ्यां च" इति अण्प्रत्ययः । "तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्" इत्यमरः । निरीक्ष्य रेमे तुतोष ॥ ६ ॥

৫। কোথাও জলে ফেনপুঞ্জ ভাসিতেছিল; কিঞ্জল্কাপগম ঘটিয়াছিল; সেই জল পাঠীনমৎস্যের বিপরীত পরিবর্ত্তনে পরাহত হইয়া অর্জ্জুনের স্থলপদ্মিনীগত সংশয় অপনোদন করিয়াছিল।

৬। অর্জ্জুন দেখিলেন—শুভ্র, ভঙ্গিমযুত ক্ষৌম দুকূলবৎ নদীপুলিন দিয়া দিনে ক্ষীয়মাণ—সুতরাং শনৈঃ শনৈঃ শান্তবেগ বারিদ্বারা উর্ম্মিরেখা ধারণ করিয়াছে; দেখিয়া তিনি তুষ্ট হইলেন।

नवातपालोहितमाहितं मुहु-
र्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भःपुलकेन सर्पता ॥ ८ ॥

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥ ९ ॥

॥ विशेषकम् ॥

अलक्तताम्राधरपल्लवश्रिया समानयन्तीमिव महानिवेशौ पयोधरौ परितः मुहुः आहितं नवातपालोहितम् अरविन्दजं रजः सर्पता परिश्रमाम्भःपुलकेन चकासयन्तीं कपोलसंश्लेषि अवतंसकोत्पलं विलोचनत्विषा विभूषयन्तीं कलमस्य गोपिकां निरीक्ष्य शरदः कृतार्थता मेने ॥ वाच्य—पाण्डोः सुतः कृतार्थता मेने ॥ ७—९ ॥

ततः त्रिभिः शालिगोप्त्रीं वर्णयति—मनोरमामिति । अणुना सूक्ष्मेण केसरेषु किञ्जल्केषु । "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः । यः रेणुः परागः तेन अलङ्कृतम् अतएव मनः रमयति इति मनोरमम् । 'कर्मण्यण्' इत्यण् । भ्रुवोः अन्तरं प्रापितं भ्रूमध्ये निवेशितं बन्धुजीवकं बन्धुकपुष्पम् । "बन्धूको बन्धुजीवकः" इत्यमरः । अलक्तताम्रस्य लाक्षारागरक्तस्य अधरपल्लवस्य श्रिया शोभया समानयन्तीं समीकुर्वतीम् इव साम्यपरीक्षां कुर्वतीम् इव इत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ॥

नवेति । महान् निवेशः स्थानं ययोः तौ महानिवेशौ पीवरौ इत्यर्थः । पयोधरौ परितः स्तनयोः समन्तात् इत्यर्थः । "अभितः परितः समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । मुहुः आहितं निक्षिप्तं नवातपालोहितं बालातपताम्रम् अरविन्दजं रजः परागं सर्पता प्रसरता परिश्रमाम्भःपुलकेन स्वेदोद्भेदेन पुलकेन चकासयन्तीं शोभयन्तीं, चकास्तेर्ण्यन्तात् शतरि ङीप् । अलङ्करणं कुर्वतीम् । तत्र अपि विकृतता इति भावः ॥ ८ ॥

कपोलेति । पुनः कपोलसंश्लेषि यदवतंसकोत्पलं कर्णोत्पलं तद्विलो-

৭—৯। কোথাও কোন শালিরক্ষিকা রমণী সূক্ষ্ম সূক্ষ্ম কেসররেণুদ্বারা সমলঙ্কৃত মনোরম ভ্রূমধ্যগত বন্ধুকপুষ্পকে লাক্ষারাগরক্ত স্বীয় অধরপল্লবের শোভার সহিত যেন সমান করিয়াই

उपारताः पश्चिमरात्रिगोचरा-
दपारयन्तः पतितुं जवेन गाम्।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं
गवां गणाः प्रस्नुतपीवरौधसः॥ १०

अन्वयः। पश्चिमरात्रिगोचरात् उपारताः जवेन गां पतितुम् अपारयन्तः प्रस्नुतपीवरौधसः उत्सुकाः गवां गणाः तम् अवेक्षणोत्सुकं चक्रुः॥ वाच्य—उपारतैः अपारयद्भिः प्रस्नुतपीवरौधोभिः उत्सुकैः गवां गणैः सः अवेक्षणोत्सुकः चक्रे ॥ १० ॥

चनत्विषा विभूषयन्तीम् आभरणस्य अपि आभरणम् इति भावः। कलमं गोपायति इति गोपिकां शालिगोप्त्रीं ण्वुल्प्रत्ययः। निरीक्ष्य पाण्डोः सुतेन अर्जुनेन शरदः कृतार्थाया भावः कृतार्थता साफल्यम्। शरदः स्वगुणसम्पत्तिविनियोगलाभात् इति भावः। "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः"। मेने अमानि। मन्यतेः कर्म्मणि लिट्॥ ९॥

उपारता इति। पश्चिमा च असौ रात्रिश्च इति विशेषणसमासः। अपररात्रः इत्यर्थः। "पूर्वा दिक् पश्चिमं नभः" इत्यादिवत् एकदेशिशब्दस्य एकदेशशब्दसामानाधिकरण्यात् एकदेशे पर्य्यवसानं न तु पश्चिमः रात्रेः इति एकदेशिसमासः। तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणात् अतएव "अहःसर्वैकदेश:" इत्यादिना न समासान्तोऽपि तस्य अपि पूर्वापरादिसूत्रोक्तसमासविषयत्वात् इति। प्रकाशवर्षस्तु एकदेशिसमासम् एव आश्रित्य समासान्तमाह; तत् मृग्यम्। गावः चरन्ति अत्र इति गोचरः गवां जग्धिस्थानं वनम्। पश्चिमरात्रौ यः गोचरः तस्मात् उपारताः संनिवृत्ताः जवेन गां भुवं पतितुं धावितुम् अपारयन्तः अशक्नुवन्तः प्रस्नुतपीवरौधसः वत्सस्मरणात् स्रवत्पीनाः। "ऊधस्तु क्लीबमापीनम्" इत्यमरः। "ऊधसोऽनङ्" इति स्त्रीग्रहणं कर्त्तव्यम् इति नियमात् न अनङादेशः। उत्सुकाः वत्सेषु उत्कण्ठिताः गवां गणाः तम् अर्जुनम् अवेक्षणात्मकं दर्शनलालसं चक्रुः। "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्युभयत्र अपि अमरः। अत्र स्वभावोक्तिरलङ्कारः, "स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्" इति लक्षणात्॥ १०॥

তুলিয়াছে; পীবর পয়োধরযুগের চারিদিকে নবাতপালোহিত পদ্মপরাগ নিক্ষিপ্ত হইয়াছে; প্রসর্পিত স্বেদকণা পুলকভরে সেই পরাগকে সে শোভাময় করিয়াছে; তাহার নয়নের শোভায় সে তাহার কপোলসংশ্লিষ্ট অবতংস-পদ্মের শোভা সম্পাদন করিতেছে। ইহা দেখিয়া পাণ্ডুনন্দন শরতের কৃতার্থতাই মনে করিলেন।

परीतमुक्षापजये जयश्रिया
नदन्तमुच्चैः क्षतसिन्धुरोधसम्।
ददर्श पुष्टिं दधतं स शारदीं
सविग्रहं दर्पमिवाधिपं गवाम्॥ ११॥

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः।
शरन्नदीनां पुलिनैः कुतूहलं
गलद्दुकूलैर्जघनैरिवादधे॥ १२॥

अन्वयः। उक्षापजये जयश्रिया परीतम् उच्चैः नदन्तं क्षतसिन्धुरोधसं शारदीं पुष्टिं दधतं गवाम् अधिपं सविग्रहं दर्पमिव स ददर्श॥ वाच्य—तेन जयश्रिया परीतः उच्चैः नदन् क्षतसिन्धुरोधसा पुष्टिं दधत् गवामधिपः सविग्रहः दर्प इव ददृशे॥ ११॥

अन्वयः। हिमानीविशदैः गवां कदम्बकैः मन्थरं विमुच्यमानैः शरन्नदीनां पुलिनैः गलद्दुकूलैः जघनैरिव तस्य कुतूहलम् आदधे॥ वाच्य—गवां कदम्बकैः विमुच्यमानानि पुलिनैः गलद्दुकूलानि जघनानीव कुतूहलम् आदधुः॥ १२॥

परीतमिति। सः अर्जुनः उक्षापजये उक्षान्तरभङ्गे सति जयश्रिया परितः वेष्टितम् उच्चैः नदन्तं क्षतसिन्धुरोधसं रुग्णसरित्तटं शरदि भवां शारदीं पुष्टिम् अवयवोपचयं दधतं गवाम् अधिपं महोक्षं सविग्रहं मूर्त्तिमन्तम्। "कायो देहः क्लीवपुंसोः शरीरं वर्ष्म विग्रहः" इत्यमरः। दर्पम् इव इति उत्प्रेक्षा। ददर्श॥ ११॥

विमुच्यमानैरिति। हिमानीविशदैः हिमसङ्घातशुभ्रैः। "हिमानी हिमसंहतिः" इत्यमरः। 'इन्द्रवरुण" इत्यादिना ङीष्। तत्सन्नियोगात् आनुगागमश्च। गवां कदम्बकैः कर्त्तृभिः। "कदम्बकं समूहे स्त्रीफले पुष्पविशेषके" इत्यमरः। मन्थरं मन्दं विमुच्यमानैः अपि किमुत अवि-

১০। গোগণ শেবরাত্রের বিচরণ স্থান হইতে প্রত্যাবর্ত্তন করিতে গিয়া বেগে ভূ-পথে ধাবিত হইতে পারিতেছিল না; বৎস স্মরণে তাহাদের পীবর স্তনমণ্ডল হইতে ক্ষীরক্ষরণ হইতেছিল, তাহারা স্ব স্ব বৎসের প্রতি উৎকণ্ঠিত ছিল। এহেন গোগণ অর্জ্জুনকে দর্শনোৎসুক করিয়া তুলিয়াছিল।

১১। অর্জ্জুন দেখিলেন—একটা বড় বৃষ অন্য একটা বৃষকে হারাইয়া দিয়া জয়শ্রী লাভ করত উচ্চনাদ করিতে করিতে নদী তট খুঁড়িয়া শরৎকালোচিত শরীরপুষ্টিধারণপূর্ব্বক মূর্ত্তিমান্ দর্পের ন্যায় বিরাজ করিতেছে।

गतान् पशूनां सहजन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः।
ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्जवे ॥ १३ ॥

परिभ्रमन्मूर्द्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः।
मुखैश्चलत्कुण्डलरश्मिरञ्जितै-
र्नवातपामृष्टसरोजचारुभिः ॥ १४ ॥

अन्वयः। पाण्डवः पशूनां सहजन्मबन्धुतां गतान् गृहाश्रयं प्रेम वनेषु बिभ्रतः आर्ज्जवे गोभिः कृतानुकारान् इव गोपान् उपधेनु ददर्श ॥ वाच्य—पाण्डवेन ··बन्धुना गताः...बिभ्रतः···कृतानुकारा इव गोपाः ददृशिरे ॥ १३ ॥

अन्वयः। परिभ्रमन्मूर्द्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः चलत्कुण्डलरश्मिरञ्जितैः नवा-

मुच्यमानैरिति भावः। शरन्नदीनां सम्बन्धिभिः। शरद्ग्रहणं प्रावृड्-निवृत्त्यर्थं, तत्र पुलिनादर्शनात् इति भावः। पुलिनैः कर्त्तृभिः गलद्दुकूलैः जघनैः इव तस्य अर्ज्जुनस्य कुतूहलं कौतुकम् आदधे आहितम् ॥ १२ ॥

गतानिति। पाण्डवः अर्जुनः पशूनां गवां सह जन्म येषां ते सहजन्मानः सोदराः ते एव बन्धवः तेषां भावः तत्ता तां गतान् पशुषु सोदराभिमानवतः इत्यर्थः। गृहाश्रयं गृहविषयं प्रेम वनेषु बिभ्रतः वनेषु गृहाभिमानिन इत्यर्थः। आर्जवे ऋजुत्वे विधेयत्वे, गोभिः पशुभिः, कृतानुकारान् अनुकृतावस्थितान् इव इति उत्प्रेक्षा। ततः विधेयान् इत्यर्थः। गाः पाति इति गोपाः गोपालकाः। "आतोऽनुपसर्गे कः" इति कप्रत्ययः। तान् उपधेनु धेनुसमीपे, सामीप्यार्थे अव्ययीभावः। ददर्श। अत्र उत्प्रेक्षानुप्राणिता स्वभावोक्तिरलङ्कारः ॥ १३ ॥

अथ चतुर्भिः वल्लवीः नर्त्तकीसाम्येन वर्णयति—परिभ्रमन्निति।

১২। শরতের সমুদয় নদী পুলিন হইতে তুষারশুভ্র গোসমূহ ধীরে ধীরে সরিয়া গিয়াছে, তাহাতে সেই পুলিনসকল যেন উত্তোলিত-বসন জঘনসমূহের ন্যায় অর্জ্জুনের কুতূহল উৎপাদন করিতেছিল।

১৩। অর্জ্জুন দেখিলেন—ধেনুগণসমীপে কতকগুলি গোপ অবস্থান করিতেছে, ঐ সকল গোপ-গোসমূহে সোদরাভিমানী এবং বনেই গৃহাভিমানশালী; তাহাদের এতই সারল্য যে, তাহাতে যেন তাহারা গোগণেরই অবস্থার অনুকরণ করিতেছিল।

निबद्धनिश्वासविकम्पिताधरा
लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्त्तितत्रिका
विकर्षणैः पाणिविहारहारिभिः ॥ १५ ॥

व्रजाजिरेष्वम्बुदनादशङ्किनीः
शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्त्तनै-
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥ १६ ॥

तपामृष्टसरोजचारुभिः मुखैः निबद्धनिश्वासविकम्पिताधरा प्रस्फुरितैकपल्लवा लताः इव, व्यपोढपार्श्वैः पाणिविहारहारिभिः विकर्षणैः अपवर्त्तितत्रिका। व्रजाजिरेषु अम्बुदनादशङ्किनीः शिख-

मूर्द्धजाः षट्पदा इव इति उपमितसमासः। सरोजचारुभिः इति उपमानुसारात्। परिभ्रमद्भिः चलद्भिः मूर्द्धजैः षट्पदैः आकुलानि तैः दन्ताः केसराः इव इति पूर्ववत् समासः। स्मितोदयेन आदर्शिताः ईषत् प्रकाशिताः। दन्तकेसराः येषां तैः तथोक्तैः चलत्कुण्डलरश्मिरञ्जितैः चञ्चलकनककर्णवेष्टनप्रभानुलिप्तैः अतएव नवातपामृष्टं बालातपस्पृष्टं यत् सरोजं तद्वत् चारुभिः मुखैः उपलक्षिताः ॥ १४ ॥

निबद्धेति। निबद्धेन अनुरुद्धेन निश्वासेन विकम्पिताः अधराः यासां ताः तथोक्ताः अतएव प्रस्फुरितैकपल्लवाः प्रचलितैकपल्लवा इत्यर्थः, "क्वचित् सङ्ख्याशब्दस्य वृत्तिविषये वोपमार्थत्वं सप्तपर्णादिवत्" इति कैयटः। लता इव स्थिताः दैवात् एकपल्लवस्फुरणस्य अपि लोके सम्भवात् उपमा इव इयं न उत्प्रेक्षा। किञ्च व्यपोढानि विपरीतानि पार्श्वानि येषु तैः पाणिविहारहारिभिः पाणिविक्षेपमनोहरैः। "अङ्गहाराऽङ्गविक्षेप" इत्यमरः। विकर्षणैः मन्थगुणकर्षणैः अपवर्त्तितत्रिकाः सुस्खलितनितम्बाः यद्यपि "पृष्ठवंशाधरे त्रिकम्" इत्यमरः, तथापि अत्र नितम्बः लक्ष्यते तन्नैकट्यात् इति भावः ॥ १५ ॥

व्रजेति। व्रजाजिरेषु गोष्ठप्राङ्गणेषु। अधिकरणे सप्तमी। "व्रजो गोष्ठाध्ववृन्देषु" इति विश्वः। अम्बुदनादशङ्किनीः गर्ज्जितभ्रमवतीः इति

১৪—১৭। অর্জ্জুন দেখিলেন,—কতিপয় বল্লবী মন্থন কার্য্যে ব্যাপৃত। তাহাদের মুখমণ্ডল পরিচলিত কেশরূপ অলিকুলে সমাকুলিত, ঈষৎ হাস্যবিকাশে উহাদের দশনরূপ কেশর ঈষৎ

स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥ १७ ॥

कलापकम् ॥

शिखण्डिना योषितः उन्मदयन्तश्च मथा विवर्त्तनैः मुहुः प्रणुन्नेषु कुम्भेषु मृदङ्गमन्थरं नदत्सु सत्सु मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः वल्लवीः अभिप्रनृत्ताः वारयोषित इव सः निरीक्षितुं न उपरराम ॥ वाच्य—तेन न उपरेमे ॥ १४—१७ ॥

भ्रान्तिमदलङ्कारः । शिखण्डिनां योषितः मयूरीः । योषिद्ग्रहणं मौग्ध्यातिशयार्थम् । उन्मदयन्तः उन्मदाः कुर्वन्तः । "तत्करोति" इति ण्यन्तात् शतृप्रत्ययः । मथां मन्थनदण्डानाम् । "वैशाखमन्थमन्थन-मन्थानो मन्थदण्डके" इत्यमरः । विवर्त्तनैः परिभ्रमणैः मुहुः प्रणुन्नेषु कम्पितेषु इति स्वभावोक्तिः । कुम्भेषु कलसेषु मृदङ्गवत् मन्थरम् ईषन्नदत्सु स्वनवत्सु सत्सु इति लाप्य [वाद्य]साम्योक्तिः । भावलक्षणे सप्तमीयम् ॥ १६ ॥

स इति । मन्थरं मन्दम् आवल्गिताः चञ्चलाः पीवराः स्तनाः यासां ताः तथोक्ताः । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष् । परिश्रमेण क्लान्तानि ग्लानानि विलोचनोत्पलानि यासां ताः तथोक्ताः । वल्लवीः गोपीः । "गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः" इत्यमरः । अभिप्रनृत्ताः नृत्यन्तीः । "गत्यर्थाकर्म्मक" इत्यादिना कर्त्तरि क्तः । "मतिबुद्धि-पूजार्थेभ्यश्च" इति चकाराद्वर्त्तमानार्थत्वम् । वारयोषितः वेश्या इव । "वारस्त्री गणिका वेश्या" इत्यमरः । सः अर्जुनः निरीक्षितुम् । ईक्षतेः तुमुन् । न उपरराम न विरमति स्म । "उपाच्च" "विभाषाकर्म्मकात्" इति परस्मैपदम् । अत्र चतुःश्लोक्याम् उपमास्वभावोक्त्योः संसृष्टिः ॥ १७ ॥

প্রকাশিত, এবং চঞ্চল কুণ্ডলরশ্মির দ্বারা উহারা রঞ্জিত; সুতরাং বালাতপ-স্পৃষ্ট সরোজসমূহের ন্যায়ই ঐ সকল বল্লবীমুখ মনোজ্ঞ। বল্লবীরা শ্বাস রুদ্ধ করিতেছিল; তাই তাহাদের অধরদেশ বিকম্পিত হইতেছিল। সুতরাং প্রস্ফুরিতৈকপল্লবা লতার ন্যায়ই তাহাদের শোভা হইয়াছিল। তাঁহারা যে সুন্দর পাণিবিক্ষেপ সহকারে মন্থন রজ্জু আকর্ষণ বিকর্ষণ করিতেছিল, তাহাতে তাহাদের পার্শ্বদেশের বিবর্ত্তন হইতেছিল এবং নিতম্বদেশ দুলিতেছিল। তাহাদের মন্থনদণ্ডবিবর্ত্তনে দুগ্ধকুম্ভসকল বারংবার কম্পিত হইয়া মৃদঙ্গবৎ মন্থরধ্বনি করিতেছিল, তাহাতে গোষ্ঠপ্রাঙ্গণস্থ ময়ূরীরা উন্মাদিত হইয়াছিল। গোপীদিগের পীবরস্তন কিঞ্চিৎ কিঞ্চিৎ চঞ্চল হইতেছিল, এবং

पपात पूर्वां जहतो विजिह्मता
वृषोपभुक्तान्तिकशस्यसम्पदः।
रथाङ्गसीमन्तितसान्द्रकर्दमान्
प्रसक्तसम्पातपृथक्कृतान् पथः॥ १८॥

जनैरुपग्राममनिन्द्यकर्म्मभि-
र्विविक्तभावेङ्गितभूषणैर्वृताः।
भृशं ददर्शाश्रममण्डपोपमाः
सपुष्पहासाः स निवेशवीरुधः॥ १९॥

अन्वयः। सः पूर्वां विजिह्मतां जहतः वृषोपभुक्तान्तिकशस्यसम्पदः रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः पपात॥ वाच्य—तेन जिह्मता जहतः...सम्पदः...कर्द्दमा...पृथक्कृताः पन्थानः पेतिरे॥ १८॥

अन्वयः। सः उपग्रामम् अनिन्द्यकर्म्मभिः विविक्तभावेङ्गितभूषणैः वृताः आश्रममण्डपोपमाः सपुष्पहासाः निवेशवीरुधः भृशं ददर्श॥ वाच्य—तेन...निवेशवीरुध' ददृशिरे॥ १८॥

पपातेति। सः अर्जुनः पूर्वां प्रावृषेण्यां विजिह्मतां वक्रतां जहतः त्यजतः। शरदि निष्पङ्कत्वेन समरेखया एव सुगमत्वात् इति भावः। जहातेः शतृप्रत्ययः। वृषोपभुक्तान्तिकशस्यसम्पदः वृषभचर्वितप्रान्तशस्यसमृद्धीन्। "सुकृते वृषभे वृषः" इत्यमरः। सीमन्ताः इव सीमन्ताः चक्राङ्कपङ्क्तयः सीमन्तवन्तः कृताः सीमन्तिताः। मत्वन्तात् "तत्करोति" इति णिचि क्तः, णाविष्ठवद्भावान्मतुपो लुक्। रथाङ्गैः चक्रैः सीमन्तिताः सान्द्राः कर्दमाः घनीभूताः पङ्काः येषु तान् प्रसक्तसम्पातेन सन्ततसञ्चारेण पृथक्कृतान् पथः मार्गान् पपात जगाम इति स्वभावोक्तिः॥ १८॥

जनैरिति। स अर्जुनः उपग्रामं ग्रामेषु, विभक्त्यर्थे अव्ययीभावः। अनिन्द्यकर्म्मभिः। अनिषिद्धवृत्तिभिः वृत्तिश्च एकत्र कृष्यादिः, अन्यत्र शिलोञ्छादिः। विविक्तानि एकाग्राणि, भावः अभिप्रायः, इङ्गितं चेष्टा, भूषणम्

শ্রমভরে তাহাদের নয়নোৎপলসকল ক্লান্ত হইয়াছিল। অর্জ্জুন ঐ সকল বল্লবীদিগকে নর্ত্তনরতা বারবনিতাদিগের ন্যায় অবিরত দর্শন করিতে লাগিলেন।

১৮। পথসকল পূর্ব্ব বক্রতা পরিত্যাগ করিয়া শরতে সরল হইয়াছে; বৃষগণ পথের প্রান্তভাগের শস্যসকল খাইয়া ফেলিয়াছে; রথচক্রের চলনে পথের সীমন্তীকৃত কর্দ্দমসকল ঘনীভূত হইয়াছে; এবং সদা সঞ্চারে সমস্ত পথই পৃথক্‌কৃত হইয়াছে। অর্জ্জুন এহেন পথে যাইতে লাগিলেন।

ततः स सम्प्रेच्य शरद्गुणश्रियं
शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमनोदितोऽपि गां
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ २० ॥

इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः ।
जयश्रियं पार्थ पृथूकरोतु ते
शरत् प्रसन्नाम्बुरनम्बुवारिदा ॥२१॥

अन्वयः। ततः स यक्षः शरद्गुणश्रियं सम्प्रेच्य शरद्गुणालोकनलोलचक्षुषं तम् अनोदितोऽपि गाम् उवाच। तथाहि इङ्गितज्ञः अवसरे न अवसीदति॥ वाच्य—तेन यक्षेण शरद्गुणालोकनलोलचक्षुः सः अनोदितेनापि गाम ऊचे। इङ्गितज्ञेन न अवसद्यते ॥ २० ॥

अलङ्कारस्य येषां तथोक्तैः जनैः वृताः अधिष्ठिता इत्यर्थः। अतएव आश्रमेषु मुनिस्थानेषु ये मण्डपाः तदुपमाः। "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः। सपुष्पहासाः पुष्पविकाशसहिताः। "तेन सह" इत्यादिना बहुव्रीहिः। निवेशवीरुधः गृहगुल्मिनीः। "वीरुधो वल्लिगुल्मिन्यौ" इति वैजयन्ती। भृशं सादरं ददर्श। उपमालङ्कारः ॥ १९ ॥

तत इति। ततः स पूर्वोक्तः यक्षः शरद्गुणश्रियं सम्प्रेच्य दर्शनीयां वर्णनीयां च विचार्य इत्यर्थः। शरद्गुणालोकने लोलचक्षुषं सतृष्णदृष्टिम्। "लोलश्चलसतृष्णयोः" इत्यमरः। तम् अर्जुनम् अनोदितः अपि अपृष्टः अपि गां वाचम् उवाच। तथाहि इङ्गितज्ञः भावज्ञः। "इङ्गितं हृद्गतो भावः" इति विश्वः। अवसरे उक्तियोग्ये काले न अवसीदति न वाचं यच्छति। "नापृष्टः कस्यचिद् ब्रूयात्" इति निषेधस्तु अनाकाङ्क्षितोक्तिविषय इति भावः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ २० ॥

১৯। অর্জ্জুন গ্রামে গ্রামে প্রস্ফুট পুষ্পযুত বহু গৃহগুল্মিনী সাদরে দেখিতে লাগিলেন। দেখিলেন,—যাহাদের কর্ম্ম অগর্হিত এবং ভাব, ইঙ্গিত ও ভূষণ সকল বিবিক্ত, এহেন জনগণকর্ত্তৃক ঐ সকল গৃহগুল্মিনী অধিষ্ঠিত; সুতরাং উহারা আশ্রমস্থানস্থিত মণ্ডপনিচয়ের ন্যায়ই প্রতিভাত।

২০। অনন্তর সেই অর্জ্জুনসমভিব্যাহারী যক্ষ শরদ্গুণশ্রী অবলোকন করিয়া শরদ্গুণদর্শনে লোলদৃষ্টি অর্জ্জুনকে অপৃষ্ট হইয়াও কথা বলিতে লাগিল। বস্তুত ইঙ্গিতজ্ঞ ব্যক্তি কখন কথনোচিতকালে কথা না বলিয়া থাকে না।

उपैति शस्यं परिणामरम्यता
नदीरनौद्धत्यमपङ्कता महीम्।
नवैर्गुणैः सम्प्रति संस्तवस्थिरं
तिरोहितं प्रेम घनागमश्रियः॥ २२॥
पतन्ति नास्मिन् विशदाः पतत्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः।

अन्वयः। हे पार्थ! शिवायाः नियतेः आयतिरिव जगतः क्रियाः फलैः कृतार्थयन्ती प्रसन्नाम्बुः अनम्बुवारिदा इयं शरत् ते जयश्रियं पृथक्करोतु॥ वाच्य—आयत्या इव कृतार्थयन्त्या प्रसन्नाम्बुः अनम्बुवारिदया अनया शरदा जयश्रीः पृथक्क्रियताम्॥ २१॥

अन्वयः। परिणामरम्यता शस्यम् उपैति, अनौद्धत्यं नदीः उपैति, अपङ्कता महीम् उपैति। तथाहि सम्प्रति नवैः गुणैः संस्तवस्थिरमपि घनागमश्रियः प्रेम तिरोहितम्॥ वाच्य—शस्यं परिणामरम्यतया नदी अनौद्धत्येन मही अपङ्कतया उपेयते। नवाः गुणाः प्रेम तिरोहितवन्तः॥ २२॥

इयमिति। हे पार्थ! शिवायाः कल्याणकारिण्याः नियतेः। "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। शुभावहदैवस्य आयतिः फलदानकालः सा एव जगतः क्रियाः कृष्यादिकर्माणि फलैः लाभैः। "लाभनिष्पत्तियोगेषु बीजभावे धने फलम्" इति वैजयन्ती। कृतार्थयन्ती सफलयन्ती प्रसन्नाम्बुः निर्मलोदका अनम्बुवारिदा निर्जलमेघा, अनेन विशेषणद्वयेन द्यावापृथिव्योः आनुकूल्यं सूचयति। इयं शरत् ते जयश्रियं पृथक्करोतु। आशीरर्थे लोट्॥ २१॥

उपैतीति। शस्यं व्रीह्यादिकं परिणामेन परिपाकेन या रम्यता सा(कर्त्री) उपैति। नदीः अनौद्धत्यं गम्यरूपत्वम् (कर्त्तृ) उपैति। महीम् अपङ्कता निष्पङ्कत्वम् ( कर्त्री ) उपैति। तथाहि सम्प्रति नवैः गुणैः पूर्वोक्तैः शरद्धर्मैः संस्तवेन परिचयेन स्थिरं दृढम् अपि घनागमश्रियः प्रावृड्लक्ष्म्याः सम्बन्धि तद्विषयम् इत्यर्थः, प्रेम तिरोहितं निरर्थकं कृतम् इत्यर्थः। गुणतन्त्राः प्रेमाणः न परिचयतन्त्रा इति भावः। वास्तवालङ्कारः॥ २२॥

२१। [ যক্ষ কহিল ] হে পার্থ। এই যে কল্যাণকারিণী নিয়তির ফলদানকালের ন্যায় ফলদ্বারা জগতের কৃষ্যাদি-কর্ম্ম-নির্ব্বাহকারিণী নির্ম্মলোদকা নির্জ্জলমেঘা শরৎ, ইনি তোমার জয়শ্রী বৃদ্ধি করুন।

২২। শস্যকে—পরিপাকরম্যতা, নদীসকলকে—অনুদ্ধতভাব, মহীকে—পঙ্কহীনতা প্রাপ্ত হইতেছে। বস্তুতঃ সম্প্রতি নবীন শরদ্গুণরাশি, ঘনাগমলক্ষ্মীর প্রেম পূর্ব্বপরিচয়ে সুদৃঢ় হইলেও তাহা নিষ্ফল ( নাকচ ) করিয়া দিতেছে।

तथापि पुष्णाति नभः श्रियं परां
न रम्यमाहार्यमपेक्षते गुणम् ॥ २३ ॥
विपाण्डुभिर्म्लानतया पयोधरै-
श्च्युताचिराभागुणहेमदामभिः ।
इयं कदम्बानिलभर्त्तुरत्यये
न दिग्वधूनां कृशता न राजते ॥२४॥

अन्वयः । अस्मिन् विशदाः पतत्रिणः न पतन्ति धृतेन्द्रचापाः पयोदपङ्क्तयः च न पतन्ति । तथापि नभः परां श्रियं पुष्णाति । तथाहि रम्यं (वस्तु) आहार्यं गुणं न अपेक्षते ॥ वाच्य—विशदैः पतत्रिभिः न पत्यते, धृतेन्द्रचापाभिः पयोदपङ्क्तिभिः न पत्यते । नभसा परा श्रीः पुष्यते । रम्येण आहार्यो गुणो न अपेक्ष्यते ॥ २३ ॥

अन्वयः । कदम्बानिलभर्त्तुरत्यये म्लानतया विपाण्डुभिः च्युताचिराभागुणहेमदामभिः पयोधरैः दिग्वधूनाम् इयं कृशता न राजते न ॥ वाच्य—अनया कृशतया न राज्यते न ॥ २४ ॥

पतन्तीति । अस्मिन् नभसि विशदाः पतत्रिणः बलाकाः न पतन्ति न प्रसरन्ति, धृतेन्द्रचापाः पयोदपङ्क्तयश्च न पतन्ति । तथापि शोभाकारणाभावेऽपि नभः परां श्रियं शोभां पुष्णाति । तथाहि रम्यं स्वभावसुन्दरं वस्तु आहार्यम् आरोप्यमाणं गुणं न अपेक्षते । तत्र स्वभावस्य एव समर्थत्वात् इति भावः । अत्र अर्थान्तरन्यासः ॥ २३ ॥

विपाण्डुभिरिति । कदम्बानिलशब्देन वर्षर्तुः उपलक्ष्यते । स एव भर्त्ता तस्य अत्यये विरहे म्लानतया निर्जलतया दुर्बलतया च विपाण्डुभिः च्युतानि रहितानि अचिराभा विद्युत् तस्या गुणा एव हेमदामानि सुवर्णसूत्राभरणानि येभ्यः तैः पयोधरैः अम्भोदैः, अन्यत्र स्तनैः उपलक्षितानाम् । "स्तनाम्भोदौ पयोधरौ" इति वैजयन्ती । दिश एव वध्वः तासाम् इयं कृशता न राजते इति न, किन्तु राजत एव भर्त्तृवियुक्तत्वात् । "आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा" इति स्मरणात् इति भावः । सामान्यतः प्रसक्तम् अराजनं कार्श्यस्य एकेन नञानूद्य द्वितीयेन निषेधति । यथाह वामनः—"सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति । अत्र रूपकालङ्कारः स्फुट एव ॥ २४ ॥

২৩। শারদ আকাশে বলাকাশ্রেণী উড়িতেছে না; ইন্দ্রধনু লইয়া মেঘরাজিও উঠিতেছে না, তথাপি আকাশ পরমশোভা ধারণ করিতেছে। ফলতঃ যাহা স্বভাবরম্য বস্তু, তাহা কখন আহার্য্য গুণের অপেক্ষা করে না।

২৪। বর্ষাঋতুরূপ পতির বিরহে দিগঙ্গনাগণ পরিম্লান হওয়ায় পয়োধরসকল পাণ্ডুরতা ধারণ-

विहाय वाञ्छामुदिते मदात्यया-
दरक्तकण्ठस्य रुते शिखण्डिनः।
श्रुतिः श्रयत्युन्मदहंसनिःस्वनं
गुणाः प्रियत्वेऽधिकृता न संस्तवः॥२५॥

अमी पृथुस्तम्बभृतः पिशङ्गतां
गता विपाकेन फलस्य शालयः।
विकासि वप्राम्भसि गन्धसूचितं
नमन्ति निघ्रातुमिवासितोत्पलम्॥२६॥

अन्वयः। मदात्ययात् अरक्तकण्ठस्य शिखण्डिनः उदिते रुते वाञ्छां विहाय श्रुतिः उन्मदहंसनिःस्वनं श्रयति। तथाहि प्रियत्वे गुणाः अधिकृताः, संस्तवः न॥ वाच्य—श्रुत्या उन्मदहंसनिःस्वनः श्रीयते। गुणैः अधिकृतं न संस्तवेन॥ २५॥

अन्वयः। अमी पृथुस्तम्बभृतः फलस्य विपाकेन पिशङ्गतां गताः, शालयः वप्राम्भसि विकासि गन्धसूचितम् असितोत्पलं निघ्रातुमिव नमन्ति॥ वाच्य—अमीभिः पृथुस्तम्बभृद्भिः…पिशङ्गतां गतैः शालिभिः …नम्यते॥ २६॥

विहायेति। मदात्ययात् मदक्षयात् अरक्तकण्ठस्य अश्राव्यकण्ठस्य कण्ठशब्देनात्र तद्गतः स्वरः लक्ष्यते, शिखण्डिनः मयूरस्य सम्बन्धिनि उदिते उच्चैःस्वरे रुते कूजिते वाञ्छां विहाय श्रुतिः श्रोत्रम्। "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः। उन्मदहंसनिःस्वनं मत्तमरालकूजितं श्रयति भजते। ननु अकाण्डे परिचितपरिहारेण अपरिचिते कथं प्रीत्युदयः इत्याशङ्क्य अर्थान्तरं न्यस्यति—गुणा इति। प्रीणाति इति प्रियः। "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। प्रियत्वे प्रीतिकरत्वे गुणाः अधिकृताः नियुक्ताः संस्तवः परिचयः न अधिकृतः न समर्थः, प्रेमाधाने गुणवत्त्वं प्रयोजकं न परिचय इत्यर्थः॥ २५॥

अमी इति। अमी पृथून् स्तम्बान् गुच्छान् बिभ्रति पृथुस्तम्बभृतः।

করিয়াছে; বিদ্যাদ্গুণরূপ হেমদামরাজি তাহা হইতে বিচ্যুত হইয়াছে। এই কারণে ঐ সকল দিগঙ্গনার কৃশতাই প্রকাশ পাইতেছে।

২৫। মদাপগমে অশ্রাব্যস্বর ময়ূরের উচ্চারিত উচ্চ কূজনে স্পৃহা পরিত্যাগ করিয়া শ্রোত্র এক্ষণে মত্তমরালকূজনের আশ্রয় লইতেছে। বস্তুতঃ প্রীতিব্যাপারে গুণসমূহেরই অধিকার; কিন্তু পরিচয়ের নহে। অর্থাৎ ময়ূরের কণ্ঠস্বর পূর্ব্বপরিচিত বটে, কিন্তু শরতে তাহা নির্গুণ বলিয়া অশ্রাব্য। অধুনা অপরিচিত হইলেও মত্ত মরালস্বরই গুণযুক্ত বলিয়া শ্রাব্য।

मृणालिनीनामनुरञ्जितं त्विषा
विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गितं
द्रुतं धनुःखण्डमिवाहिविद्विषः ॥२७॥

विपाण्डुसंव्यानमिवानिलोद्धतं
निरुन्धतीः सप्तपलाशजं रजः ।
अनाविलोन्मीलितबाणचक्षुषः
सपुष्पहासा वनराजियोषितः ॥ २८ ॥

अन्वयः । मृणालिनीनां त्विषा अनुरञ्जितम अम्भोजपलाशशोभया विभिन्नं स्फुरच्छालिशिखापिशङ्गितं द्रुतम् अहिविद्विषः धनुःखण्डमिव स्थितं पयः, विपाण्डु अनिलोद्धतं सप्तपलाशजं रजः निरुन्धतीः

"स्तम्बो गुच्छस्तृणादिनः" इत्यमरः । फलस्य प्रसवस्य विपाकेन परिणामेन पिशङ्गतां गताः शालयः व्रीहिविशेषाः । वप्राम्भसि केदारोदके । "पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्" इत्यमरः । विकसति इति विकासि विकसितं गन्धेन सूचितं ज्ञापितम् असितोत्पलं निघ्रातुम् आघ्रातुम् इव नमन्ति । "निध्यातुमिव" इति पाठे द्रष्टुम् इत्यर्थः । निर्वर्णयितुं वा । "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः । अत्र फलभारात् नमनस्य निघ्राणफलकत्वम् उत्प्रेक्ष्यते इति फलोत्प्रेक्षा ॥ २६ ॥

अथ चतुर्भिः कलापकमाह—मृणालिनीनामिति । मृणालिनीनां पद्मलतानां त्विषा हरिद्वर्णेन अनुरञ्जितं तद्वर्णताम् आपादितम् इत्यर्थः । तथा अम्भोजपलाशशोभया पद्मदलकान्त्या आरुण्येन इत्यर्थः । विभिन्नं मिश्रितम् । तथा स्फुरच्छालिशिखापिशङ्गितं स्फुरद्भिः कलमाग्रैः पिङ्गलीकृतम् इत्थं नानावर्णत्वात् द्रुतं विगलितं पलायितम् अहिविद्विषः वृत्रघ्नतः इन्द्रस्य "सर्पे वृत्रासुरेऽप्यहिः" इति वैजयन्ती । धनुःखण्डम् इव स्थितम् । "नित्यं समासेऽनुत्तरपदस्थस्य" इति विसर्जनीयस्य षत्वम् । पयः वप्राम्भः अपदिश्य व्याजीकृत्य धावताम् इत्यागामिना सम्बन्धः । अत्र धनुःखण्डस्य द्रुतस्य लोके अप्रसिद्धत्वात् उत्प्रेक्षा इयम्, न उपमा ॥ २७ ॥

*

২৬। এই সকল পৃথুগুচ্ছধারী ফলপাক-পিশঙ্গ শালি কেদারজলে বিকসিত গন্ধসূচিত নীলোৎপলের আঘ্রাণ লইবার জন্যই যেন নত হইয়া পড়িয়াছে।

২৭—৩০। এ সময়ের জল মৃণালিনীসমূহের প্রভাপুঞ্জে অনুরঞ্জিত হইয়াছে। পদ্মপলাশের

अदीपितं वैद्युतजातवेदसा
सिताम्बुदच्छेदतिरोहितातपम्।
ततान्तरं सान्तरवारिशीकरैः
शिवं नभोवर्त्म सरोजवायुभिः ॥ २९ ॥

सितच्छदानामपदिश्य धावतां
रुतैरमीषां ग्रथिताः पतत्त्रिणाम्।
प्रकुर्वते वारिदरोधनिर्गताः
परस्परालापमिवामला दिशः ॥ ३० ॥

अनाविलोन्मीलितबाणचक्षुषः सपुष्पहासा वनराजियोषितः वैद्युतजातवेदसा अदीपितं सिताम्बुदच्छेदतिरोहितातप सान्तरवारिशीकरैः ततान्तरं सरोजवायुभिः शिवं नभोवर्त्म च अपदिश्य धावताम् अमीषां सितच्छदानां पतत्त्रिणां रुतैः ग्रथिताः वारिदरोधनिर्गताः अमलाः दिशः परस्परालाप प्रकुर्वते इव ॥ वाच्य—......ग्रथिताभिः वारिदरोधनिर्गताभिः अमलाभिः दिग्भिः परस्परालाप इव प्रक्रियते ॥ २७—३० ॥

विपाण्डुमिति। विपाण्डु शुभ्रम् अनिलोद्धतम् अनिलोत्क्षिप्तम्। सप्त सप्त पलाशानि पत्राणि पर्वसु येषां ते वृक्षाः सप्तपलाशाः। क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् इति उक्तम्। तेषां पुष्पाणि सप्तपलाशानि। "द्विहीनं प्रसवे सर्वम्" इत्यमरः। "फले लुक्" इत्यणो लुक्। तेषु जातं सप्तपलाशजं रजः परागं संव्यानम् उत्तरीयम् इव। "संव्यानमुत्तरीयं च" इत्यमरः। निरुन्धतीः निवारयन्तीः प्रावृतवतीः इति यावत्। अनाविलानि अकलुषाणि उन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषि इव यासां ताः तथोक्ताः। "नीलस्त्वर्थगलो दासी बाण ओदनपाक्यपि" इति धन्वन्तरिः। पुष्पाणि हासा इव तैः सह वर्त्तन्ते इति सपुष्पहासाः। वनराजयः योषित इव वनराजियोषितः ताः अपदिश्य इति अन्वयः। अत्र संव्यानम् इव इति उपमा एव अन्यत्र उपमितसमासे लिङ्गम्। यथा काचित् केनचित् कामुकेन आक्षिप्तं स्तनांशुकं निरुन्धे तद्वत् इति भावः ॥ २८ ॥

अदीपितमिति। वैद्युतजातवेदसा वैद्युताग्निना अदीपितम् अप्रकाशितम्, विद्युत्प्रकाशस्य दृष्टिविघातकत्वात् तद्राहित्यं गुण इति भावः।

শোভাসহ মিশিয়া গিয়াছে। এবং উজ্জ্বল কলমাগ্রভাগদ্বারা পিঙ্গলীকৃত হইয়াছে। এইরূপে উহা নানাবর্ণ বলিয়া বিগলিত ইন্দ্রচাপখণ্ডের ন্যায়ই বিরাজ করিতেছে। পুষ্পহাস্যযুক্ত বনরাজিরমণীরা

॥ कलापकम् ॥

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयूथपङ्क्तयः।
असक्तमूधांसि पयः क्षरन्त्यमू-
रुपायनानीव नयन्ति धेनवः॥ ३१॥

अन्वयः। विहारभूमेरभिघोषम् उत्सुकाः च्युतयूथपङ्क्तयः अमूः धेनवः असक्तं पयः क्षरन्ति ऊधांसि शरीरजेभ्यः उपायनानीव नयन्ति॥ वाच्य—उत्सुकाभिः च्युतयूथपङ्क्तिभिः अमूभिः धेनुभिः पयः क्षरन्ति, ऊधांसि उपायनानीव नीयन्ते॥ ३१॥

सिताम्बुदानां च्छेदैः खण्डैः तिरोहितातपम्। न दृष्टिबाधा नापि आतपबाधः इति भावः। सान्तरवारिशीकरैः विरलाम्बुकणैः ततान्तरं व्योममध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म च अपदिश्य इति। स्वभावोक्तिः अलङ्कारः॥ २८॥

सितेति। अपदिश्य धावताम् इति पूर्वश्लोकद्वयोक्तं पयःप्रभृतिकम् उद्दिश्य धावताम् अमीषां सितच्छदानां पतत्रिणां हंसानाम्। "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः" इत्यमरः। रुतैः शब्दैः ग्रथिताः दृब्धाः। "ग्रथितं गुम्फितं दृब्धम्" इत्यमरः। वारिदरोधनिर्गताः मेघोपरोधनिर्मुक्ताः अतएव अमलाः प्रसन्नाः दिशः परस्परालापं प्रकुर्वते इव दिष्ट्या मेघोपरोधनिर्मुक्ताः चिरात् उच्छ्वसिताः इति हंसकूजितव्याजेन परस्परम् आलपन्ति इव इति उत्प्रेक्षा॥ ३०॥

विहारेति। विहारभूमेः अपरगात्रगोचरात् इत्यर्थः। आगच्छन्त्यः इति शेषः। अभिघोषम् उत्सुकाः व्रजं प्रति उत्कण्ठिताः, वत्सप्रेम्णा इति भावः। "घोष आभीरपल्ली स्यात्" इत्यमरः। च्युता त्रुटिता यूथानां कुलानां पङ्क्तिः श्रेणीबन्धः यासां ताः तथोक्ताः। "सजातीयैः कुलं यूथम्" इत्यमरः। अमूः धेनवः असक्तम् अप्रतिबन्धं पयः क्षीरं क्षरन्ति स्रवन्ति। वत्सस्मरणात् प्रस्रवन्ति इत्यर्थः। क्षरतः शतृप्रत्ययः। ऊधांसि शरीरजेभ्यः अपत्येभ्यः उपायनानि इव अतितोषकारीणि इव इति उत्प्रेक्षा। नयन्ति

স্বচ্ছ বাণপুষ্পরূপ নেত্র উন্মীলিত করিয়া যেন অনিলচালিত ধবলসপ্তপর্ণপরাগরূপ উত্তরীয় বস্ত্র ধারণ করিয়াছে। নভোমার্গের অভ্যন্তর বিরল জলকণাসমূহে ব্যাপ্ত হইয়াছে। আকাশপথে বৈদ্যুতাগ্নির প্রকাশ এখন আর নাই, শুভ্র মেঘখণ্ডে উহার আতপচ্ছটা তিরোহিত হইয়াছে। এবং কমলসম্পৃক্ত অনিলদ্বারা উহা রমণীয় হইয়া উঠিয়াছে। এই সকলের উদ্দেশেই ঐ মরালকুল ধাবিত হইতেছে। উহাদের ধ্বনিগুম্ফিত মেঘরোধরহিত প্রসন্ন দিক্‌সমূহ যেন পরস্পর আলাপ-আপ্যায়নই করিতেছে।

जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी।
द्युतिं समग्रां समितिर्गवामसा-
वुपैति मन्त्रैरिव संहिताहुतिः॥ ३२॥

कृतावधानं जितबर्हिणध्वनौ
सुरक्तगोपीजनगीतनिःस्वने।
इदं जिघत्सामपहाय भूयसीं
न शस्यमभ्येति मृगीकदम्बकम्॥ ३३॥

अन्वयः। जगत्प्रसूतिः जगदेकपावनी तनयैः व्रजोपकण्ठम् उपेयुषी असौ गवां समितिः मन्त्रैः संहिताहुतिरिव समग्रां द्युतिम् उपैति॥ वाच्य——…प्रसूत्या…पावन्या…उपेयुष्या अमुया गवां समित्या संहिताहुत्येव समग्रा द्युतिः उपेयते॥ ३२॥

अन्वयः। जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने कृतावधानम् इदं मृगीकदम्बक भूयसीं जिघत्सां अपहाय शस्यं न अभ्येति॥ वाच्य——…कृतावधानेन अनेन मृगीकदम्बकेन… शस्यं न अभीयते॥ ३३॥

प्रापयन्ति। यथा लोके कुतश्चित् प्रवासात् एत्य मातरः किञ्चित् खाद्यम् आनयन्ति तद्वत् इति भावः॥ ३१॥

जगदिति। जगत्प्रसूतिः जगत्कारणम् आज्यादिहविर्द्वारेण इति भावः। जगताम् एकपावनी मुख्यशोधनी व्रजोपकण्ठं गोष्ठान्तिकम्। "दूरान्तिकार्थेभ्यो द्वितीया च" इति द्वितीया। "उपकण्ठान्तिकाभ्यर्णाभ्यग्राः" इत्यमरः। तनयैः वत्सैः उपेयुषी सङ्गता। "उपेयिवाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तः निपातः। "उगितश्च" इति ङीप्। असौ गवां समितिः संहतिः। मन्त्रैः ऋगयजुरादिभिः। "मन्त्रो ऋगादिगुह्योक्तिः" इति वैजयन्ती। संहिता योजिता आहुतिः इव, समग्रां द्युतिम् उपैति। आहुतिः अपि जगत्प्रसूतिः जगदेकपावनी च। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मरणात् इति भावः॥ ३२॥

৩১। কতকগুলি ধেনু শেষরাত্রির বিচরণস্থান হইতে ব্রজাভিমুখগমনে উৎকণ্ঠিত হইয়া যূথভ্রষ্ট হইয়াছে। তাহাদের আপান (স্তন) সকল অবাধে ক্ষীর ক্ষরণ করিতেছে। তাহারা যেন ঐ সকল আপান আপনাদের অপত্যদিগের উপহারের জন্যই আনয়ন করিয়াছে।

৩২। ঐ গাভীসকল জগতের কারণ এবং একমাত্র পাবক, উহারা বৎসগণসহ গোষ্ঠান্তিকে উপনীত হইয়া মন্ত্রযোজিত আহুতির ন্যায় পরম দ্যুতি প্রাপ্ত হইল।

असावनास्थापरयावधीरितः
सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन् कलमः सहाम्भसा
मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४ ॥

अमी समुद्भूतसरोजरेणुना
हृता हृतासारकणेन वायुना ।

अन्वयः । शिरसा नमन्नपि अनास्थापरया सरोरुहिण्या अवधीरितः अम्भसा सह शुष्यन् असौ कलमः मनोभुवा तप्त इव अभिपाण्डुताम् उपैति ॥ वाच्य—नमतापि अवधीरितेन शुष्यता अमुना कलमेन तप्तेनेव अभिपाण्डुता उपेयते ॥ ३४ ॥

कृतेति । जितबर्हिणध्वनौ केकानुकारिणि इत्यर्थः । एतेन षड्ज-स्वरप्रायं गायन्ति इति गम्यते । यथाह मातङ्गः—"षड्जं मयूरो वदति" इति । गाः पान्ति इति गोपाः तेषां भार्याः गोप्यः "आतोऽनुपसर्गे कः" इति कप्रत्ययः । "पुंयोगादाख्यायाम्" इति ङीष् । ता एव जनः सुरक्तः मधुरकण्ठः यः गोपीजनः वल्लवीजनः तस्य गीतनिःस्वने गाने कृतावधानम् एकाग्रचित्तम् इदं पुरोवर्त्ति मृगीकदम्बकं कर्त्तृ भूयसीम् अतिमहतीं जिघत्साम् अत्तुम् इच्छाम् । अदेः सन्नन्तात् अप्रत्ययः । "लुङ्सनोर्घस्लृ" इति घस्लादेशः । अपहाय हित्वा शस्यं न अभ्येति न उपैति । गीता-सक्त्या क्षुधाम् अपि न गणयति इत्यर्थः ॥ ३३ ॥

असाविति । शिरसा अग्रेण मूर्ध्ना नमन् प्रणमन् अपि अनास्था-परया अनादरपरया सरोरुहिण्या अवधीरितः, अवज्ञातः, अम्भसा सहचर-भूतेन इति भावः । शुष्यन् असौ कलमः शालिविशेषः मनोभुवा तप्त इव कामार्त्त इव अभिपाण्डुताम् उपैति । अत्र अनास्थापरया इति प्रकृत-सरोरुहिणीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाप्रतीतिः समासोक्तिः, उत्तिष्ठ-मानायाः सरोरुहिण्याः प्रतीयमानया नायिकया शुद्धभेदे अपि अभेदलक्षणा-तिशयोक्तिमहिम्ना अवधीरणक्रियासम्बन्धात् निर्वहन्ती मनोभुवा तप्त इव इति उत्प्रेक्षानिर्वाहिका इति अतिशयोक्त्यनुप्राणितसमासोक्त्युपमयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

৩৩। এই সম্মুখস্থ মৃগীগণ মধুরকণ্ঠ গোপীজনের ময়ূরকণ্ঠজয়ী গীতরবে একাগ্রচিত্ত হইয়াছে। উহারা ভূয়সী ভক্ষণেচ্ছা পরিত্যাগপূর্ব্বক শস্যাভিমুখে আর যাইতেছে না।

৩৪। ঐ কলম শিরোভাগ দ্বারা প্রণত হইলেও অনাদরিণী সরোজিনীকর্ত্তৃক অবজ্ঞাত হইয়া সহচরস্বরূপ সলিলসহ শুকাইতে শুকাইতে কামার্ত্তবৎ একান্ত পাণ্ডুভাব প্রাপ্ত হইয়াছে।

उपागमे दुश्चरिता इवापदां
गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३५ ॥
मुखैरसौ विद्रुमभङ्गलोहितैः
शिखाः पिशङ्गीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला
धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥ ३६ ॥
इति कथयति तत्र नातिदूरा-
दथ ददृशे पिहितोष्णरश्मिबिम्बः ।

अन्वयः। समुद्धृतसरोजरेणुना हृतासारकणेन वायुना हृतः अमी शिलीमुखाः आपदाम् उपागमे दुश्चरिता इव गतिं निश्चेतुं न अलम् ॥ वाच्य—...हृतैः अमीभिः शिलीमुखैः दुश्चरितैः इव न अलम ॥ ३५ ॥

अन्वयः। विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः कलमस्य शिखाः बिभ्रती असौ व्यक्तशिरीषकोमला शुकावलिः गोत्रभिदः धनुःश्रियम् अनुगच्छति। वाच्य—...शिखाः बिभ्रत्या...कोमलया अमुया शुकावल्या धनुःश्रीः अनुगम्यते ॥ ३६ ॥

अमी इति। समुद्धृतसरोजरेणुना इति सौरभ्योक्तिः। हृतासारकणेन उपात्ताम्बुकणेन इति शैत्योक्तिः। "धारासम्पात आसारः" इत्यमरः। वायुना हृताः आकृष्टाः अमी शिलीमुखाः भृङ्गाः। आपदाम् उपागमे राजादिभयागमे दुश्चरिताः दुष्टकर्माणः चौरादयः इव। गम्यते इति गतिं गन्तव्यदेशम्। "देशोपायगमे गतिः" इति वैजयन्ती। निश्चेतुं न अलं न समर्थाः। एकत्र वायोः सार्वत्रिकत्वेन उपादानात् अनिश्चयात् अन्यत्र भयान्धत्वात् इति भावः ॥ ३५ ॥

मुखैरिति। विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः पिशङ्गवर्णाः कलमस्य शिखाः शाल्यग्राणि बिभ्रती व्यक्तशिरीषकोमला विकसितशिरीषसवर्णा असौ शुकावलिः गोत्रभिदः इन्द्रस्य धनुषः श्रियम् अनुगच्छति अनुकरोति, नानावर्णत्वात् इन्द्रधनुः इव आभाति इति उपमालङ्कारः ॥ ३६ ॥

৩৫। ঐ সকল ভৃঙ্গ পদ্মপরাগবাহী জলকণহারী বায়ুকর্তৃক আকৃষ্ট হইয়া রাজাদিভয় উপস্থিত হইলে দুষ্কর্ম্মা চৌরাদির ন্যায় আপন গন্তব্য দেশ নিশ্চয় করিতে সমর্থ হইতেছে না।

৩৬। ফুল্ল শিরীষবৎ কোমলাকৃতি শুকাবলী বিদ্রুমভঙ্গবৎ লোহিতবর্ণ মুখদ্বারা পিশঙ্গ কলমশিখা ধারণ করত ইন্দ্রধনুর শোভার অনুকরণ করিতেছে।

विगलितजलभारशुक्लभासां
निचय इवाम्बुमुचां नगाधिराजः ॥ ३७ ॥

तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरि हिमानीगौरमासाद्य जिष्णुः ।
व्यपगतमदरागस्यानुसस्मार लक्ष्मी-
मसितमधरवासो बिभ्रतः सीरपाणेः ॥ ३८ ॥

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
शरद्वर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

अन्वयः । अथ तत्र इति कथयति सति नातिदूरात् पिहितोष्णरश्मिबिम्बः नगाधिराजः विगलितजलभारशुक्लभासाम् अम्बुमुचां निचय इव ददृशे ॥ वाच्य—(अर्जुनः)...रश्मिबिम्बं नगाधिराजम् अम्बुमुचां निचयमिव ददर्श ॥ ३७ ॥

अन्वयः । जिष्णुः अतनुभिः वनराजिभिः श्यामितोपत्यकान्तम् उपरि हिमानीगौरं तं नगम् आसाद्य व्यपगतमदरागस्य असितम् अधरवासः बिभ्रतः सीरपाणेः लक्ष्मीम् अनुसस्मार ॥ वाच्य—जिष्णुना लक्ष्मीः अनुसस्मरे ॥ ३८ ॥

इतीति । अथ तत्र तस्मिन् पूर्वोक्ते यक्षे इति इत्थं कथयति सति न अतिदूरात् अनतिदूरात् ईषद्दूरे इत्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपा इति समासः । पिहितोष्णरश्मिबिम्बः तिरोहितार्कमण्डलः इति औन्नत्योक्तिः । नगाधिराजः हिमाद्रिः विगलितः जलभारः येषां ते तथोक्ताः । अतएव शुक्लभासः । द्वयोः अन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः । तेषां विगलितजलभारशुक्लभासां शुभ्राणाम् अम्बुमुचां निचय इव मेघवृन्दम् इव ददृशे दृष्टः ॥ ३७ ॥

तमिति । जिष्णुः अर्जुनः अतनुभिः महतीभिः वनराजिभिः श्यामिताः श्यामलाः उपत्यकान्ताः आसन्नभूमिप्रदेशाः यस्य तं तथोक्तम् । "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः । उपरि हिमानीभिः हिमसङ्घातैः गौरं शुभ्रं नगं हिमाद्रिम् आसाद्य व्यपगतः निवृत्तः मदरागः यस्य तस्य । असितं

৩৭। যক্ষ এই সকল কথা বলিতে আরম্ভ করিলে, অর্জ্জুন অনতিদূরে সূর্য্যবিম্বাচ্ছাদী নগাধিরাজ হিমালয়কে দেখিতে পাইলেন। দেখিলেন—জলভারাপগমে শুক্লবর্ণ মেঘজালের ন্যায়ই উহা প্রতিভাত হইতেছে।

## पञ्चमः सर्गः ।

—:०:—

अथ जयाय नु मेरुमहीभृतो
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुं नभः ॥ १ ॥

अन्वयः । अथ स मेरुमहीभृतः जयाय नु रभसया दिगन्तदिदृक्षया नु नभः विलङ्घयितुं वा समुदितम् उच्छ्रितं हिमाचलम् अभिययौ ॥ वाच्य—तेन समुदितः उच्छ्रितः हिमाचलः अभिययें ॥ १ ॥

नीलम् अधरवासः उत्तरीयं बिभ्रतः धृतवतः, सीरं हलं पाणौ यस्य तस्य सीरपाणेः हलायुधस्य । "हलायुधः । नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । सङ्कर्षणः सीरपाणिः" इत्यमरः । "सप्तमी विशेषणे" इति ज्ञापकात् व्यधिकरणपदः बहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तः" इति सप्तम्याः परनिपातः । लक्ष्मीं शोभाम् अनुसस्मार स्मृतवान् । अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात् स्मरणालङ्कारः । "सदृशं सदृशानुभवाद्यत्र स्मर्यते तत् स्मरणम्" इति विद्याधरः ॥ ३८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
चतुर्थः सर्गः ॥ ४ ॥

———

अथ हिमवद्वर्णनम् आरभते तत्र पञ्चदशभिः कुलकम् आह—अथेति । अथ अनन्तरं सः अर्जुनः मेरुमहीभृतः हेमाद्रेः जयाय नु जयार्थं वा । नुशब्दः अत्र वितर्के । "नु पृच्छायां वितर्के च" इत्यमरः । रभसः

৩৮। দীর্ঘ দীর্ঘ বনরাজিদ্বারা নগাধিরাজের আসন্ন ভূভাগসকল শ্যামল শোভা ধারণ করিয়াছে; উপরে হিমস্তোম অবস্থিত হওয়ায় উহা গৌরবর্ণ হইয়াছে। অর্জ্জুন এ হেন পর্ব্বত প্রাপ্ত হইয়া মদরাগবিরহিত নীলাম্বরধারী হলায়ুধের শোভা স্মরণ করিলেন।

চতুর্থ সর্গ সমাপ্ত ॥

तपनमण्डलदीपितमेकत:
सततनैशतमोवृतमन्यत: ।
हसितभिन्नतमिस्रचयं पुर:
शिवमिवानुगतं गजचर्मणा ॥ २ ॥

क्षितिनभ:सुरलोकनिवासिभि:
कृतनिकेतमदृष्टपरस्परै: ।

अन्वय: । एकत: तपनमण्डलदीपितम् अन्यत: सततनैशतमोवृतम्, (अत:) पुर: हसितभिन्नतमिस्रचयं गजचर्मणा अनुगतं शिवमिव (स्थितम्) ॥ २ ॥ इममारभ्य पञ्चदशश्लोकं यावत् हिमालयविशेषणं सर्वं द्वितीयान्तपदं वाचान्तरं प्रथमाविभक्त्या समाधेयम् ।

वेग: । "रभसो वेगहर्षयो:" इति वैजयन्तीविश्वप्रकाशौ । तद्वत्या रभसया अतीवोत्कण्ठतया इति यावत् । अर्शआदित्वात् अच्प्रत्यय: । दिगन्तानां दिदृक्षया नु द्रष्टुमिच्छया वा नभ: अन्तरिक्षं विलङ्घयितुं नु अतिक्रमितुं वा समुदितं समुत्पतितम् इव स्थितम् इत्यर्थ: । कुत: ? उच्छ्रितम् उन्नतं हिमस्य अचलं हिमाचलम् अभिययौ । अत्र अभियोतितानेकफलविशिष्टौन्नत्यगुणनिमित्तोदितादिक्रियोत्प्रेक्षा, सा च व्यञ्जकाप्रयोगात् प्रतीयमाना इति संक्षेप: । द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ १ ॥

तपनेति । पुन: एकत: एकस्मिन् भागे । सार्वविभक्तिक: तसि: । तपनमण्डलेन दीपितं प्रकाशितम्, अन्यत: अन्यस्मिन् भागे सततेन अनिषिद्धेन नैशेन निशिभवेन तमसा वृतम् । एकत्र अह्ना रात्र्या च, अन्यत्र सङ्गतम् इत्यर्थ: । अतएव पुर: अग्रे हसितेन अट्टहासेन भिन्नतमिस्रचयं निरस्ततम:स्तोमं तथा गजचर्मणा अनुगतं पश्चाद् व्याप्तम् । "पश्चात्सादृश्ययोरनु" इत्यमर: । शिवम् इव स्थितम् । तपनतेज:प्रसार: अपि अस्य कारण इव कुत्रचित् परिसमाप्यते इति महत्त्वातिशयोक्ति: ॥ २ ॥

১। অনন্তর অর্জুন সেই হিমাচলাভিমুখে গমন করিলেন। ঐ সমুন্নত হিমাচল কি মেরুমহীধরকে জয় করিবার নিমিত্ত কিংবা বেগাতিশয়ে দিগ্‌দিগন্ত দেখিবার নিমিত্ত অথবা উহা কি নভোদেশ অতিক্রম করিবার নিমিত্তই উৎপতিতবৎ অবস্থিত ?

২। উহার এক অংশ—সৌরকরনিকরে সমুদ্দীপিত, অন্য অংশ সতত নৈশান্ধকারে সমাবৃত ; সুতরাং অট্টহাস্যদ্বারা সম্মুখস্থ তমঃস্তোমনিরসনকারী গজচর্ম্মানুগত শিবের ন্যায়ই উহা অবস্থিত।

प्रथयितुं विभुतामभिनिर्मितं
प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥
भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना ।
समुदितं निचयेन तडित्वतीं
लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

अन्वयः। अदृष्टपरस्परैः चितिनभःसुरलोकनिवासिभिः कृतनिकेतम्, (अतः) शम्भुना विभुतां प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिमिव (स्थितम्) ॥ ३ ॥

अन्वयः। भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना, (अतः) तडित्वतीम् शरदम्बुदसंहतिं लघयता निचयेन समुदितम् ॥ ४ ॥

क्षितीति। परस्परे अन्योन्ये। "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः" इति वक्तव्यत्वात् परशब्दस्य द्विर्भावः। "समासवच्च बहुलम्" "यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य" इति वक्तव्यत्वात् प्रथमैकवचनम् सुः, कस्कादित्वात् विसर्जनीयस्य सत्वम्, बहुवचनञ्च अन्योन्यशब्दवत्। यथा माघे —"अन्योन्येषां पुष्करैरामृशन्त" इति। अदृष्टाः परस्परे यैः ते अदृष्टपरस्पराः तैः तथोक्तैः। क्षितौ नभसि सुरलोके च निवसन्ति इति तैः तथोक्तैः भूर्भुवःस्वर्लोकवासिभिः इत्यर्थः। कृतनिकेतं कृतास्पदम् अतएव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिं प्रतिकृतिम् इव स्थितम् इति उत्प्रेक्षा। "प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः। त्रैलोक्यस्यावरोपमम् अपरिच्छेद्यं च इति भावः॥ ३ ॥

भुजगेति। पुनश्च भुजगराजसितेन शेषाहिधवलेन नभःश्रिता गगनस्पृशा कनकस्य राजिभिः रेखाभिः विराजिताः सानवः यस्य तेन तथोक्तेन अतएव तडित्वतीं शरदम्बुदसंहतिं शरन्मेघचयं लघयता लघूकुर्वता तत्तुल्येन इत्यर्थः। अतएव उपमालङ्कारः। निचयेन शिखरसमुच्चयेन समुदितं समुन्नतम्। निचयेनेति। यद्यपि निचयशब्दः शिखरस्यावाचकस्तथापि पर्वतवर्णनप्रकरणोक्तत्वात् पाषाणनिचयः शृङ्गवाची भवितुमर्हति। यथा

৩। পরস্পর পরস্পরের অদৃষ্ট হইয়া ভূলোক, অন্তরিক্ষলোক ও সুরলোকবাসীরা ঐ হিমালয়ে বাস করিতেছেন; সুতরাং স্বসামর্থ্য প্রকটিত করিবার জন্যই শম্ভু যেন উহাকে জগতের প্রতিনিধিরূপে নির্ম্মাণ করিয়াছেন।

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः॥ ५॥

अविरतोज्झितवारिविपाण्डुभि-
र्विरहितैरचिरद्युतितेजसा।
उदितपक्षमिवायतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः॥ ॥६

अन्वयः। मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः उच्चशिलान्तरगोपुराः उदित-पुष्पवनाः ( अत. ) पुरः इव भुवः दधतम्॥ ५॥

अन्वयः। अविरतोज्झितवारिविपाण्डुभिः अचिरद्युतितेजसा विरहितैः आयतनिःस्वनैः पृथु-नितम्बविलम्बिभिः अम्बुदैः उदितपक्षमिव॥ ६॥

"कूटोऽस्त्री शिखरं शृङ्गम्" इति कूटशब्दः समूहापरपर्यायः। अतएव लक्षणाश्रयणीया। अतएवावाच्यवचनं न दोषः॥ ४॥

मणीति। पुनः मणिमयूखचयाः अंशुकानि इव पटकाण्डादीनि इव तैः भासुराः सुरवधूभिः परिभुक्ताः लताः गृहा इव यासु ताः तथोक्ताः। उच्चानि शिलान्तराणि शिलामध्यानि गोपुराणि पुरद्वाराणि इव यासु ताः उदितानि ऊर्जितानि पुष्पाणां वनानि यासु ताः, अतएव पुरः इव नगराणि इव स्थिताः भुवः दधतम्॥ ५॥

अविरतेति। पुनश्च अविरतम् अविच्छिन्नम् उज्झितं वारि यैः तैः अविरतोज्झितवारयः अवृष्टिमन्त इत्यर्थः। अतएव विपाण्डवस्तैः अवि-रतोज्झितवारिविपाण्डुभिः। अतएव हिमवत्पक्षत्वं सम्भवति इति भावः। अचिरद्युतितेजसा विरहितैः विद्युत्तेजोरहितैः। आयतनिःस्वनैः प्रशान्त-

৪। উহার গগনস্পর্শী শিখরসকল ভুজগরাজের ন্যায় শুভ্র এবং সানুদেশ কনকপংক্তি দ্বারা বিরাজিত; সুতরাং উহারা তড়িৎজড়িত শারদ অম্বুদনিচয়ের ন্যায়ই প্রতিভাত। ঈদৃশ শিখরসমুচ্চয়ে ঐ হিমাচল সমুন্নত।

৫। ঐ হিমাচল নগরনিচয়বৎ নানা ভূভাগ ধারণ করিতেছে। ঐ সকল নগরোপম ভূভাগ মণিময়ূখ-পুঞ্জরূপ অংশুকসমূহে সমুজ্জ্বল; সুরাঙ্গনাগণ ঐ সকল স্থানের লতাগৃহ সকল উপভোগ করিতেছে; উচ্চ উচ্চ শিলান্তর বিবিধ গোপুরবৎ প্রতিভাত হইতেছে; অনেক সুসমৃদ্ধ পুষ্পবন ঐ সমুদায় স্থানে শোভা পাইতেছে।

दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताम्भसः
स्फुटसरोजवना जवना नदीः ॥ ७ ॥
नवविनिद्रजपाकुसुमत्विषां
द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचित्
निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

अन्वयः । आकरिभिः करिभिः क्षतैः समवतारसमैः असमैः तटैः ( उपलक्षिताः ) महिताम्भसः विविधकामहिताः स्फुटसरोजवनाः नदीः दधतम् ॥ ७ ॥

गर्जितैश्च, अन्यथा पक्षत्वहानिः स्यात् इति भावः । पृथुनितम्बविलम्बिभिः महाकटकसङ्गिभिः । "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः । अम्बुदैः उदितपक्षं सञ्जातपक्षम् इव स्थितम् । प्राक् छिन्नपक्षस्य अपि हिमाद्रेः धवलाम्बुदसम्बन्धात् पुनः पक्षोत्थानम् उत्प्रेक्ष्यते ॥ ६ ॥

दधतमिति । पुनश्च आकरः खनिः एषाम् अस्ति योनित्वेन इति आकरिभिः आकरजैः । "खनिः स्त्रियामाकरः स्यात्" इत्यमरः । करिभिः गजैः कर्त्तृभिः क्षतैः व्रणैः समवतारेषु तीर्थेषु समैः अविषमैः असमैः असदृशैः अनुपमैः इत्यर्थः । तटैः उपलक्षिताः, तथा महिताम्भसः श्लाघ्योदकाः अतएव विविधेभ्यः कामेभ्यः अवगाहनाद्युपभोगेभ्यः हिताः अनुकूलाः । "चतुर्थी तदर्थ" इत्यादिना समासः । स्फुटानि विकसितानि सरोजवनानि यासु ताः जवनाः वेगवतीः । "जुचंक्रम्य" इत्यादिना युच् । नदीः दधतम् । यमकप्रवृत्त्यनुप्रासभेदत्वात् यमकालङ्कारः । अर्थालङ्कारस्तु अभ्युच्चयः तस्य अतिदुष्करत्वात् रसपोषः अपि न आद्रियते । तदुक्तम्—"प्रायशो यमके चित्रे रसपुष्टिर्न मृग्यते" ॥ ७ ॥

६। হিমাদ্রির বিপুল নিতম্ব-বিম্ব-বিলম্বিত অম্বুদাবলী অবিরত বারি বর্ষণ করিয়া পাণ্ডুবর্ণ হইয়াছে, উহাতে বিদ্যুৎপ্রভা নাই; মেঘগর্জ্জন নাই : সুতরাং ঐ সকল অম্বুধর দ্বারা হিমাদ্রি যেন সঞ্জাতপক্ষ বলিয়াই বোধ হইতেছিল।

৭। হিমালয় স্ফুট পদ্মবনান্বিত বেগবতী বহু নদী ধারণ করিতেছে। ঐ সকল নদীর তট আকরজাত করিগণকর্ত্তৃক ক্ষতবিক্ষত, উহার কোথাও তীর্থব্যাপারে সম এবং কোথাও বা অসম; উহার জল অতি উত্তম, সুতরাং অবগাহনাদি উপভোগ ব্যাপারের একান্ত অনুকূল।

पृथुकदम्बकदम्बकराजितं
ग्रथितमालतमालवनाकुलम्।
लघुतुषारतुषारजलश्च्युतं
धृतसदानसदाननदन्तिनम्॥ ९॥

रहितरत्नचयान्न शिलोच्चया-
नपलताभवना न दरीभुवः।

अन्वयः। नवविनिद्रजपाकुसुमत्विषां द्युतिमता महाश्मनां निकरेण क्वचित् निचितकाञ्चनभित्तिषु सानुषु विहितसान्ध्यमयूखमिव॥ ८॥

अन्वयः। श्लोकोऽयं सान्वयो विरचितः॥ ९॥

नवेति। पुनश्च नवानि विनिद्राणि विकसितानि च यानि जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विष इव त्विषः येषां ते तेषाम् “ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका” इति वाग्भटः। द्युतिमतां महाश्मनां मणीनां पद्मरागाणाम् इत्यर्थः विशेषणसामर्थ्यात्। निकरेण समूहेन हेतुना क्वचित् निचिताः सङ्कटिताः काञ्चनभित्तयः येषु तेषु सानुषु विहिताः सान्ध्याः सन्ध्यायां भवाः मयूखाः यस्मिन् तम् इव स्थितम्। काञ्चनभित्तिषु पद्मरागप्रभाप्रसरात् उदितसन्ध्याराग इव भाति इति उत्प्रेक्षा॥ ८॥

पृथ्विति। पुनश्च पृथुभिः कदम्बकदम्बकैः नीपकुसुमसमूहैः स्तवकैः राजितम्। “कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके” इति उभयत्रापि विश्वः। ग्रथितमालैः बद्धपङ्क्तिभिः तमालवनैः तापिच्छवनैः आकुलम् आकीर्णम्। “कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि” इत्यमरः। लघुतुषारम् अल्पशीकरं यत् तुषारजलं हिमोदकं तत् श्च्योतति वर्षति तं तथोक्तम्। “तुषारौ हिमशीकरौ” इति शाश्वतः। “अन्येभ्योऽपि दृश्यते” इति क्विप्। सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनः ते धृताः येन तं तथोक्तम्॥ ९॥

৮। হিমালয়ে কত দ্যুতিশালী মহামণি আছে, তাহাদের কান্তি নবোন্মীলিত তাম্রপুষ্পিকা-কুসুমের কান্তির ন্যায়; ঐ সকল মহামণিপুঞ্জে হিমাদ্রির সানুদেশস্থ কাঞ্চনভিত্তিগুলি কচিৎ কচিৎ পরিব্যাপ্ত হওয়ায় তাহাতে যেন সন্ধ্যাকালীন ময়ূখমালাই প্রতিভাত হইতেছে।

৯। হিমালয় বহুল নীপকুসুমস্তবকে বিরাজিত; পংক্তিবদ্ধ তমালবনসমূহে সমাকীর্ণ, উহা হইতে বিন্দু বিন্দু হিমোদক বর্ষিত হইতেছে। মদজলবর্ষী প্রশস্তমুখ মাতঙ্গগণ উহাতে বিচরণ করিতেছে।

विपुलिनाम्बुरुहा न सरिद्वधू-
रकुसुमान् दधतं न महीरुहः ॥ १० ॥
व्यथितसिन्धुमनीरशनैः शनै-
रमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं
दयितरम्यलताबकुलैः कुलैः ॥ ११ ॥

अन्वयः । रहितरत्नचयान् शिलोच्चयान् न, अपलताभवना दरीभुवः न, विपुलिनाम्बुरुहाः सरिद्वधूः न (तथा) अकुसुमान् महीरुहः न दधतम् ॥ १० ॥

अन्वयः । अनीरशनैः घनैः अमरलोकवधूजघनैः शनैः व्यथितसिन्धुं दयितरम्यलताबकुलैः फणभृतां कुलैः अभितः ततं तथा विततम् ॥ ११ ॥

रहितेति । पुनश्च रहितरत्नचयान् रहितः परित्यक्तः रत्नचयः यैः तान् रत्नराशिरहितान् शिलोच्चयान् शिखराणि न दधतम्, अपलताभवनाः लतागृहरहिताः दरीभुवः गुहाप्रदेशान् न दधतम् । "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः । विगतानि पुलिनानि अम्बुरुहाणि च यासां ताः सरितः वध्वः इव ताः सरिद्वधूः न दधतम् । अत्र सरितां वध्वौपम्यात् पुलिनानामम्बुरुहाणाञ्च वदनजघनौपम्यं गम्यते । अकुसुमान् महीरुहः वृक्षान् न दधतम्, किन्तु रत्नादिसम्पन्नान् एव शिलोच्चयादीन् दधतम् इत्यर्थः । महाविभाषया नात्र नञ्समासः ॥ १० ॥

व्यथितेति । पुनश्च अनीरशनैः अनिर्मेखलैः सरशनैरित्यर्थः । घनैः निविडैः अमरलोकवधूजघनैः शनैः मन्दं मन्दं व्यथितसिन्धुं क्षोभितनदीकम्, अयम् अपरः स्वर्ग इति भावः । दयिताः प्रियाः रम्याः लताः वीरुधः बकुलाः केसराश्च येषां तैः तथोक्तैः । "विशारदो मद्यगन्धो बकुलः स च केसरः" इति वैद्यके । फणभृतां सर्पाणां कुलैः अभितः ततं व्याप्तं तथा विततं विस्तृतम् ॥ ११ ॥

১০। হিমালয় যে সকল শিখর ধারণ করে, তৎসমুদয় রত্নরাশিবিরহিত নহে; উহার গুহাগুলি লতাগৃহ-বিরহিত নহে; তত্রত্য সরিদ্বধূগণ পুলিন ও পদ্মবর্জ্জিত নহে; আর তথাকার মহীরুহগণও কুসুমহীন নহে। ফলে হিমালয়ধৃত সমস্ত শিখরই রত্নরাশিযুক্ত, সকল গুহাই লতাগৃহশালী, সকল নদীই পুলিন ও পদ্মসম্পন্ন এবং সকল বৃক্ষই কুসুমশোভিত।

১১। অমরনারীগণের মেখলাশূন্যশোভিত ঘন জঘন দ্বারা হিমাদ্রির সরিৎপ্রবাহ মন্দ মন্দ ক্ষুভিত হইতেছে; রম্য বল্লী ও বকুল যাহাদের প্রিয়, ঐ রূপ ফণধরগণে উহার চারিদিক্ পরিব্যাপ্ত রহিয়াছে।

ससुरचापमनेकमणिप्रभै-
रपपयोविशदं हिमपाण्डुभिः।
अविचलं शिखरैरुपबिभ्रतं
ध्वनितसूचितमम्बुमुचां चयम् ॥ १२ ॥

विकचवारिरुहं दधतं सरः
सकलहंसगणं शुचिमानसम्।
शिवमगात्मजया च कृतेर्ष्यया
सकलहं सगणं शुचिमानसम् ॥ १३ ॥

अन्वयः। अनेकमणिप्रभैः हिमपाण्डुभिः ससुरचापम् अपपयोविशदम् अविचलं ध्वनितसूचितम् अम्बुमुचां चयं बिभ्रतम् ॥ १२ ॥

अन्वयः। विकचवारिरुहं सकलहंसगणं शुचि (निर्मलं) मानसं सरः दधतं कृतेर्ष्यया अगात्मजया सकलहं सगणं शुचिमानसं शिवञ्च (दधतम्) ॥ १३ ॥

ससुरेति। अनेका विचित्रा मणिप्रभा येषां तैः तथोक्तैः, हिमेन पाण्डुभिः शिखरैः कृत्वा ससुरचापं सेन्द्रचापम् अपपयो निर्जलः अतएव विशदश्च तम् अपपयोविशदम् अविचलं दैवात् निश्चलं च, अतः शिखरशङ्का अस्य अभूत् इत्यर्थः। किन्तु ध्वनितेन गर्जितेन सूचितं ज्ञापितम् अम्बुमुचां चयम् अविरतम् उपबिभ्रतम्। अत्र किल कविकल्पितसादृश्यात् शिखरमेघसन्देहो भिन्ननिश्चयान्तः सन्देहालङ्कारः ॥ १२ ॥

विकचेति। पुनश्च विकचवारिरुहं नित्यविकसितारविन्दम् इत्यर्थः वृत्तिसामर्थ्यात्। कलहंसगणैः सह वर्त्तते इति सकलहंसगणम्। "कादम्बः कलहंसः स्यात्" इत्यमरः। यद्वा सकलाः सर्वे हंसगणा यस्मिन् तत् तथोक्तम्। शुचि नित्यनिर्मलं मानसं मानसाख्यं सरः दधतम्। किञ्च कृतेर्ष्यया कुतश्चित् निमित्तात् कुपितया इत्यर्थः। अगात्मजया पार्वत्या सकलहं सविवादम्। सगणं सप्रमथम्। "गणाः प्रमथसङ्घौघाः" इति वैजयन्ती। शुचिमानसम् अविद्याविनिर्मुक्तचित्तं शिवं च दधतम्। एतेन सकलशैलवैलक्षण्यमस्य उक्तम् ॥ १३ ॥

১২। হিমালয় বহু মেঘ ধারণ করিতেছে; ঐ সকল মেঘ তত্রত্য বহু বিচিত্র মণিপ্রভামণ্ডিত হিমপাণ্ডুর শিখরসমূহে যেন ইন্দ্রচাপান্বিত বলিয়া মনে হইতেছে। উহাতে জল নাই; কাজেই উহা স্বচ্ছ—প্রায় সর্ব্বদাই নিশ্চলভাবে অবস্থিত; কিন্তু গর্জ্জনেই জ্ঞাপিত।

১৩। হিমালয়ে মানস সরোবর আছে; ঐ সরোবর কলহংসকুলে শোভিত ও নিত্য নির্ম্মল।

ग्रहविमानगणानभितो दिवं
ज्वलयतौषधिजेन कृशानुना।
मुहुरनुस्मरयन्तमनुक्षपं
त्रिपुरदाहमुमापतिसेविनः॥ १४ ॥

विततशीकरराशिभिरुच्छ्रितै-
रुपलरोधविवर्त्तिभिरम्बुभिः।
दधतमुन्नतसानुसमुद्धतां
धृतसितव्यजनामिव जाह्नवीम्॥ १५ ॥

॥ कुलकम्॥

अन्वयः। दिवम् अभितः ग्रहविमानगणान् ज्वलयता औषधिजेन कृशानुना अनुक्षपम् उमापति-सेविनः त्रिपुरदाहं मुहुः अनुस्मरयन्तम्॥ १४॥

अन्वयः। विततशीकरराशिभिः उच्छ्रितैः उपलरोधविवर्त्तिभिः अम्बुभिः धृतसितव्यजनाम् उन्नत-सानुसमुद्धतां जाह्नवीम् इव दधतम्॥ १५॥

ग्रहेति। दिवम् अभितः दिवः अभिमुखम्। "अभितः परितः" इत्यादिना द्वितीया। ग्रहाः चन्द्रादयः विमानानि देवयानानि च। "व्योमयानं विमानोऽस्त्री" इत्यमरः। तेषां गणान् ज्वलयता प्रदीपयता। "मितां ह्रस्वः" इति ह्रस्वः। औषधिजेन तृणविशेषजन्येन कृशानुना वह्निना क्षत्वा अनुक्षपं प्रतिक्षपम्। वीप्सायाम् अव्ययीभावः। उमापतिसेविनः प्रमथा-दीन्। "गतिबुद्धि" इत्यादिना द्विकर्मत्वम्। त्रयाणां पुराणां समाहारः त्रिपुरम्। "तद्धितार्थ" इत्यादिना समासः। "पात्रादिभ्यः प्रतिषेधो वक्तव्यः" इति स्त्रीलिङ्गप्रतिषेधः। तस्य दाहं त्रिपुरदाहं मुहुः अनुस्मर-यन्तम्। ननु "अधीगर्थ" इत्यादिना दाहम् इत्यत्र षष्ठी किं न स्यात्, तस्याः शेषार्थे विधानात् शेषत्वस्य अविवक्षितत्वात्। अत्र 'कविसम्मत-सादृश्यात् स्मृतिः' इति स्मरणालङ्कारः॥ १४॥

विततेति। विततशीकरराशिभिः विस्तृतशीकरपुञ्जैः उच्छ्रितैः

প্রমথগণ তথায় নিত্য বিরাজমান এবং (সময়বিশেষে) কোন কারণে কুপিতা পার্ব্বতীর সহিত কথন কথন কলহপরায়ণ অবিদ্যাবিনির্ম্মুক্তচিত্ত শিব তথায় অবস্থান করেন।

১৪। হিমালয়ে বিবিধ ওষধি আছে। ঐ সকল ওষধিজাত অগ্নি স্বর্গভূমির চতুর্দ্দিক্স্থিত গ্রহ ও বিমানশ্রেণী উদ্দীপিত করিতেছে; অতএব হিমালয় যেন প্রতিরাত্রে প্রমথদিগকে ত্রিপুরদাহ ব্যাপার বার বার স্মরণ করাইয়া দিতেছে।

अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः ।
स जगदे वचनं प्रियमादरा-
न्मुखरतावसरे हि विराजते ॥ १६ ॥

अलमेष विलोकितः प्रजानां
सहसा सन्ततिमंहसां विहन्तुम् ।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः ॥ १७ ॥

अन्वय। अथो (अथ) धनाधिपतेरनुचरेण नगविलोकनविस्मितमानसः सः आदरात् प्रियं वचनं जगदे। वाच्य—अनुचरः नगविलोकनविस्मितमानसं तं प्रियं वचनं जगाद ॥ १६ ॥

अन्वय। हिमगौरैः शिरोभिः घनवर्त्म सहस्रधा कुर्वन् इव एष अचलाधिपः विलोकितः प्रजानाम् अंहसां सन्ततिं सहसा विहन्तुम् अलम्। वाच्य—कुर्वता एतेन अचलाधिपेन विलोकितेन अलम्भूयते ॥ १७ ॥

उत्पातितैः। कुतः? उपलरोधेन विवर्त्तिभिः अम्बुभिः हेतुभिः धृतसितव्यजनाम् इव गृहीतामलचामराम् इव स्थिताम् इति उत्प्रेक्षा। उन्नतमानुषु समुद्गतां वहन्तीं जाह्नवीं गङ्गां दधतम् ॥ १५ ॥

अनुचरेणेति। अथो अनन्तरम्। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। धनाधिपतेरनुचरेण यक्षेण नगविलोकनेन विस्मितमानसः सः अर्जुनः। आदरात् प्रियं वचनं जगदे गदितः। ब्रुवर्थस्य दुहादित्वात् प्रधाने कर्मणि लिट्। अपृष्टपरिभाषणदोषं परिहरति—मुखरतेति। मुखरता वाचालत्वम् अपृष्टपरिभाषित्वम् इति यावत्। अवसरे श्रोतुराकाङ्क्षासमये विराजते हि। आकाङ्क्षितम् अपृष्टोऽपि ब्रूयात् इति भावः ॥ १६ ॥

अलमिति। हिमेन गौरैः शुभ्रैः शिरोभिः शिखरैः घनवर्त्म खं सहस्रधा

১৫। হিমালয়ের সমুন্নত সানুদেশ দিয়া গঙ্গা প্রবাহিত হইতেছেন, তদীয় অম্বুরাশি উপলরোধে বিবর্ত্তিত হইয়া বিস্তৃতভাবে শীকর প্রসারণ করত উৎপতিত হওয়ায় ঐ গঙ্গা যেন নির্ম্মল চামরধারিণী বলিয়াই প্রতিভাত হয়েন।

১৬। অর্জ্জুন হিমাদ্রিদর্শনে বিস্মিতচিত্ত হইয়াছিলেন। অনন্তর যক্ষ সাদরে তাঁহাকে প্রিয়বাক্য বলিল। বস্তুতঃ বাক্যপটুতা শ্রোতার আকাঙ্ক্ষিত কালেই শোভা পায়।

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ १८ ॥

रुचिरपल्लवपुष्पलतागृहै-
रुपलसज्जलजैर्जलराशिभिः ।
नयति सन्ततमुत्सुकतामयं
धृतिमतीरुपकान्तमपि स्त्रियः ॥ १९ ॥

अन्वयः । इह असुतरम् अन्तरं दुरधिगमैः किञ्चिदेव सततं वर्णयन्ति, ( किन्तु ) अति विपिनं दिग्व्यापिनम् अमुं परं पुरुषम् इव परं पद्मयोनिः वेद । वाच्य—किञ्चिदेव वर्ण्यते । अति-विपिनः दिग्व्यापी असौ परः पुरुष इव पद्मयोनिना विविदे अथवा विदाञ्चक्रे ॥ १८ ॥

अन्वयः । अयं रुचिरपल्लवपुष्पलतागृहैः उपलसज्जलजैः जलराशिभिः उपकान्तं धृतिमतीः अपि स्त्रियः सन्ततमुत्सुकतां नयति । वाच्य—अनेन धृतिमत्यः स्त्रियः उत्सुकतां नीयन्ते ॥ १९ ॥

कुर्वन् विपाटयन् इव इति उत्प्रेक्षा । एषः अचलाधिपः हिमवान् विलोकितः दृष्टमात्र एव प्रजानाम् अंहसां सन्ततिं पापसङ्घातं सहसा विहन्तुम् अलं समर्थः । "पर्याप्तिवचनेष्वलमर्थेषु" इति तुमुन् । औपच्छन्दसिकं वृत्तम् । "पर्यन्ते यौ तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्" इति स्मरणात् ॥ १७ ॥

इहेति । इह अस्मिन् पर्वते सुतरं न भवति इति असुतरं दुस्तरम् इत्यर्थः । तरतेः खल्प्रत्ययः । अन्तरं मध्यभागं पुरुषे तु अन्तरं तत्त्वं दुरधिगमैः दुरारोहैः अन्यत्र दुर्ग्रहैः दुःखेन अधिगन्तुम् अशक्यैः आगमैः अन्यत्र पुराणादिभिः "पुराणेऽप्यागमो वृद्धे" इति रुद्रः । किञ्चित् एव सततं वर्णयन्ति । न तु कदाचित् प्रत्यक्षेणापि निःशेषं ज्ञातुम् अशक्यत्वात् इति भावः । किन्तु अतिविपिनम् अतिगहनं दिग्व्यापिनम् उभयत्रापि समम् । अमुं गिरिं परं पुरुषं परमात्मानम् इव परं केवलम् । "परमव्ययमिच्छन्ति केवले" इति विश्वः । पद्मयोनिः ब्रह्मा एव वेद न अन्य इत्यर्थः । "विदो लटो वा" इति णलादेशः । अत्र उपमायमकयोः संसृष्टिः । क्षमावृत्तम् । "तुरगरसयतिर्नौ भरौ गः क्षमा" ॥ १८ ॥

১৭। ঐ অচলাধিপ তুষারশুভ্র শিখরসমূহদ্বারা মেঘপথ যেন সহস্রধা বিদীর্ণ করিতেছে। ইহা অবলোকিত হওয়ামাত্রই জনগণের পাপপুঞ্জ বিনাশ করিতে সমর্থ।

১৮। (বিচক্ষণগণ) দুরধিগম পুরাণাদির সাহায্যে এই পর্ব্বতের সদা দুস্তর অভ্যন্তরতত্ত্ব কিঞ্চিন্মাত্রই বর্ণন করিয়া থাকেন। কিন্তু এই অতিগহন দিগ্ব্যাপ্ত পর্ব্বতকে পদ্মযোনি ব্রহ্মাই কেবল পরম পুরুষবৎ অবগত আছেন।

सुलभैः सदा नयवताऽयवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना धनैः क्षितिभृताऽतिभृता
समतीत्य भाति जगती जगती ॥ २० ॥

अन्वयः । नयवता अयवता सदा सुलभैः निधिगुह्यकाधिपरमैः धनैः अमुना क्षितिभृता अतिभृता जगती जगती समतीत्य भाति । वाच्य—अतिभृतया जगत्या जगत्या भाव्यते ॥ २० ॥

रुचिरपल्लवेति । अयं गिरिः । रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथाभूताः लतागृहाः येषु ते: तथोक्तैः उपलसज्जलजैः शोभितकमलैर्जल-राशिभिः सरोभिः करणैः उपकान्तं कान्तसमीपे धृतिमतीः धैर्यवतीरपि समीपस्थान् अपि प्रियान् न गणयन्तीः, मानिनीरित्यर्थः । स्त्रियः सततम् उत्सुकतां नयति तासां मानग्रन्थिं शिथिलयति इत्यर्थः । अथवा उप-कान्तं धृतिमतीः तुष्टिमतीरपि सुरतप्रान्ता अपि पुनः उत्सुकतां नयति इत्यर्थः । उभयत्रापि उद्दीपकत्वातिशयोक्तिः । वृत्तम् उक्तम् ॥१९॥

सुलभैरिति । नयवता नीतिमता अयवता भाग्यवता च सदा सुलभैः न अन्यैः इत्यर्थः । "अयः शुभावहो विधिः" इत्यमरः । निधीनां महा-पद्मादीनाम् । "अस्त्री पद्मः महापद्मः शङ्खो मकरकच्छपौ । मुकुन्दकुन्द-नीलाश्च खर्वश्च निधयो नव" इत्यमरः । गुह्यकानां च अधिपं कुबेरं रमयन्ति इति तथोक्ताः । "कर्मण्यण्" । परमैः उत्कृष्टैः धनैः करणैः अमुना क्षितिभृता हिमाद्रिणा हेतुना अतिभृता पूर्णा सती जगती महती मही जगती स्वर्गपातालल्लोका समतीत्य अतिक्रम्य भाति । अमानुषैरपि दुर्लभाः सम्पदः अत्र सन्त्यवन्ति इति भावः । अत्र धनाधिपतेरिति पदार्थस्य विशे-षणगत्या जगदतिक्रमणहेतुत्वोक्त्या काव्यलिङ्गं तस्य यमकेन संसृष्टिः । प्रमिताक्षरा वृत्तम्—"प्रमिताक्षरा सजससैरुदिता" इति लक्षणात् ॥ २० ॥

১৯। এ হিমালয়োপরি পদ্মপরিশোভিত প্রভূত সরোবর আছে। ঐ সকল সরোবরের তীরে তীরে সুন্দর সুন্দর পুষ্পপল্লবশালী লতাগৃহসকল বিরাজ করিতেছে। হিমাদ্রি তথাবিধ সরোবর-সমূহ দ্বারা প্রান্ত-সমাগাগতা অতিধীরা রমণীদিগকেও সতত উৎসুক করিয়া তুলিয়াছে।

২০। নীতিমান্ ও ভাগ্যশালীদিগের সদা সুলভ—নিধি ও গুহ্যকদিগের অধিপতি কুবেরের প্রীতিকর উত্তম উত্তম ধনরাশিদ্বারা এই জগতী ঐ ক্ষিতিধর পরিপূর্ণ হইয়া স্বর্গ ও পাতাললোক অতিক্রম-পূর্বক প্রতিভাত হইতেছে।

अखिलमिदममुष्य गौरीगुरो-
स्त्रिभुवनमपि नैति मन्ये तुलाम्।
अधिवसति सदा यदेनं जनै-
रविदितविभवो भवानीपतिः॥ २१ ॥

वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम्।
आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः॥ २२ ॥

अन्वयः। अमुष्य गौरीगुरोः इदम् अखिलं त्रिभुवनम् अपि तुलां न एति इति मन्ये। यत् जनैः अविदितविभवः भवानीपतिः सदा एनम् अधिवसति। वाच्य- एतेन अखिलेन त्रिभुवनेन तुला न ईयते। अविदितविभवेन भवानीपतिना एष अध्युष्यते ॥ २१ ॥

अन्वयः। वीतजन्मजरसं ब्रह्मणः परं शुचि पदम् उपैतुम् इच्छताम् आगमात् इव तमोऽपहात् इव भवच्छिदः मतयः सम्भवन्ति। वाच्य—भवच्छिद्भिः मतिभिः सम्भूयते ॥ २२ ॥

अखिलमिति। अमुष्य गौरीगुरोः हिमवतः इदम् अखिलं त्रयाणां भुवनानां समाहारः त्रिभुवनम् अपि। "तद्धितार्थ" इत्यादिना समासः। पात्रादित्वात् स्त्रीत्वप्रतिषेधः। तुलां साम्यं न एतीति मन्ये। यत् यतः जनैः अविदितविभवः अज्ञातमहिमा भवानीपतिः शिवः सदा एनं गिरिम् अधिवसति अस्मिन् वसति इत्यर्थः। "उपान्वध्याङ्वस" इति कर्मत्वम्। अतोऽयं धर्मक्षेत्रम् इति भावः। प्रभावृत्तम्—"स्वरशरविरतिर्नौ सगौ प्रभा" इति लक्षणात् ॥ २१ ॥

वीतेति। वीते निवृत्ते जन्मजरसौ यस्य तत् वीतजन्मजरसम्। "जराया जरसन्यतरस्याम्" इति जरसादेशः। अत्र तदन्तविधिविशिष्टत्वात् परत्वेन स्यादेशबाधकत्वाच्च। तथाहि—"टाङसिङसामिनात्स्याः" इति स्यादेशबाधनात्। "परत्वाज्जरसादेशं बभाषे भाष्यकृत् स्वयम्" "सूत्रकारमते यत्तु ज्ञापकात् परबाधनम्। भवेत् तदपि टाङस्योर्न पुनर्ङसि सम्भवेत्। मतद्वयेऽपि तत्तुल्यं ङसि यत्पूर्वबाधनम्। परत्वाज्जरसादेशस्तत् स्यात् स्यादेशबाधनात्। ज्ञापकस्त्वात्र टाङस्योर्यावादेशाविनादिति।

২১। আমি মনে করি, এই অখিল ত্রিভুবনও ঐ হিমালয়ের সমান নহে। কেননা, জনগণ যাঁহার মাহাত্ম্যাপবিজ্ঞানে অসমর্থ, সেই ভবানীপতি সর্ব্বদা এখানেই বাস করেন।

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः।
पीड़ाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः॥ २३॥

अन्वयः। अस्मिन् सचरणलाक्षारागाः निपतितपुष्पापीडाः पीडाभाजः कुसुमचिताः दिव्यस्त्रीणां शय्याः रागायाते साशंसं सुरतविशेषं शंसन्ति॥ वाच्य—"लाक्षारागाभिः पुष्पापीडाभिः पीडाभाग्भिः कुसुमचिताभिः शय्याभिः साशंसं सुरतविशेषः शस्यते॥ २३॥

ईकारदीर्घयोस्तत्र वैयर्थ्यं तत्त्वं तौ विना। एते सवर्णदीर्घे च रूपसिद्धिरेविष्यतः। अर्थसूत्राद्वरत्यागाद्वक्तुं तज्ज्ञापकं फणी। स्वातन्त्र्याज्जरमादेशं जगौ पूर्वस्य बाधनात्। समग्रं नयप्रपञ्चम् भाष्यकैयटयोः स्फुटः॥" एवञ्च यदत्र जरम इति कैश्चित् पाठान्तरकल्पनं तत् अज्ञानविजृम्भितम् एव। ब्रह्मणः परमात्मनः सम्बन्धि परम् उत्कृष्टं शुचि निष्कलङ्कम्। पद्यते इति पदं स्थानं तादात्म्यलक्षणम्, मुक्तिम् इत्यर्थः। उपैतुं प्राप्तुम् इच्छतां मुमुक्षूणाम् आगमात् शास्त्रात् इव। तमः अपघ्नन्ति इति तमोऽपहात् अविद्यानिवर्त्तकात्। "अपे क्लेशतमसोः" इति डप्रत्ययः। इतः अस्मात् गिरेः, भवं छिन्दन्ति इति भवच्छिदः संसारनिवर्त्तकाः। "सत् सूद्विष" इत्यादिना क्विप्। मतयः तत्त्वज्ञानानि सम्भवन्ति उत्पद्यन्ते। तीर्थविशेषस्यापि ज्ञानोपपादकत्वात् इत्याशयः। न च केवलमियं भोगभूमिः, किन्तु मुक्तिक्षेत्रम् अपीति तात्पर्यार्थः। रथोद्धतावृत्तम्। तल्लक्षणम्—"रान्नराविह रथोद्धता लगौ" इति॥ २२॥

दिव्येति। अस्मिन् गिरौ। चरणलाक्षारागैः सह वर्त्तन्ते याः तथोक्ताः, धेनुकपुरुषायितादिबन्धेषु स्त्रियाः पादतलस्याधःस्पर्शात् तद्रागाङ्किताः इत्यर्थः। निपतिताः व्यानतकरणे स्त्रीणाम् अधोमुखत्वात् भ्रष्टाः पुष्पापीड़ाः कुसुमशेखराः यासु ताः तथोक्ताः। "शिखास्वापीड़शेखरौ" इत्यमरः। पीड़ाभाजः विमर्दभाजः भङ्गिमत्य इत्यर्थः। भ्रमरप्रेङ्खोलितादौ सर्वतः कटीपरिभ्रमणसम्भवादिति भावः। कुसुमैः चिताः कुसुमचिताः कुसुमव्याप्ताः।

২২। যথায় জন্ম নাই, জরা নাই, এ হেন পরম পবিত্র ব্রহ্মপদ পাইবার অভিলাষী জনের—আগমনের ন্যায় এই তমোহর গিরি হইতে সংসারচ্ছেদকর তত্ত্বজ্ঞান প্রাদুর্ভূত হইয়া থাকে।

২৩। এই হিমালয়ে সুরস্ত্রীগণের বহু শয্যা রহিয়াছে, ঐ সকল কুসুমাস্তৃত শয্যা স্ত্রীগণের অলক্তপদতলস্পর্শে রাগরঞ্জিত, পতিতপুষ্প শেখরযুত ও মর্দ্দিত হইয়া আছে। উহারা রাগোদ্রিক্ত অবস্থায় উৎকৃষ্ট সুরতবিশেষই খ্যাপন করিতেছে।

गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम्।
नयशालिनि श्रिय इवाधिपतौ
विरमन्ति न ज्वलितुमोषधयः॥ २४॥

अन्वयः। जगतां महिते अत्र हिमवति ओषधयः नयशालिनि अधिपतौ श्रियः इव गुणसम्पदा परं महिमानं समधिगम्य ज्वलितुं न विरमन्ति॥ वाच्य—ओषधिभिः श्रीभिरिव न विरम्यते॥ २४॥

इभमार्जारादिकरणेषु स्तनभुजाद्यवयवानां शय्यातलस्थायित्वात् मार्दवाय कुसुमाचिताः कुसुमास्तृताः दिव्यस्त्रीणां सम्बन्धिन्यः इत्यर्थः। शेरते आसु इति शय्याः तल्पानि। "संज्ञायां समजनिषद" इत्यादिना क्यप्। रागायातेः रागोद्रेके सति यः साशंसः सतृष्णः सुरतविशेषः तम्, जातावेकवचनम्; सुरतविशेषान् इत्यर्थः। शंसन्ति सूचयन्ति विज्ञापयन्ति इत्यर्थः। अत्र लाक्षारागादिपदार्थानां सुरतविशेषशंसनं प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः यमकेन संसृज्यते। जलधरमालावृत्तम् "भ्यौ स्मौ चेत् स्याज्जलधरमाला ख्याता" इति लक्षणात्। धेनुकादिबन्धलक्षणं तु रतिरहस्ये—"न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा। अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदूर्ध्वं प्रिये॥ १॥ स्त्रेच्छया भ्रमति वल्लभेऽपि या योषिदाचरति वल्लभायितम्। आनतं करभितं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः॥ २॥ तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितिस्थितः। चक्रवद्भ्रमति कुञ्चिताङ्गिका भ्रामरं न जघनं समुद्धतं॥ ३॥ पर्वतः करिपरिभ्रमो यदि प्रश्नपूर्वमिदमुक्तमूर्जितम्। भूगतस्तनयुगास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम्॥ ४॥ क्रामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते॥" "प्रसारिते पाणिपादे शय्यास्पर्शिमुखोरसि। उन्नतायाः स्त्रियाः कट्यां मार्जारकरणं विदुः॥" इति ग्रन्थान्तरे। ["कान्तोत्पीड़ा भ्यौ स्मौ" इति वृत्तम्]॥ २३॥

गुणेति। जगतां महिते जगद्भिः पूजिते पूज्यमाने। "मतिबुद्धि" इत्यादिना वर्त्तमाने क्तः, "क्तस्य च वर्त्तमाने" इति षष्ठी। अत्र हिमवति ओषधयः तृणज्योतींषि नयशालिनि अधिपतौ नीतिसम्पन्ने राज्ञि श्रियः सम्पदः इव गुणसम्पदा तेजगुणसम्पत्त्या अन्यत्र सन्ध्यादिगुणसम्पदा। परं

२४। নয়নিষ্ঠ নরাধিপে যেমন সম্পদ্‌রাশি, তদ্রূপ এই জগৎপূজিত হিমালয়ে ওষধি সকল গুণসম্পদে একান্ত সমৃদ্ধ হইয়া অনবরত প্রজ্বলিত হইতেছে।

कुररीगणः कृतरवस्तरवः
कुसुमानताः सकमलं कमलम्।
इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः॥ २५॥

साहश्यं गतमपनिद्रचूतगन्धै-
रामोदं मदजलसेकजं दधानः।
एतस्मिन् मदयति कोकिलानकाले
लीनालिः सुरकरिणां कपोलकाषः॥ २६॥

अन्वयः। इह कुररीगणः कृतरवः तरवः कुसुमानताः, कमलं सकमलं वरणावरणाः सनलदानलदाः सिन्धवः करिणां मुदे (भवन्ति)। वाच्य—कुररीगणेन कृतरवेण तरुभिः कुसुमानतैः कमलेन सकमलेन वरणावरणाभिः सनलदानलदाभिः सिन्धुभिः (भूयते)॥ २५॥

अन्वयः। एतस्मिन् अपनिद्रचूतगन्धैः साहश्यं गतं मदजलसेकजम् आमोदं दधानः (अत) लीनालिः सुरकरिणां कपोलकाषः अकाले कोकिलान् मदयति। वाच्य—आमोदं दधानेन लीनालिना सुरकरिणां कपोलकाषेण कोकिलाः माद्यन्ते॥ २६॥

दह्यमानम्, उभयत्रापि प्रकाशसामर्थ्यं समधिगम्य ज्वलितुं प्रकाशितुं न विरमन्ति अविरतं ज्वलन्ति इत्यर्थः। अन्यत्र रात्रावेवेति भावः॥ २४।

कुररीति। इह अद्रौ कुररीगणः उत्क्रोशसङ्घः। "उत्क्रोशकुररौ समौ" इत्यमरः। कृतरवः कृतारवः तरवः कुसुमैः आनताः कमलं जलं सकमलं सपद्मम्। "कमलं जलपद्मयोः" इति विश्वः। यद्वा कं जलम् अमलमत्यन्तं सपद्मं वर्त्तते। "कं जले शिरसि च" इत्यमरः। किञ्च वरणाः द्रुमाः आवरणं यासां ताः वरणावरणाः। "वरणो वरुणः सेतु-स्तिक्तशाकः कुमारकः" इत्यमरः। सनलदाः सोशीराः। "मूलेऽस्योशीर-मस्त्रियाम्। अभयं नलदं सेव्यम्" इत्यमरः। अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्ति इति अनलदाः। सनलदाश्च ताः अनलदाः सिन्धवः नद्यः करिणां मुदे भवन्ति इति शेषः। न कुत्रापि उक्तवैपरीत्यम् इति भावः॥ २५॥

साहश्यमिति। एतस्मिन् पर्वते अपनिद्रचूतगन्धैः साहश्यं गतं फुल्लाम्र-

২৫। এই পর্ব্বতে কুররীগণ কলরব করিতেছে; তরুগণ কুসুমভরে আনত হইয়াছে, জল পদ্ম পরিশোভিত রহিয়াছে; দ্রুমাবরণশালী সিন্ধুগণ উশীরসমন্বিত ও সন্তাপহর হইয়া করিগণের প্রীতিজনক হইতেছে।

২৬। এই পর্ব্বতে সুরকরিগণের কপোলঘর্ষণের স্থান—দ্রুমস্কন্ধাদি করিগণের মদজল-সেক-জন্য

सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति॥ २७॥

अन्वयः। सनाकवनितं नितम्बरुचिरं सुनिनदैः नदैः वृतम् अमुम् अवतः फणवतः (नागराजस्य) मता रसपरा परास्तवसुधा सुधा चिरम् अधिवसति॥ वाच्या—मतया रसपरया परास्तवसुधया सुधया अध्युष्यते॥ २७॥

पुष्पगन्धसदृशं मदजलसेकजम् आमोदं परिमलं दधानः जिघ्राणः। अतएव लीनालिः संसक्तभृङ्गः सुरकरिणां कष्यते अनेन इति कषः। कपोलानां कषः कषणस्थानं द्रुमस्कन्धादि। अकाले वसन्तातिरिक्ते काले अपि कोकिलान् मदयति। "मितां ह्रस्वः" इति ह्रस्वः। अत्र वसन्तरूपकारणाभावेऽपि मदाख्यकार्योत्पत्तिकथनात् विभावनालङ्कारः। तदुक्तम्—"कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना" इति। सा च चूतगन्धैः सादृश्यम् इति उपमया आमोदं दधान इति पदार्थहेतुककाव्यलिङ्गेन च अङ्गाङ्गिभावेन सङ्कीर्यते। किञ्च कोकिलानां मदगन्धे चूतगन्धभ्रान्त्या भ्रान्तिमदलङ्कारो व्यज्यते। प्रहर्षिणीवृत्तम्। "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात्॥ २६॥

सनाकेति। पुनश्च सनाकवनितं साप्सरस्कं नितम्बैः कटकैः रुचिरम्। सुनिनदैः सुघोषैः नदैः प्रवाहैः वृतम् अमुम् अमुष्मिन् गिरौ इत्यर्थः। "उपान्वध्याङ्वसः" इति कर्मत्वम्। अवतोऽधोलोकरक्षकस्य फणवतः नागराजस्य मता इष्टा। "मतिबुद्धि" इत्यादिना वर्त्तमाने क्तः। तद्योगात् षष्ठी। रसेन स्वादेन परा उत्कृष्टा। परास्तवसुधा त्यक्तभूलोका सुधा अमृतं चिरम् अधिवसति। अतः अन्यत्र भूमण्डले कुत्रापि सुधा नास्ति इत्यर्थः। मेरुप्रतिभटः अयं गिरिः इति भावः। अत्र प्रस्तुतविशेषणसामर्थ्यात् अप्रस्तुतमेरुप्रतीतिः समासोक्तिरलङ्कारः, स च यमकेन संसृज्यते। जलोद्धतगतिर्वृत्तम्—"रसैर्जसजसा जलोद्धतगतिः" इति लक्षणात्॥ २७॥

প্রফুল্লচূতগন্ধবৎ পরিমল ধারণ করিতেছে, সুতরাং উহাকে অলিকুল লীন আছে। উহা বসন্তেতর কালেও কোকিলদিগকে মাতাইয়া তুলিয়াছে।

২৭। ঐ হিমালয় অপ্সরোগণযুক্ত, নিতম্বশোভিত ও সুনিনদশালী নদনিচয়ে পরিব্যাপ্ত; অধোলোক-রক্ষক নাগরাজ উহাকে ধারণ করিয়াছেন। সেই নাগরাজের অভীষ্ট রসোৎকৃষ্ট সুধা ভূলোক ত্যাগ করিয়া চিরকাল এই হিমালয়ে বিরাজ করিতেছে।

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्त्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥ २८ ॥

ईशार्थमम्भसि चिराय तपश्चरन्त्या
यादोविलङ्घनविलोलविलोचनायाः ।
आलम्बताग्रकरमत्र भवो भवान्याः
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥ २९ ॥

अन्वयः । अस्मिन् श्रीमल्लताभवनम् ओषधयः प्रदीपाः नवानि हरिचन्दनपल्लवानि शय्याः रतिश्रमनुदः सरोजवाताश्च सुरसुन्दरीभ्यः दिवः स्मर्त्तुं न दिशन्ति । वाच्य—लताभवनेन ओषधिभिः प्रदीपैः नवैः हरिचन्दनपल्लवैः शय्याभिः रतिश्रमनुद्भिः सरोजवातैः स्मर्त्तुं न दिश्यते ॥ २८ ॥

अन्वयः । ईशार्थं चिराय अम्भसि तपः चरन्त्याः (अतः) यादोविलङ्घनविलोलविलोचनायाः भवान्याः अग्रकरं भवः श्च्योतन्निदाघसलिलेन करेण अत्र आलम्बत ॥ वाच्य—भवेन अग्रकरः आलम्ब्यत ॥ २९ ॥

श्रीमदिति । अस्मिन् अद्रौ श्रीमत् समृद्धिमत् लता एव भवनम्, ओषधयः तृणज्योतींषि एव प्रदीपाः नवानि हरिचन्दनपल्लवानि सुरतरुकिसलयानि एव शय्याः । "हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे" इति विश्वः । रतिश्रमनुदः सुरतश्रमहारिणः सरोजवाताश्च सुरसुन्दरीभ्यः । क्रियाग्रहणात् चतुर्थी । दिवः दिवम् । "अधीगर्थ" इत्यादिना कर्मणि षष्ठी । स्मर्त्तुं न दिशन्ति । विस्मारयन्ति इत्यर्थः । स्वर्गादपि अतिरिच्यते असौ इति भावः । अत्र पूर्वार्द्धे रूपकत्रयं स्फुटम् एव ॥ २८ ॥

ईशार्थमिति । ईशाय अतिशयाय यथा तथा इति क्रियाविशेषणम् । "अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या ।" चिराय चिरम् अम्भसि तपः चरन्त्याः अतएव यादोविलङ्घनविलोलविलोचनाया जल-

२৮। এখানে সুসমৃদ্ধ লতারাজিই ভবন, তৃণজ্যোতিঃসমূহই প্রদীপ, নবীন, হরিচন্দনপল্লবই শয্যা; এই সকল এবং রতিশ্রমাপহারী সরোজবায়ু, ইহারা সুরসুন্দরীদিগকে আর স্বর্গ স্মরণ করাইতেছে না।

২৯। ভবানী ভবদেবকে পাইবার জন্যই বহু দিন জলমধ্যে থাকিয়া তপস্যা করিয়াছিলেন; তৎকালে জলজন্তুগণের বিঘট্টনে তাঁহার নয়ন চঞ্চল হইতেছিল। তখন ভবদেব স্বীয় স্বেদজলস্রাবী করাঙ্গুলির অগ্রভাগদ্বারা এইখানেই ভবানীর কর গ্রহণ করিয়াছিলেন।

येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे।
व्यावर्त्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥३०॥

अन्वयः। देवासुरैः येन अपविद्धसलिलः स्फुटनागसद्मा अम्बुनिधिः अमृतं ममन्थे। अहिपतेः व्यावर्त्तनैः आहिताङ्कः अयं मन्दराद्रिः खं व्यालिखन् इव विभाति॥ वाच्य—देवासुराः अपविद्धसलिलं स्फुटनागसद्मानम् अम्बुनिधिम् अमृतं ममन्थुः। आहिताङ्केन अनेन मन्दराद्रिणा खं व्यालिखता इव विभायते॥ ३०॥

जन्तुविघट्टितचकितत्तरायाः तपसः अपि अधिकं दृष्ट्वा एव विलोभयन्त्याः इति भावः "यादांसि जलजन्तवः" इत्यमरः। भवान्याः भवपत्न्याः प्रयोगकालापेक्षः अयं निर्देशः। "इन्द्रवरुणभव" इत्यादिना ङीष् आनुगागमश्च। करैकदेशस्यापि करत्वात् अग्रश्चासौ करश्चेति समानाधिकरणसमासः। अतएव वामनः—"हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्" इति। तम् अग्रकरं भवः शिवः अपीतात्रिदशापगासलिलाङ्गुलिना स्रवत्स्वेदाङ्गुलिना इति सात्त्विकोदयोक्तिः। करेण अत्र गिरौ आलम्बत गृहीतवान्। अत्र अतीतवृत्तान्तस्य प्रत्यक्षवत् अभिधानात् भाविकालङ्कारः। "अतीतानागते यत्र प्रत्यक्षवदलक्षिते। अत्यद्भुतार्थकार्थत्वाद्भाविकं तदुदाहृतम्॥" इति लक्षणात्। वसन्ततिलकावृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात्॥ २९॥

येनेति। देवाश्च असुराश्च तैः देवासुरैः। "येषां च विरोधः शाश्वतिकः" इति नैकवद्भावः। एषां यतः कादाचित्क एव विरोधः न गोव्याघ्रादिवत् शाश्वतिक इति आहुः। येन मन्दराद्रिणा मन्थदण्डीकृतेन इति भावः। अपविद्धसलिलः क्षिप्तजलः अतएव स्फुटं नागसद्म पातालं यस्मिन् सः अम्बुनिधिः अमृतं ममन्थे मथितः। मथ्नातेर्द्विकर्मकत्वात् दुहादित्वात् अप्रधाने कर्मणि लिट्। अहिपतेः मन्थगुणीकृतस्य वासुकेरित्यर्थः। "मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्" इति भारतवचनात्। व्यावर्त्तनैः वेष्टनैः आहिताङ्कः कृतचिह्नः सः अयं मन्दराद्रिः

৩০। সুরাসুরগণ জলধিতে অমৃত মন্থন করিয়াছিলেন। তৎকালে মন্দরাদ্রিদ্বারা জলধির জল ক্ষিপ্ত হইয়াছিল, কাজেই নাগলোক স্পষ্টতঃ প্রকাশ পাইয়াছিল। তখন মন্থনগুণীকৃত বাসুকির বেষ্টনে কৃতচিহ্ন হইয়া ঐ মন্দরাদ্রি যেন আকাশ উল্লেখন করতই বিভাত হইয়াছিল।

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥ ३१ ॥

दधत इव विलासशालि नृत्यं
मृदु पतता पवनेन कम्पितानि।
इह ललितविलासिनीजनभ्रू-
गतिकुटिलेषु पयःसु पङ्कजानि ॥ ३२ ॥

अन्वयः। इह अशिशिररश्मेः उस्रैः उच्छ्रायं नीता आनीलाभैः रत्नैः विरचितपरभागा हंसश्येनी स्फटिकरजतभित्तिच्छाया मध्याह्ने अपि मुहुः ज्योत्स्नाशङ्कां वितरति। वाच्य—नीतया विरचितपरभागया हंसश्येन्या स्फटिकरजतभित्तिच्छायया ज्योत्स्नाशङ्का वितीर्यते ॥ ३१ ॥

अन्वयः। इह मृदु पतता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु विलासशालि नृत्यं दधत इव। वाच्य—कम्पितैः पङ्कजैः विलासशालि नृत्यं धार्यत ॥ ३२ ॥

रसम् आकाशं आलिखन् व्यापाटयन् इव विभाति। अत्र आकाशस्याभेदा-त्मकेन आलिखनेन उत्प्रेक्षणात् अनुपात्तगुणानिमित्ता क्रियास्वरूपा उत्प्रेक्षा ॥ ३० ॥

नीतेति। इह अद्रौ अशिशिररश्मेः उष्णांशोः उस्रैः मयूखैः सङ्क्रान्तैः इत्यर्थः। नीतोच्छ्रायम् उच्छ्रायं नीता विस्तारिता इत्यर्थः। तथा आनीलाभैः असितप्रभैः रत्नैः इन्द्रनीलैः विरचितपरभागा तत्सन्निधानात् लब्धोत्कर्षा इत्यर्थः। हंस इव श्येनी श्वेतवर्णा "विशदश्वेतपाण्डराः" इत्यमरः। "वर्णादनुदात्तात्तोपधात्तो नः" इति श्येतशब्दात् ङीप्। तकारस्य च नकारः। स्फटिकानां रजतानां च भित्तयः तासां छाया कान्तिः। अह्नः मध्ये मध्याह्ने अपि इत्यर्थः। मुहुः ज्योत्स्नाशङ्कां ज्योत्स्नाभ्रान्तिं वितरति। ज्योत्स्नाकृतं भ्रान्तिं जनयति इति भ्रान्तिमदलङ्कारः ॥ ३१ ॥

दधत इति। इह अद्रौ मृदु पतता मन्दं वहता पवनेन। कम्पितानि

৩১। এই পর্ব্বতে হংসের ন্যায় শুভ্রবর্ণ স্ফটিক ও রজতভিত্তির কান্তিপুঞ্জ প্রতিফলিত সূর্য্যকিরণে বিস্তারিত এবং নীলকান্তি রত্নিচয়ের নৈকট্যবশে উৎকর্ষপ্রাপ্ত হইয়াও মধ্যাহ্ন কালেও বারংবার জ্যোৎস্নাশঙ্কা জন্মাইতেছে।

৩২। এই পর্ব্বতে পঙ্কজকুল মৃদু পবনে কম্পিত হইয়া সুন্দরী বিলাসিনীজনের ভ্রূগতিবৎ কুটিল জলে যেন বিলাসসহকারে নৃত্য করিতেছে।

अस्मिन्नगृह्यत पिनाकभृता सलील-
मावद्धवेपथुरधीरविलोचनायाः।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः॥ ३३॥

क्रामद्भिर्घनपदवीमनेकसङ्ख्यै-
स्तेजोभिः शुचिमणिजन्मभिर्विभिन्नः।
उस्राणां व्यभिचरतीव सप्तसप्तेः
पर्यस्यन्निह निचयः सहस्रसङ्ख्याम्॥ ३४॥

अन्वयः। अस्मिन् पिनाकभृता अधीरविलोचनायाः ईश्वरायाः आवद्धवेपथुः विन्यस्तमङ्गलमहौषधिः पाणिः स्रस्तोरगप्रतिसरेण करेण अगृह्यत। वाच्य—पिनाकभृत् आवद्धवेपथुं विन्यस्तमङ्गलमहौषधिं पाणिम् अगृह्णात्॥ ३३॥

अन्वयः। घनपदवीं क्रामद्भिः अनेकसंख्यैः शुचिमणिजन्मभिः तेजोभिः विभिन्नः (अतः) पर्यस्यन् इह सप्तसप्तेः उस्राणां निचयः सहस्रसंख्यां व्यभिचरति इव॥ वाच्य—विभिन्नेन पर्यस्यता उस्राणां निचयेन सहस्रसंख्या व्यभिचर्यते॥ ३४॥

पङ्कजानि ललितविलासिनीजनस्य भ्रूगतिवत् कुटिलेषु ईषत्तरङ्गितेषु इत्यर्थः, पयःसु विलासशालि नृत्यं दधत इव सविलासं नृत्यन्ति इव इति उत्प्रेक्षा। पुष्पिताग्रा वृत्तम्॥ ३२॥

अस्मिन्निति। अस्मिन् अद्रौ पिनाकभृता शिवेन अधीरविलोचनायाः चकितदृष्टेः उरगदर्शनादिति भावः। ईश्वरायाः गौर्य्याः। "स्थेशभास" इत्यादिना वरच्। पुंयोगविवक्षाभावात् न ङीष्। आवद्धवेपथुः प्राप्तकम्प इति सात्त्विकोक्तिः। "ट्वितोऽथुच्" इति अथुच्प्रत्ययः। विन्यस्ता मङ्गलमहौषधिः यवाङ्कुरादिः यस्मिन् सः पाणिः स्रस्तः गलितः उरग एव प्रतिसरः कौतुकसूत्रं यस्य तेन। "आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने" इति विश्वः। करेण सलीलम् अगृह्यत इति देवस्य पार्वतीपरिणयनवर्णनम्। ईशार्थम् इत्यत्र तु अनुग्रहमात्रोक्तिरिति अपौनरुक्त्यम्। भाविकम् एव अलङ्कारः॥ ३३॥

क्रामद्भिरिति। घनपदवीम् आकाशं क्रामद्भिः व्यश्नुवानैः अनेक-

৩৩। এই পর্ব্বতেই পিনাকপাণি চকিতনয়না গৌরীর মঙ্গলমহৌষধিযুক্ত কম্পান্বিতকর লীলাসহকারে গ্রহণ করিয়াছিলেন। গ্রহণকালে তদীয় করের সর্পরূপ কৌতুকসূত্র স্রস্ত হইয়াছিল।

व्यधत्त यस्मिन् पुरमुच्चगोपुरं
पुरां विजेतुर्धृतये धनाधिपः।
स एष कैलास उपान्तसर्पिणः
करोत्यकालास्तमयं विवस्वतः॥ ३५॥
नानारत्नज्योतिषां सन्निपाते-
ष्वच्छन्नेष्वन्तःसानु वप्रान्तरेषु।

अन्वयः। यस्मिन् धनाधिपः पुरां विजेतुः धृतये उच्चगोपुरं पुरं व्यधत्त। स एषः कैलासः उपान्तसर्पिणः विवस्वतः अकालास्तमयं करोति। वाच्य—धनाधिपेन उच्चगोपुरं पुरं व्यधीयत। तेन एतेन कैलासेन अस्तमयः क्रियते॥ ३५॥

संख्यः। परःसहस्रैरित्यर्थः। क्वचित् "अनेकवर्णैः" इति पाठस्तु प्रामादिक एव वैयर्थ्यात् व्याघाताच्च इति। शुचिमणिभ्यः स्फटिकेभ्यः जन्म येषां तैः। "जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणोऽपीष्यते" इति वामनः। तेजोभिः विभिन्नः मिश्रः अतएव पर्य्यस्यन् प्रसर्पन् इह अद्रौ सप्तसप्तेः सवितुः उस्राणां किरणानां निचयः निकरः। सहस्रम् इति संख्या सहस्रसंख्या तां स्वनियताम् इति शेषः। व्यभिचरति अतिक्रामति इति उत्प्रेक्षा॥ ३४॥

व्यधत्तेति। यस्मिन् कैलासे धनाधिपः कुबेरः पुरां विजेतुः शिवस्य धृतये सन्तोषाय उच्चगोपुरम् उन्नतपुरद्वारम्। "पुरद्वारन्तु गोपुरम्" इत्यमरः। पुरम् अलकाख्यां पुरीं व्यधत्त निर्मितवान् तत्सखित्वात् इति भावः। सः एषः कैलासः उपान्तसर्पिणः प्रान्तचारिणः विवस्वतः सूर्य्यस्य अकाले प्रसिद्धेतरकाले अस्तमयं करोति इव इति उत्प्रेक्षा। वस्तुतस्तु तत्कारणाभावात् व्यञ्जकाप्रयोगात् गम्या उत्प्रेक्षा। सा च उपान्तवर्त्तितया असम्बन्धे सम्बन्धलक्षणातिशयोक्त्युत्थापिता इति विवेकः। अस्तम् इति मकारान्तम् अव्ययम्। तस्य पचाद्यजन्तेन अयशब्देन षष्ठीसमासः। वंशस्थं वृत्तम् उक्तम्॥ ३५॥

৩৪। স্বচ্ছ স্ফটিকজাত সহস্র সহস্র তেজ আকাশে পরিব্যাপ্ত হইয়াছে। ঐ সকল তেজে সম্মিশ্রিত—সুতরাং প্রসর্পিত হইয়া এ পর্ব্বতে সবিতার কিরণপুঞ্জ সহস্র সংখ্যাকেও অতিক্রম করিয়াছে।

৩৫। যে কৈলাসে পুরারির সন্তোষের জন্য কুবের উচ্চ গোপুরান্বিত পুরী নির্ম্মাণ করাইয়াছিলেন, এই সেই ধাম কৈলাসপ্রান্তচারী দিবাকরের আকালিক অস্ত বিধান করিতেছে।

बद्धां बद्धां भित्तिशङ्काममुष्मि-
न्नावानावान् मातरिश्वा निहन्ति ॥ ३६ ॥
रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥ ३७ ॥

अन्वयः । अमुष्मिन् अन्तःसानु नानारत्नज्योतिषां सन्निपातैः छन्नेषु वप्रान्तरेषु बद्धां बद्धां भित्तिशङ्काम् आवान् आवान् मातरिश्वा निहन्ति । वाच्य—आवाता आवाता मातरिश्वना बद्धा बद्धा भित्तिशङ्का निहन्यते ॥ ३६ ॥

अन्वयः । अस्मिन् शाद्वलेभ्यः रम्या नवद्युतिः न अपैति, नलिनीवनानि अनुदिनं श्यामीभवन्ति, विचित्रकुसुमस्तवकाचितानां शाखाभृतां पल्लवानि न परिणमन्ति । वाच्य—रम्यया नवद्युत्या न अपेयते । नलिनीवनैः श्यामीभूयते, पल्लवैः परिणम्यते ॥ ३७ ॥

नानेति । अमुष्मिन् कैलासे अन्तःसानु सानुषु इत्यर्थः । विभक्त्यर्थे अव्ययीभावः । नानारत्नज्योतिषां सन्निपातैः व्यतिकरैः छन्नेषु छादितेषु । "वा दान्तशान्त" इत्यादिना निपातः । वप्रान्तरेषु कटकान्तरेषु बद्धां बद्धामभीक्ष्णबद्धाम् । दृढोत्पादिताम् इत्यर्थः । "नित्यवीप्सयोः" इति नित्यार्थे द्विर्भावः । "नित्यमभीक्ष्णम्" इति काशिका । एकपदं चैतत् । भित्तिशङ्कां भित्तिः इति सन्देहम् आवान् आवान् अभीक्ष्णम् आपतन् । आङ्पूर्वात् वाधातोः शतृप्रत्ययः । द्विर्भावादि पूर्ववत् । मातरि अन्तरिक्षे श्वयति गच्छति इति मातरिश्वा वायुः । कनिन्प्रत्ययः । "तत्पुरुषे कृति बहुलम्" इति अलुक् । निहन्ति निवर्त्तयति । वायुसञ्चारात् भित्त्यभावः अवधार्य्यते इत्यर्थः । अतः निश्चयान्तः सन्देहालङ्कारः । शालिनीवृत्तम् ॥ ३६ ॥

रम्येति । अस्मिन् अद्रौ । शादाः शष्पाणि सन्ति एषु इति शाद्वलाः तेभ्यः । "शाद्वलः शादहरिते" इत्यमरः । "नडशादाड्ड्वलच्" । रम्या नवा द्युतिः न अपैति, किन्तु नित्या इत्यर्थः । नलिनीवनानि अनुदिनं सर्व्वदा श्यामीभवन्ति, न कदाचित् पाण्डुरीभवन्ति इत्यर्थः । विचित्रकुसुमस्तवकैः आचितानां व्याप्तानां शाखाभृतां तरूणां पल्लवानि न परिणमन्ति न जीर्णानि भवन्ति इत्यर्थः, सर्वदा नूतनानि एव वर्त्तन्ते इत्यर्थः । अत्र प्रस्तुतस्य

৩৬। এই কৈলাসে সানুদেশে বিবিধ রত্নজ্যোতির সমবায়ে বপ্রান্তর সকল সমাচ্ছাদিত হওয়ায় সতত ভিত্তিশঙ্কা জন্মিতেছে ; কিন্তু পুনঃ পুনঃ পবনপাতে সেই ভিত্তিশঙ্কা নিরস্ত করিতেছে।

परिसरविषयेषु लीढमुक्ता
हरिततृणोद्गमशङ्कया मृगीभिः।
इह नवशुककोमला मणीनां
रविकरसंवलिताः फलन्ति भासः॥ ३८॥

उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसम्भवः परागः।
वात्याभिर्वियति विवर्त्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम्॥ ३९॥

अन्वयः। इह परिसरविषयेषु मृगीभिः हरिततृणोद्गमशङ्कया लीढमुक्ताः नवशुककोमलाः मणीनां भासः रविकरसंवलिताः फलन्ति। वाच्य—लीढमुक्ताभिः नवशुककोमलाभिः भाभिः रविकरसंवलिताभिः फल्यते॥ ३८॥

अन्वयः। वात्याभिः अमुष्मात् उत्फुल्लस्थलनलिनीवनात् उद्धूतः वियति समन्तात् विवर्त्तितः सरसिजसम्भवः परागः कनकमयातपत्रलक्ष्मीम् आधत्ते। वाच्य—उद्धूतेन विवर्त्तितेन सरसिजसम्भवेन परागेण कनकमयातपत्रलक्ष्मीः आधीयते॥ ३९॥

एवं तत्तद्वस्तुगतकान्तिस्थैर्य्यरूपकार्य्यस्य वर्णनात् प्रस्तुतम् इव कारणं कश्चित् असाधारणः कैलासस्य महिमा अवगम्यते इति पर्य्यायोक्तिरलङ्कारः। तदुक्तम्—"कारणं गम्यते यत्र प्रस्तुतं कार्य्यवर्णनात्। प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यते" इति॥ ३७॥

परिसरेति। इह अद्रौ परिसरविषयेषु पर्य्यन्तदेशेषु। "विषयो देशे" इति निपातः। मृगीभिः हरिततृणोद्गमशङ्कया नीलतृणाङ्कुरभ्रान्त्या इति भ्रान्तिमदलङ्कारः। लीढाः पूर्वम् आस्वादिताः पश्चात् मुक्ताः लीढमुक्ताः, दग्धप्ररूढः इत्यादिवत् "पूर्वकाल" इत्यादिना समानाधिकरणसमासः। नवशुककोमलाः शुकसवर्णा इत्यर्थः। मणीनां मरकतमणीनां भासः रविकरैः संवलिताः मिश्रिताः सत्यः फलन्ति सम्मूर्च्छन्ति। वर्द्धन्ते इति यावत्॥ ३८॥

৩৭। এই পর্ব্বতে শাদ্বলসমূহের রম্য নবদ্যুতি অপগত হয় না; সমস্ত নলিনীবন অনুদিন শ্যামশোভাই ধারণ করে। বিচিত্র কুসুম-ব্যাপ্ত মহীরুহগণের পল্লবসকলও কখনই জীর্ণ হয় না।

৩৮। এ পর্ব্বতের পর্য্যন্তদেশে মৃগীগণ নীলবর্ণ তৃণাঙ্কুরভ্রমে অগ্রে আস্বাদন করিয়াছে, পরে পরিত্যাগ করিয়াছে, এ হেন নবশুকনিভ কোমল মরকতমণির কান্তিপুঞ্জ দিবাকরের করনিকরে মিশ্রিত হইয়া বর্দ্ধিত হইতেছে।

इह सनियमयोः सुरापगाया-
मुषसि सयावकसव्यपाटरेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥ ४० ॥

अन्वयः । इह उषसि सुरापगायां सयावकसव्यपादरेखा विषमपदा विवर्त्तनेषु पदवी सनियमयोः शिवयोः शरीरयोगं कथयति । वाच्य—पादरेखया विषमपदया'''पदव्या शरीरयोगः कथ्यते ॥ ४० ॥

उत्फुल्लेति । वात्याभिः वातसमूहैः "वातादिभ्यो यत्" इति यत्प्रत्ययः । अमुष्मात् दृश्यमानात् उत्फुल्लस्थलनलिनीवनात् जलपतितस्य परागस्य उत्थानासम्भवात् स्थलग्रहणम् । उत्फुल्लसंफुल्लयोरुपसंख्यानात् निष्ठालत्वम् । उद्धूतः उत्थापितः वियति समन्तात् विवर्त्तितः परिमण्डलितः । अन्तराले तु दण्डायमान एवेति भावः । सरसिजसम्भवः पद्मोद्भवः परागः । रूढ्यभिप्रायेण अत्र सरसिजशब्दप्रयोगः द्रष्टव्यः । कनकमयातपत्रलक्ष्मीम् आधत्ते अनुकरोति । अत्र परागस्य आतपत्रलक्ष्मीसम्बन्धासम्भवात् तत्सदृशीं लक्ष्मीम् इति प्रतिबिम्बेन आक्षेपात् असम्भविधर्म्मसम्बन्धा इयं निदर्शना । तदुक्तम्— "असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥" इति ॥ ३९ ॥

इहेति । इह अद्रौ उषसि प्रभाते सुरापगायां लक्षणया तत्कच्छे सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा । "यावोऽलक्तो द्रुमामयः" इत्यमरः । यथा विषमाणि महदल्पानि पदानि यस्यां सा विवर्त्तनेषु प्रदक्षिणक्रियासु पदवी शिवयोः प्रदक्षिणपद्धतिरित्यर्थः । सनियमयोः सन्ध्यायां प्रणमतोरित्यर्थः । शिवा च शिवश्च तयोः शिवयोः उमाशङ्करयोः । "पुमान् स्त्रिया" इति एकशेषः । शरीरयोगम् अर्द्धाङ्गसङ्घटनारूपं कथयति । सनियमयोः इति नियमविषये अपि विरहासहौ इह विहरतः शिवौ इति भावः । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वात् काव्यलिङ्गम् अलङ्कारः ॥ ४० ॥

৩৯। এই উৎফুল্ল স্থলপদ্মবন হইতে পদ্মপরাগ বায়ুবশে উত্থিত ও আকাশের চারিদিকে পরিমণ্ডলিত হইয়া কনকময় আতপত্রের শোভা সম্পাদন করিতেছে।

৪০। এই পর্ব্বতে প্রভাতে সুরনদীর কচ্ছদেশে নিয়মনিষ্ঠ শিব-শিবার অলক্তাক্ত বামপদশালী সম-বিষম প্রদক্ষিণপদ্ধতি তাঁহাদের অর্দ্ধাঙ্গসংঘটনরূপ শরীরসংযোগ প্রকাশ করিতেছে।

सम्मूर्च्छतां रजतभित्तिमयूखजालै-
रालोलपादपलतान्तरनिर्गतानाम्।
घर्म्मद्युतेरिह मुहुः पटलानि धाम्ना-
मादर्शमण्डलनिभानि समुल्लसन्ति॥ ४१ ॥

शुक्लैर्मयूखनिचयैः परिवीतमूर्त्ति-
र्वप्राभिघातपरिमण्डलितोरुदेहः।
शृङ्गाण्यमुष्य भजते गणभर्त्तुरुक्षा
कुर्वन् वधूजनमनःसु शशाङ्कशङ्काम् ॥४२॥

अन्वयः। इह रजतभित्तिमयूखजालैः सम्मूर्च्छताम् आलोलपादपलतान्तरनिर्गतानां घर्म्मद्युतेः धाम्नाम आदर्शमण्डलनिभानि पटलानि समुल्लसन्ति। वाच्य—धाम्नाम आदर्शमण्डलनिभैः पटलैः समुल्लस्यते ॥ ४१ ॥

अन्वयः। शुक्लैः मयूखनिचयैः परिवीतमूर्त्तिः वप्राभिघातपरिमण्डलितोरुदेहः गणभर्त्तुः उक्षा वधूजनमनःसु शशाङ्कशङ्कां कुर्वन् अमुष्य शृङ्गाणि भजते। वाच्य—परिवीतमूर्त्तिना...उरुदेहेन उक्षणा शशाङ्कशङ्कां कुर्वता शृङ्गाणि भज्यन्ते ॥ ४२ ॥

सम्मूर्च्छतामिति। इह अद्रौ रजतभित्तिमयूखजालैः सम्मूर्च्छतां बहुलीभवताम् आलोलानां पादपलतानां तरुशाखानाम् अन्तरेषु रन्ध्रेषु निर्गतानां प्रसृतानां घर्म्मद्युतेः उष्णांशोः धाम्नां तेजसाम् आदर्शमण्डलनिभानि दर्पणबिम्बसदृशानि इति उपमालङ्कारः। पटलानि मण्डलानि मुहुः वारं वारं समुल्लसन्ति पुनः पुनः स्फुरन्ति न तु सातत्येन लतानाम् आलोलत्वाभावात्। तच्च नान्यत्र मृत्पाषाणादिप्रायाणां सम्भवति इति भावः॥ ४१ ॥

शुक्लैरिति। शुक्लैः मयूखनिचयैः शुभ्रकिरणसमूहैः परिवीतमूर्त्तिः व्याप्तदेहः। वप्राभिघातेन वप्रक्रीड़या परिमण्डलितः वर्त्तुलीकृतः उरुदेहः बृहच्छरीरं यस्य तथोक्तः गणभर्त्तुः प्रमथनाथस्य उक्षा वृषभः। "उक्षानड्वान्-बलीवर्द्द ऋषभो वृषभो वृषः" इत्यमरः। वधूजनमनःसु शशाङ्कशङ्कां चन्द्रभ्रान्तिं कुर्वन् तेषां मौग्ध्यादिति भावः। अमुष्य अद्रेः शृङ्गाणि भजते सेवते। अत्र शङ्काशब्दस्य सन्देहार्थत्वे सन्देहालङ्कारः। भ्रान्तिपरत्वे भ्रान्तिमदलङ्कारः। यथा इच्छसि तथा अस्तु। स च उक्तविशेषणोत्थेन काव्यलिङ्गेन अङ्गाङ्गिभावेन सङ्कीर्य्यते॥ ४२ ॥

৪১। এ পর্ব্বতে সূর্য্যের দর্পণবিম্বপ্রতিম তেজোরাশি রজতভিত্তির ময়ূখমালায় বহুলীভূত, তথা চঞ্চল পাদপলতার রন্ধ্রপথে নির্গত হইয়া বারংবার সমুল্লসিত হইতেছে।

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले ।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ॥ ४३ ॥

स्नपितनवलतातरुप्रवालै-
रमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भो-
रमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

अन्वयः । इह विविधाः शिखरमणिरुचः सम्प्रति लघुनि क्षीणपयसि भिदाम् उपेयुषि जलधरपटले कथमपि शनकैः लब्धजन्म खण्डितविग्रहं बलभिदो धनुः पूरयितुं विभवः भवन्ति । वाच्य— विविधाभिः शिखरमणिरुग्भिः विभुभिः भूयते ॥ ४३ ॥

अन्वयः । इह शम्भोः इन्दुलेखा स्नपितनवलतातरुप्रवालैः अमृतलवस्रुतिशालिभिः मयूखैः सततम् असितयामिनीषु अपि वनान्तम् अमलयति । वाच्य—इन्दुलेखया वनान्तम् अमलयते ॥ ४४ ॥

सम्प्रतीति । इह अद्रौ विविधाः नानावर्णाः शिखरमणिरुचः सम्प्रति शरदि इत्यर्थः । लघुनि अगुरुणि कुतः क्षीणपयसि अतएव भिदां भेदम् । "षिद्भिदादिभ्योऽङ्"इति अङ्प्रत्ययः । उपेयुषि गते जलधरपटले मेघमण्डले कथम् अपि शनकैः लब्धजन्म उत्पन्नम् इत्यर्थः । अतएव खण्डितविग्रहं छिन्नस्वरूपं बलभिदः इन्द्रस्य धनुः पूरयितुं विभवः समर्थाः भवन्ति । अत्र इन्द्रधनुषः मणिरुचीनाम् असम्बन्धे सम्बन्धकथनात् अतिशयोक्तिः अलङ्कारः । वंशपत्रपतितं वृत्तम् । "दिङ्मुनिवंशपत्रपतितं भरनभनलगैः" इति लक्षणात् ॥ ४३ ॥

स्नपितेति । इह अद्रौ शम्भोः इन्दुलेखा स्नपितानि नवानि लतानां तरूणां च प्रवालानि यैः तैः । अमृतलवस्रुत्या अमृतबिन्दुनिःस्यन्देन शालन्ते ये तैः मयूखैः सततं सर्वकालम् असितयामिनीषु कृष्णपक्षरात्रिषु

৪২। প্রমথনাথের বৃষভের দেহ শুভ্র কিরণপুঞ্জে পরিব্যাপ্ত; উহার বৃহৎ বপু বপ্রাভিঘাতে বর্তুলীকৃত; ঐ বৃষভ বধূজনের মনে শশাঙ্কশঙ্কা উৎপাদন করিয়া ঐ গিরির শৃঙ্গ হইতে শৃঙ্গান্তরে বিচরণ করিতেছে।

৪৩। বর্তমান শরৎকালে ক্ষীণজল হইয়া ছোট ছোট মেঘগুলি ভিন্ন ভিন্ন হইয়া যাইতেছে; উহাতে ইন্দ্রধনু অস্পষ্টভাবে কথঞ্চিৎ উৎপন্ন ও খণ্ডিত হইতেছে, (পরন্তু) এই পর্বতস্থিত নানাবর্ণ শিখরমণিপ্রভা ঐ ধনুর আকৃতিপূরণে সমর্থ হইতেছে।

क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम्।
अयमनेकहिरण्मयकन्दर-
स्तव पितुर्दयितो जगतीधरः॥ ४५ ॥

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥

अन्वयः। यः अनुवनं विततां रौचनिकीं रुचं बृहद्बृहतिकाम् इव क्षिपति, अनेकहिरण्मयकन्दरः अयं तव पितुः दयितः जगतीधरः। वाच्य—येन वितता रौचनिकी रुक् बृहद्बृहतिकेव क्षिप्यते, अनेकहिरण्मयकन्दरेण अनेन दयितेन जगतीधरेण (भूयते)॥ ४५ ॥

अन्वयः। अमुत्र अनिले जवात् लतानां सक्तिम् अपनयति (सति) सहसा वैरोचनैः मयूखैः द्विगुणिताः हिरण्मयीनां रोधोभुवां भासः मुहुः तडिद्विलसितानि विडम्बयन्ति। वाच्य—द्विगुणिताभिः तडिद्विलसितानि विडम्ब्यन्ते ॥ ४६ ॥

अपि वनान्तम् अमलयति धवलयति। अन्यत्र न एतदस्ति इति व्यतिरेकः व्यज्यते ॥ ४४ ॥

क्षिपतीति। अथ यः अद्रिः अनुवनं विततां रौचनिकीं रुचं सौवर्णीम् इत्यर्थः। रोचनया रक्तां रौचनिकीम्। "लाक्षारोचनशकलकर्दमाट्ठक्" इति ठक्। टिड्ढाणञ्" इत्यादिना ङीप्। उत्प्रेक्षते। बृहद्बृहतिकां महोत्तरासङ्गम् इव। "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरः। क्षिपति प्रसारयति। अनेकाः हिरण्मय्यः यस्य सः। हिरण्मयशब्दः "दाण्डिनायन" इत्यादिना निपातनात् साधुः। अयं पुरोवर्त्ती गिरिः इत्यर्थः। तव पितुः इन्द्रस्य दयितः प्रियः जगत्याः धरः जगतीधरः। यस्ते गन्तव्य इन्द्रकीलाख्य इत्यर्थः॥ ४५ ॥

सक्तिमिति। अमुत्र अमुष्मिन् अद्रौ अनिले जवात् झटिति लतानां

৪৪। এ পর্ব্বতে শম্ভুর শিরঃস্থিত চন্দ্রলেখা ময়ূখমালায় সতত কৃষ্ণপক্ষীয় রাত্রিকালেও বনান্তভূমি ধবলিত করিতেছে; ঐ ময়ূখমালায় তরুলতাবাজির নব প্রবাল সকল ধৌত হইতেছে, আর বিন্দু বিন্দু অমৃত ক্ষরণ করিয়া শোভা পাইতেছে।

৪৫। যে পর্ব্বতে প্রতি বনে বৃহৎ উত্তরীয় বস্ত্রের ন্যায় স্বর্ণকান্তি ছড়াইয়া দিতেছে, বহু হিরণ্ময় কন্দরশালী—তোমার পিতার প্রিয় সেই ঐ পর্ব্বত অবস্থিত।

कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्जितैः।
इह मदस्नपितैरनुमीयते
सुरगजस्य गतं हरिचन्दनैः॥ ४७॥

जलदजालघनैरसिताश्मनाम्
उपहतप्रचयेह मरीचिभिः।
भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः॥ ४८॥

अन्वयः। इह कषणकम्पनिरस्तमहाहिभिः क्षणविमत्तमतङ्गजवर्जितैः मदस्नपितैः हरिचन्दनैः सुरगजस्य गतम् अनुमीयते॥ वाच्य—गतम् अनुमान्ति ( पर्वतचारिणो जनाः )॥ ४७॥

अन्वयः। इह जलदजालघनैः असिताश्मना मरीचिभिः उपहतप्रचया ( अतः ) अदीपितकन्दरा विवस्वतः दीप्तिः तिमिरैः संवलिता इव भवति॥ वाच्य—उपहतप्रचयया अदीपितकन्दरया दीप्त्या संवलितयेव भूयते॥ ४८॥

सक्तिम् अन्योऽन्यसङ्गम् अपनयति सति सहसा हठात् वैरोचनैः सावित्रैः मयूखैः द्विगुणिताः द्विरावृत्ताः कृता द्विगुणिताः। "गुणस्त्वावृत्ति-शब्दादिष्विन्द्रियामुख्यतन्तुषु" इति वैजयन्ती। हिरण्मयीनां हिरण्य-विकाराणाम्। "दाण्डिनायन" इत्यादिना निपातनात् साधुः। रोधोभुवां भासः मुहुः तड़िद्विलसितानि विड़म्बयन्ति अनुकुर्वन्ति इत्यर्थः। उपमा-लङ्कारः॥ ४६॥

कषणेति। इह अद्रौ कषणेन कण्डूयनेन यः कम्पः तेन निरस्ताः महाहयः महासर्पाः येभ्यः तैः। क्षणं विमत्तमतङ्गजवर्जितैः मत्तमतङ्गज-रहितैः, कुतः? मदस्नपितैः ऐरावतमदसिक्तैः इत्यर्थः। "मितां ह्रस्वः" इति ह्रस्वः। हरिचन्दनैः चन्दनद्रुमैः सुरगजस्य ऐरावतस्य गतं प्राप्तिः अनुमीयते। हरिचन्दनविशेषणैः काव्यलिङ्गम् उन्नेयम्॥ ४७॥

৪৬। এ পর্ব্বতে বেগে বায়ু বহিয়া লতাজালের পরস্পর সঙ্গ ঘুচাইয়া দিতেছে; সুতরাং হিরণ্ময়ী তটভূমির দীপ্তিচ্ছটা হঠাৎ রবিকরযোগে দ্বিগুণিত হওয়া বিদ্যুদ্বিস্ফুরণের অনুকরণ করিতেছে।

৪৭। এ পর্ব্বতে যে সকল চন্দনতরু আছে, গজগণ্ডকণ্ডূয়নকম্পনে মহাসর্প সকল তাহা হইতে চলিয়া গিয়াছে; ঐরাবতের মদজলে সিক্ত ঐ সকল চন্দনতরুতলে মত্তমাতঙ্গগণ আর এক্ষণে উপস্থিত নাই; সুতরাং ঐ সকল চন্দনতরু দ্বারা এখানে ঐরাবতের আগমন অনুমিত হইতেছে।

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ॥४९॥
मा भूवन्नपथहृत [हरा] स्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम् ।

अन्वयः । इह भव्यो भवन् अपि मुनेः शासनेन क्षात्रे पथि स्थितः हतप्रमादः ( सन् ) त्वं तपस्य, हि प्रायेण हितार्थकरे विधौ सत्यपि अन्तरायैः विना श्रेयांसि लब्धुम् असुखानि ॥ वाच्य—भव्येन भवतापि पथि स्थितेन हतप्रमादेन सता त्वया तपस्यतां श्रेयांसि: लब्धुम् असुखैर्भूयते ॥ ४९ ॥

जलदेति । इह अस्मिन् अद्रौ जलदजालघनैः मेघवृन्दसान्द्रैः असिताश्मनाम् इन्द्रनीलानां मरीचिभिः दीधितिभिः । "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः । उपहतप्रचया विघट्टितसङ्घाता अतएव अदीपितकन्दरा अप्रकाशितगह्वरा विवस्वतः दीप्तिः तिमिरैः संवलिता संहता व्यामिश्रिता इव भवति इति उत्प्रेक्षा ॥ ४८ ॥

भव्य इति । इह अद्रौ भव्यः शान्तः भवन् अपि मुनेः व्यासस्य शासनेन इन्द्राराधनरूपेण क्षात्रे पथि क्षत्रियमार्गे स्थितः गृहीतशस्त्र एव इत्यर्थः । हतप्रमादः अप्रमत्तः सन् तपस्य तपश्चर्य्यां कुरु । तपस्य इति "कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ् । तदन्ताद्धातोर्लोट् । न च सर्वभूतहितकारिणः मे प्रमादः किं करिष्यतीति विश्वसितव्यम् इति अर्थान्तरन्यासेन आह—प्रायेणेति । हि यस्मात् बाहुल्येन । "प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः" इति हेमचन्द्रः । हितम् अर्थं करोतीति तस्मिन् हितार्थकरे विधौ व्यापारे सति अन्तरायैः विघ्नैः विना श्रेयांसि लब्धुम् असुखानि अशक्यानि इत्यर्थः । अतएव "शकधृष" इत्यादिना समानकर्त्तृकेषु तुमुन् । अकारणवैरिणः सर्वत्र सर्व्वस्यापि सन्ति इति भावः ॥ ४९ ॥

৪৮। এ পর্ব্বতে ইন্দ্রনীলমণিসমূহের মেঘসান্দ্র মরীচিনিচয়ে দিবাকরের কিরণনিকর উপহত হওয়ায় গিরিগহ্বর আলোকিত হইতেছে না ; ঐ দিবাকরের আলোক যেন তিমিররাশিতে মিশ্রিত হইয়াই বিরাজ করিতেছে।

৪৯। তুমি শান্তপ্রকৃতি হইলেও ব্যাসমুনির আদেশে ক্ষত্রোচিত পথে অর্থাৎ শস্ত্রপাণি হইয়া অপ্রমত্তভাবে তপস্যা কর। বস্তুতঃ হিতার্থকর ব্যাপার হইলেও বিনা বিঘ্নে মঙ্গললাভ করা যায় না। ভাবার্থ এই যে, সর্ব্বত্রই সকলের অহেতুক শত্রু বিদ্যমান, অতএব সাবধানে তপস্যা কর্ত্তব্য।

रक्षन्तस्तपसि बलञ्च लोकपाला:
कल्याणीमधिकफलां क्रियां क्रियासु:॥ ५० ॥
इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपि पृथासुत: प्रदध्यौ
संधत्ते भृशमरतिं हि सद्वियोग:॥ ५१ ॥

अन्वय:। तव इन्द्रियाश्वा: ते अपथहृत: [अपथहरा:] मा भूवन् सन्तापे सति शिव: शिवां प्रसक्तिं दिशतु। लोकपाला: तपसि बलं रक्षन्त: कल्याणीं क्रियाम् अधिकफलां क्रियासु:॥ वाच्य—इन्द्रियाश्वै: अपथहृद्भि: [अपथहरै:] मा भावि, शिवेन शिवा प्रसक्ति: दिश्यताम्। लोकपालै: बलं रक्षद्भि: कल्याणी क्रिया अधिकफला क्रियेष्ट॥ ५० ॥

अन्वय:। प्रियार्हे राजराजभृत्ये इति हितं प्रियम् उक्त्वा सपदि स्वं धाम गतवति (सति) पृथासुत: सोत्कण्ठं किम् अपि प्रदध्यौ। हि सद्वियोग: भृशम् अरतिं संधत्ते॥ वाच्य—पृथासुतेन किमपि प्रदध्ये, सद्वियोगेन अरति: सधीयते॥ ५१ ॥

मा भूवन्निति। तव इन्द्रियाणि एव अश्वा: ते अपथेन हरन्ति इति अपथहृतो [अपथहरा:] मा भूवन् त्वाम् अपथं मा नैषु: इत्यर्थ:। [अपपूर्वकहृञ: कर्त्तरि क्विप् अच् वा पाठभेदात्]। "माङि लुङ्" इति आशीरर्थे लुङ्। सन्तापे तप:क्लेशे सति शिव: शिवां साधीयसीं प्रसक्तिं प्रवृत्तिम् उत्साहं दिशतु। किञ्चेति चार्थ:। लोकपाला: इन्द्रादय: तपसि विषये बलं शक्तिं रक्षन्त: वर्द्धयन्त: सन्त: कल्याणीं क्रियाम् अनुष्ठानम् अधिकफलां साध्वीं क्रियासु: कुर्वन्तु। करोते: आशिषि लोट्॥ ५० ॥

इतीति। प्रियार्हे राजराजभृत्ये इति पूर्वोक्तम्। हितं प्रिय वचनम् इति शेष:। उक्त्वा सपदि स्वं स्वकीयं धाम स्थानं गतवति सति, पृथासुत: अर्जुन: सोत्कण्ठं सौत्सुक्यं किम् अपि प्रदध्यौ चिन्तयामास। तथाहि—सद्वियोग: सुजनवियोग: भृशम् अरतिं व्यथां संधत्ते करोति इत्यर्थ:। अर्थान्तरन्यास:॥ ५१ ॥

৫০। তোমার ইন্দ্রিয়রূপ অশ্বগণ যেন অপথে পদার্পণ করে না; ক্লেশ উপস্থিত হইলে শিব তোমায় প্রবল উৎসাহ প্রদান করুন। লোকপালগণ তোমার তপঃশক্তি বর্দ্ধিত করিয়া কল্যাণময়ী ক্রিয়াকে অধিক ফলদাত্রী করুন।

৫১। প্রেমাস্পদ কুবেরানুচর এইরূপ হিত এবং প্রিয় বাক্য বলিয়া সহসা স্বস্থানে প্রস্থান করিলে, পৃথানন্দন অর্জ্জুন উৎকণ্ঠা সহকারে কি যেন চিন্তা করিতে লাগিলেন। বস্তুতঃ সুজনবিয়োগ একান্তই দুঃখোৎপাদন করিয়া থাকে।

तमनतिशयनीयं सर्वतः सारयोगा-
दविरहितमनेकेनाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसाशंसितं सः
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ ५२ ॥

इति भारविकृतौ महाकाव्ये हिमवद्वर्णनं नाम
पञ्चमः सर्गः ॥ ५ ॥

अन्वयः । अकृशलक्ष्मीः सः अर्जुनः सर्वतः सारयोगात् अनतिशयनीयम् अनेकेन अङ्कभाजा फलेन अविरहितम् अकृशं चेतसा आशंसितं तं शैलं स्वं पुरुषकारमिव अभ्याससाद ॥ वाच्य—अकृशलक्ष्म्या तेन अर्जुनेन अनतिशयनीयः अविरहितः अकृशः आशंसितः शैलः स्वः पुरुषकार इव अभ्याससादे ॥ ५२ ॥

तमिति । अकृशाः पूर्णाः लक्ष्म्यः शोभाः यस्य सः अकृशलक्ष्मीः इति बहुवचनाश्रितः बहुव्रीहिः । एवञ्च "उरःप्रभृतिभ्यश्च" इति कप्प्रत्ययानवकाशः तत्र लक्ष्मीशब्दस्य एकवचनान्तपाठात् । नापि "नद्यृतश्च" इत्यस्य अवकाशः उरःप्रभृतिपाठसामर्थ्यादेव । शेषिकस्तु वैभाषिक इति अविरोधः । सः अर्जुनः सर्वतः सर्वत्र सारयोगात् उत्कृष्टबलप्रयोगात् । "सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिषु" इति उभयत्रापि अमरः । अनतिशयनीयम् अनतिक्रमणीयम् अनेकेन बहुना अङ्कभाजा समीपं गतेन शीघ्रभाविना इति यावत् । फलेन कार्य्यसिद्ध्या अविरहितम् अशून्यं कार्य्यसिद्धेरवश्यं साधकम् इत्यर्थः । अकृशम् अतनुं चेतसा आशंसितं प्राप्तुम् इष्टं शैलम् इन्द्रकीलं स्वम् आत्मीयं पुरुषस्य कारः कर्म तं पुरुषकारम् उक्तविशेषणविशिष्टं पौरुषम् इव अभ्याससाद अधिष्ठितवान् । मालिनीवृत्तम ॥५२

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
पञ्चमः सर्गः ॥ ५

---

৫২। পূর্ণশোভাসম্পন্ন সেই অর্জ্জুন স্বীয় সুস্পষ্ট পুরুষকারবৎ বিপুল ইন্দ্রকীল পর্ব্বতে অধিষ্ঠান করিলেন। ঐ পর্ব্বত সর্ব্বথা বলপ্রয়োগ করিলেও অনতিক্রমণীয়; অচিরভাবী বহুফলে উহা পরিপূর্ণ, অর্জ্জুন উহাকে পাইবার জন্য বহুদিন হইতে মনে মনে আকাঙ্ক্ষা করিতেছিলেন।

---

## षष्ठः सर्गः ।

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

तमनिन्द्यवन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

रुचिराकृतिरिति । अथो आसादनानन्तरं रुचिराकृतिः सौम्यविग्रहः । धृतसत्पथः अवलम्बितसन्मार्गः आकारानुरूपगुणवान् इत्यर्थः । "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकाः, उपमाने अपि समानम् एतत् । सः पुरुहूतसुतः अर्जुनः, कनकस्य विकाराः सानवो यस्य तं कनकसानुम् । गरुड़मात्रव्यावृत्त्यर्थं विशेषणम् एतत् । "समुदाये विकारषष्ठ्योश्च" इति बहुव्रीहिः उत्तरपदलोपश्च । तम् इन्द्रकीलं परमः पुमान् विष्णुः पततां पक्षिणां पतिं गरुड़म् इव । त्रिभिः पथिभिः गच्छतीति त्रिपथगा भागीरथी । "अन्येष्वपि दृश्यते" इति डप्रत्ययः, उपपदसमासः उत्तरपदसमासश्च । ताम् अभितः अभिमुखम् आरुरोह । "समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः । प्रमिताक्षरावृत्तम् । "प्रमिताक्षरा सजससैरुदिता" इति लक्षणात् ॥ १ ॥

अथ अस्य कार्य्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति—तमिति । विहिताः अलिनिक्वणाः जयध्वनयः इव यैः ते तथोक्ताः । पवनेरिताः पवनेन वायुना नुन्नाः अतएव आकुलाः लोलाः विजिह्माः वक्राश्च शिखाः अग्राणि येषां ते तथोक्ताः । "शिखा ज्वाला केकिमौल्योः शिखाशाखाग्रमौलिषु" इति वैजयन्ती । जगतीरुहः भूरुहः । क्विप् । अनिन्द्याः अनवद्याः ये वन्दिनः स्तुतिपाठकाः ते इव तम् इन्द्रसुतम् अर्जुनं कुसुमैः अवचकरुः अभिववृषुः इत्यर्थः । "ऋच्छत्यृताम्" इति गुणः । अत्र किरतेर्व्ष्यर्थत्वात् कुसु-

अवधूतपङ्कजपरागकणा-
स्तनुजाह्नवीसलिलवीचिभिदः ।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः ॥३॥

उदितोपलस्खलनसंवलिताः
स्फुटहंससारसविरावयुजः ।
मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुवप्रमपाम् ॥ ४ ॥

अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम् ।

मानां करणत्वं विक्षेपार्थत्वे तु कर्मत्वमेव। यथा "कटाक्षान् वामा किरति" इति दृश्यते च धातूनामर्थभेदात् कारकव्यत्ययः। यथा सिञ्चतेः क्षरणार्द्रीकरणयोः अर्थयोः द्रवद्रव्यस्य कर्मत्वकरणत्वे। यथा—"मेघोऽमृतं सिञ्चति गौः पयश्च।" "सिञ्चतीवामृतैर्वपुः" इति। अत्र वाक्ये समासगतयोरुपमयोः साध्यसाधनभावात् अङ्गाङ्गिभावेन सङ्करः ॥ २ ॥

अवधूतेति। अवधूताः प्रसारिताः पङ्कजपरागकणाः यैः तैः ते तथोक्ताः इति सौरभ्योक्तिः। तनूः जाह्नव्याः सलिलवीचीः भिन्दन्ति इति तथोक्ताः इति शैत्योक्तिः। सुखयन्ति इति सुखाः 'पचाद्यच्'सुखस्पर्शाः इति मान्द्योक्तिः। मरुतः वाताः तम् अर्जुनं सुहृदः सखायम् इव अभिमुखम् एत्य आगत्य परिरेभिरे आलिङ्गितवन्तः ॥ ३ ॥

उदितेति। उदितोपलेषु उन्नतपाषाणेषु स्खलनेन प्रतिघातेन संवलिताः चूर्णिताः अत: तूर्य्यघोष इव घुमघुमायमाना इत्यर्थः। स्फुटैः हंसानां सारसानां च विरावैः युज्यन्ते इति तथोक्ताः। क्विप्। अनुवप्रम् अपाम् अन्तः पतन्तीनाम् इति शेषः। ध्वनयः अस्य अर्जुनस्य मङ्गलं प्रयोजनम् एषां ते माङ्गलिकाः, "प्रयोजनम्" इति ठञ्। तैः तूर्य्यैः कृतां मुदं हर्षं प्रतेनुः। अत्र अन्यस्य अन्यकार्य्यकरणासम्भवात् तूर्य्यकृतमुत्सदृशीं मुदम् इति प्रतिबिम्बेन आक्षेपात् निदर्शनालङ्कारः ॥ ४ ॥

स ददर्श वेतसवनाचरितां
प्रणतिं बलीयसि समृद्धिकरीम् ॥५॥
प्रबभूव नालमवलोकयितुं
परितः सरोजरजसाऽरुणितम्।
सरिदुत्तरीयमिव संहतिमत्
स तरङ्गरङ्गि कलहंसकुलम् ॥ ६ ॥
दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान् ॥७॥

अवरुग्णेति। सः अर्जुनः पुरः अग्र अवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतदेवदारुद्रुमे बलीयसि बलवत्तरे। मत्वन्तात् ईयसुनि "विन्मतोर्लुक्" इति मतुपो लुक्। सुरसरित्प्रयसां निचये पूरे विषये वेतसवनेन वाणीरवनेन आचरिताम्। "अथ वेतसे रथाभ्रपुष्पविदुरशीतवानीरवञ्जुला" इत्यमरः। समृद्धिकरीं श्रेयस्करीं लोके यथा दृष्टाम् इत्यर्थः। प्रणतिं ददर्श। या सर्वलोकदृष्टान्तभूता इति भावः॥ ५ ॥

प्रबभूवेति। सः अर्जुनः परितः सरोजरजसा कमलरेणुना अरुणितं पाटलितम् उत्तरीयं च कुसुमादिना अरुणितं भवति संहतिमत् नीरन्ध्रं तरङ्गरङ्गि वारितरङ्गशोभि सरिदुत्तरीयं स्तनांशुकम् इव स्थितं कलहंसकुलं कादम्बकुलम् अवलोकयितुम् अलम् अत्यर्थं न प्रबभूव न शशाक। तत्सौन्दर्य्योद्वेलत्वात् इति भावः॥ ६ ॥

दधतीति। सः अर्जुनः क्षतीः क्षतानि दधति धारयति। कुतः? परिणताः तिर्य्यग्दन्तप्रहारिणः द्विरदाः यस्मिन् तस्मिन्। "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः। मदस्रुतिभिः मुदितालियोषिति रोधसि अधिकां धृतिं प्रीतिं बबन्ध निश्चलीकृतवान् इत्यर्थः। तथाहि— महान् जनः रुजन् पीड़यन् अपि महते गुणाय उत्कर्षाय भवति महत्कृता पीड़ा अपि शुभावहा एव इत्यर्थः। तत् युक्तं गजरुग्णस्य अपि रोधसः प्रीतिकरत्वम् इति भावः॥ ७ ॥

अनुहेमवप्रमरुणैः समतां
गतसूर्मिभिः सहचरं पृथुभिः ।
स रथाङ्गनामवनितां करुणै-
रनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥

सितवाजिने निजगदू रुचय-
श्चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि
स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

उपलाहतोद्धततरङ्गधृतं
जविना विधूतविततं मरुता ।
स ददर्श केतकशिखाविशदं
सरितः प्रहासमिव फेनमपाम् ॥ १० ॥

अन्विति । सः अर्जुनः अनुहेमवप्रं कनकसानुसमीपे । समीपार्थे अव्ययीभावः । अरुणैः कनककान्त्युपरञ्जनादिति भावः । पृथुभिः ऊर्मिभिः समतां तुल्यरूपतां गतम् । सादृश्यात् दुर्विवेच्यम् इति भावः । सह-भूतं सहचरं प्रियम्, सहशब्दस्य पचाद्यजन्तेन चरशब्देन समासः । करुणैः दीनैः रुतैः कूजितैः अनुबध्नतीम् अन्विष्यन्तीं रथाङ्गनामवनितां चक्रवाकीम् अभिननन्द । प्रकृष्टप्रेमदर्शनात् कस्य न आनन्द इति भावः । अत्र तावत् ऊर्मीणां स्वधावल्यत्यागेन आरुण्यस्वीकारात् तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयात् ।" इति लक्षणात् । तन्मूला च इयं चक्रवाक्याः स्वकान्ते तरङ्गभ्रान्तिरिति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥

सितवाजिन इति । चलवीचीनां रागः रञ्जनं वर्णान्तरापादनं तस्य रचना क्रिया तत्र पटवः समर्थाः रुचयः प्रभाः अम्भसि निमग्नम् अपि मणिजालं स्वाश्रयभूतम् इति भावः । मनोगतं स्फुरितं रोषादिविकारम् आकृतयो भ्रूभङ्गादिवाह्यविकारा इव सितवाजिने अर्जुनाय निजगदुः ज्ञापयामासु-रित्यर्थः । आकृत्या हि मनोगतं विचक्षणा जानन्ति इति भावः ॥ ९ ॥

उपलेति । उपलैः आहताः अतएव उद्धताश्च ये तरङ्गाः तैः धृतं

बहु बर्हिचन्द्रकनिभं विदधे
धृतिमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं
विकसद्विलोचनशतं सरितः ॥ ११ ॥

प्रतिबोधजृम्भणविभिन्नमुखी
पुलिने सरोरुहदृशा ददृशे ।
पतदच्छमौक्तिकमणिप्रकरा
गलदश्रुबिन्दुरिव शुक्तिवधूः ॥ १२ ॥

शुचिरप्सु विद्रुमलताविटप-
स्तनुसान्द्रफेनलवसंवलितः ।
स्मरदायिनः स्मरयति स्म भृशं
दयिताधरस्य दशनांशुभृतः ॥ १३ ॥

निर्गमरोधात् इत्यर्थः । जविना वेगवता मरुता वातेन विधुतं विततं च केतकस्य शिखाग्रं तद्वत् विशदम् अपां फेनं डिण्डीरम् । "डिण्डीरोऽब्धिकफः फेन" इत्यमरः । सरितः प्रहासम् अट्टहासम् इव इति उत्प्रेक्षा । सः अर्जुनः ददर्श ॥ १० ॥

बह्विति । बर्हिचन्द्रकनिभं मयूरमेचकसदृशम् । "समौ चन्द्रकमेचकौ" इत्यमरः । बहु अनेकधा दानपयसां पटलम् । जातावेकवचनम् । बहवः मदाम्बुबिन्दव इत्यर्थः । अवगाढम् अन्तःप्रविष्टम् । गाहेः कर्त्तरि क्तः । इभपतिम् ईक्षितुं विकसत् उन्मिषत् सरितः विलोचनशतम् इव इति उत्प्रेक्षा । अस्य अर्जुनस्य धृतिं प्रीतिं विदधे चकार ॥ ११ ॥

प्रतिबोधेति । प्रतिबोधः स्फुटनं निद्रापगमश्च तत्र यत् जृम्भणम् उच्छूनता जृम्भा च तेन विभिन्नमुखी विश्लिष्टाग्रा, विवृतास्या च । अतएव पतन् प्रसरन् अच्छः मौक्तिकमणीनां प्रकरः स्तोमः यस्याः सा तथोक्ता अतएव गलदश्रुबिन्दुः इव स्थिता इति उत्प्रेक्षा । शुक्तिः वधूः इव शुक्तिवधूः पुलिने शयनीये इव इति भावः । सरोरुहदृशा अर्जुनेन ददृशे दृष्टा । अत्र प्रतिबोधादिविश्लिष्टपदोपात्तानां प्रकृतानां शुक्तिवध्वोश्च उपमारूपकयोः साधकबाधकाभावात् सन्देहसङ्करः । तत्सापेक्षा च अश्रुगलनोत्प्रेक्षा इति तयोः अङ्गाङ्गिभावः ॥ १२ ॥

उपलभ्य चञ्चलतरङ्गधृतं
मदगन्धमुत्थितवतां पयसः ।
प्रतिदन्तिनामिव स सम्बुबुधे
करियादसामभिमुखान् करिणः ॥ १४ ॥

स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः ।
प्रहितं दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपां पटलम् ॥ १५ ॥

स ततार सैकतवतीरभितः
शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः
सुरनिम्नगामुपयतीः सरितः ॥ १६ ॥

शुचिरिति । अप्सु शुचिः स्वच्छः तनुना सान्द्रेण च फेनस्य लवेन शकलेन संवलितः सङ्गतः विद्रुमलतायाः विटपः पल्लवः । "विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः" इति विश्वः । स्मरदायिनः कामोद्दीपकस्य दशनांशुभृतः दन्तकान्तिकलितस्य दयिताधरस्य इत्यर्थः । "अधीगर्थ" इत्यादिना षष्ठी । भृशं स्मरयति स्म । "लट् स्मे" इति भूतार्थे लट् । "मितां ह्रस्वः" इति ह्रस्वः । स्मरणालङ्कारः ॥ १३ ॥

उपलभ्येति । सः अर्जुनः चञ्चलतरङ्गैः धृतं तत्संक्रान्तम् इत्यर्थः । मदगन्धम् उपलभ्य आघ्राय पयसः उत्थितवतां रोषादिति शेषः । कर्य्या-कराणां यादसाम् । शाकपार्थिवादिषु द्रष्टव्यः । प्रतिदन्तिनाम् इव अभिमुखान् अभियातान् इत्यर्थः । करिणः गजान् सम्बुबुधे ददर्श इत्यर्थः ॥१४॥

स इति । सः अर्जुनः पुरः अग्रे सहसा समुत्पिपतिषोः समुत्पतितुमिच्छोः । पतेः सन्नन्तात् उप्रत्ययः "तनिपतिदरिद्रादिभ्यः सन इड्वा वक्तव्यः" इति विकल्पात् इडागमः । फणिनः सर्पस्य प्रजविभिः अतिवेगवद्भिः श्वसितैः फूत्कारैः दिवि आकाशे प्रहितं प्रेरितं शरदभ्रस्य विभ्रमः इव विभ्रमः सौन्दर्य्यं यस्य तत् शुभ्रम् अभ्रव्यापकं च इत्यर्थः । अपां पटलं पुरः उदीक्ष्य विस्मयं जगाम । अत्र उपमानुप्राणिता स्वभावोक्तिरलङ्कारः ॥ १५ ॥

अधिरुह्य पुष्पभरनम्रशिखैः
परितः परिष्कृततलां तरुभिः ।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः
शुचिमाससाद स वनान्तभुवम् ॥ १७ ॥

अनुसानु पुष्पितलताविततिः
फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरे-
स्तपसेऽधिवस्तुमचलामचलः ॥ १८ ॥

प्रणिधाय तत्र विधिनाथ धियं
दधतः पुरातनमुनेर्मुनिताम् ।

स इति । सः अर्जुनः सैकतवतीः पुलिनवतीः अभितः शफरीणां प्रोष्ठीनां परिस्फुरितानि एव चारवः दृशः यासां ताः । सुरनिम्नगां गङ्गाम् उपयतीः भजन्तीः । इणः शतुः उगित्वात् ङीप् । अतएव बृहज्जघनाः ललिताः सखीः इव स्थिताः सरितस्ततार अतिचक्राम ॥ १६ ॥

अधिरुह्येति । सः अर्जुनः अधिरुह्य अर्थात् गिरिम् इति शेषः । पुष्पभरेण नम्रशिखैः नताग्रैः तरुभिः परितः परिष्कृततलां भूषितस्वरूपाम् । "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः । "संपर्युपेभ्यः करोतौ भूषणे" इति सुडागमः । शुचि शुद्धाम् अतएव मनसः प्रसक्तिम् इव मूर्त्तं मनःप्रसादम् इव स्थितां तद्धेतौ तद्भावोत्प्रेक्षा । गिरेः मूर्ध्नि वनान्तभुवम् आससाद । अन्तःशब्दः स्वरूपवचनः । "अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके" इति वैजयन्ती ॥ १७ ॥

अनुसान्विति । अनुसानु प्रतिसानु । वीप्सार्थे अव्ययीभावः । पुष्पिताः सञ्जातपुष्पाः लताविततयः यस्मिन् सः फलिताः तरवो भूरुहाः येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन् सः तथोक्तः । "विविक्तौ पूतविजनौ" इत्यमरः । अचलः इन्द्रकीलः हरेस्तनयस्य अर्जुनस्य तपसे तपश्चर्यार्थम् अधिवस्तुम् अधिष्ठातुम् । तनिक्रियापेक्षया समानकर्त्तृकत्वात् तुमुन् । अचलां धृतिम् उत्साहम् आततान । अत्र अचलविशेषणपदार्थस्य धृतिकारणहेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ १८ ॥

अप्रमादधावसुकरं न तपः
किमिवावसादकरमात्मवताम् ॥ १९ ॥

शमयन् धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे
विमलः कलाभिरिव शीतरुचः ॥ २० ॥

अधरीचकार च विवेकगुणा-
दगुणेषु तस्य धियमस्तवतः ।
प्रतिघातिनीं विषयसङ्गरतिं
निरुपप्लवः शमसुखानुभवः ॥ २१ ॥

प्रणिधायेति। अथ तत्र अद्रौ विधिना योगशास्त्रानुसारेण धियं चित्तवृत्तिं प्रणिधाय ध्येयविषये धियं नियम्य। "नैर्गद" इत्यादिना णत्वम्। मुनितां दधतः तपस्यतः इत्यर्थः। पुरातनमुनेः अर्जुनस्य इत्यर्थः। असुकरं दुष्करं तपः श्रमं खेदं न आदधौ न चकार। तथाहि— आत्मवतां मनस्विनाम् अवसादकरम् अशान्तिजनकं किम् इव। न किञ्चित् इत्यर्थः। इवशब्दो वाक्यालङ्कारे ॥ १९ ॥

शमयन्निति। धृतम् इन्द्रियशमः विषयव्यावृत्तिः एव एकं मुख्यं सुखम् आह्लादः येन सः तथोक्तः आत्मारामः इत्यर्थः। अन्यत्र धृतम् इन्द्रियाणां शमः सन्तापनिवर्त्तनम् एकम् अद्वितीयं सुखम् आह्लादश्च येन सः तथोक्तः। शुचिभिः निर्मलैः गुणैः मैत्र्यादिभिः, अन्यत्र कान्त्यादिभिः। अघमयं पापरूपं तमः अज्ञानम्, अन्यत्र अन्धकारं च शमयन् निवर्त्तयन्। विमलः अमलिनः पापरहितः शुभ्रः, अन्यत्र सः अर्जुनः प्रतिवासरं सुकृतिभिः सुकृतैः तपोभिः इत्यर्थः। स्त्रियां क्तिन्। कलाभिः शीतरुचिः चन्द्रः इव ववृधे ॥ २० ॥

अधरीचकारेति। किं च इति चार्थः। विवेकः तत्त्वावधारणं सः एव गुणः तस्मात् तेन हेतुना इत्यर्थः। "विभाषा गुणेऽस्त्रियाम्" इति पञ्चमी। अगुणेषु कामक्रोधादिदोषेषु विषये। तद्विरोधेन नञ्समासः। धियं चित्तवृत्तिम् अस्तवतः निवारितवतः तस्य अर्जुनस्य निरुपप्लवः

मनसा जपैः प्रणतिभिः प्रयतः
समुपेयिवानधिपतिं न दिवः ।
सहजेतरौ जयशमौ दधती
बिभराम्बभूव युगपत् महसी ॥ २२ ॥
शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्द्धनि तमालतरौ ॥ २३ ॥
धृतहेतिरप्यधृतजिह्ममति-
श्चरितैर्मुनीनधरयन् शुचिभिः ।
रजयाञ्चकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः ॥ २४ ॥

निर्बाधः शमसुखानुभवः शान्त्यानन्दानुभवः प्रतिघातिनीं सोपप्लवां विषयसङ्गरतिं शब्दाद्युपभोगरुचिम् अधरीचकार विषयनिस्पृहं चकार इत्यर्थः । उत्कृष्टसुखलाभस्य अप्रकृष्टवैराग्यहेतुत्वादिति भावः ॥ २१ ॥

मनसेति । प्रयतः अहिंसानिरतः मनसा ध्यानेन जपैः विशिष्टमन्त्राभ्यासैः प्रणतिभिः नमस्कारैः एवं मनोवाक्कायकर्मभिः दिवः अधिपतिम् इन्द्रं समुपेयिवान् उपसेदिवान् सः अर्जुनः सहजेतरौ नैसर्गिकागन्तुकौ जीयते अनेन इति जयः वीररसः । "एरच्" इति अच् । शम्यते अनेन इति शमः जयशमौ वीरशान्तिरसौ दधती पुष्णती तेजसी महसी युगपत् बिभराम्बभूव बभार । "भीह्रीभृहुवाम्" इति विकल्पात् आम्प्रत्ययः । अत्र युगपत् वीरशान्ताधिकरणत्वाभिधानात् अस्य लोकाद्भुतमहिमत्वं व्यज्यते ॥२२

शिरसेति । हरिन्मणिनिभः मरकतमणिश्यामः अभिषवणेन स्नानेन कृतजन्मनः जनिताः अतः पिशङ्गीः इति भावः । जटाः शिरसा वहन् सः अर्जुनः अरुणस्य अनूरोः दीधितिभिः परिमृष्टमूर्धनि व्याप्तशिरसि तमालतरौ उपमां तमालतरोः सादृश्यं ययौ इति आर्थी इयम् उपमा । तरोः औपम्याधिकरणत्वात् तदपेक्षया सप्तमी ॥ २३ ॥

धृतेति । धृतहेतिः धृतायुधः अपि अधृता जिह्मा मतिः कुटिलमतिः

अनुकूलपातिनमचण्डगतिं
किरता सुगन्धिमभितः पवनम्।
अवधीरितार्त्तवगुणं सुखतां
नयता रुचां निचयमंशुमतः॥ २५॥

नवपल्लवाञ्जलिभृतः प्रचये
बृहतस्तरून् गमयतावनतिम्।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम्॥ २६॥

पतितैरपेतजलदान् नभसः
पृषतैरपां शमयता च रजः।

येन सः शुचिभिः चरितैः मुनीन् अधरयन् तिरस्कुर्वन् वेषेण एव भीषणः न तु कर्मणा इति भावः। कुतः? विरजाः रजोगुणरहितः सः अर्जुनः मृगान् रजयाञ्चकार रञ्जयामास। "रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः" इति नलोपः। तथाहि—गुणाः दयादयः कम् इव रञ्जयितुं न ईशते कं वा वशीकर्त्तुं न शक्नुवन्ति इति भावः। शुद्धिः एव हि परं विश्वासबीजं परस्य न वेषः न अपि संस्तवः इति भावः॥ २४॥

अथ अस्य त्रिभिः तपःसिद्धिमाह—अनुकूलेत्यादिना। अनुकूलपातिनं न तु प्रतिकूलपातिनम् अचण्डगतिं मन्दगामिनं सुगन्धिम्। गन्धस्येत्वे तदेकान्तग्रहणेऽपि कवीनां निरङ्कुशत्वात् समासान्तः। अथवा केचित् आगन्तुकत्वे अपि एकवचनेन समासान्तम् इच्छन्ति। पवनम् अभितः किरता प्रवर्त्तयता इत्यर्थः। ऋतुः अस्य प्राप्तः आर्त्तवः। "ऋतोरण्" इत्यण् प्रत्ययः। सः च असौ गुणः तिग्मत्वरूपः सः अवधीरितः तिरस्कृतः यस्य तम् अंशुमतः रुचां निचयं सुखतां सुखस्पर्शतां नयता प्रापयता। नयतेर्हि कर्मकत्वम्।

नवेति। प्रचये पुष्पावचयप्रसङ्गे नवपल्लवा एव अञ्जलयः तान् बिभ्रतीति नम्रताम्। तथोक्तान् बृहतः उच्चान् तरून् अवनतिं गमयता। "गतिबुद्धि" इत्यादिना तरूणां कर्मत्वम्। प्रतिनिशं निशि निशि शयनीयताम् उपयतीं शयनस्थानीभूताम् इत्यर्थः। वसुधां मृदुभिः तृणैः स्तृणता आच्छादयता॥ २६॥

स दयालुनेव परिगाढ़कृशः
परिचर्य्ययानुजगृहे तपसा ॥ २७ ॥

महते फलाय तदवेक्ष्य शिवं
विकसन्निमित्तकुसुमं स पुरः ।
न जगाम विस्मयवशं वशिनां
न निहन्ति धैर्य्यमनुभावगुणः ॥ २८ ॥

तदभूरिवासरकृतैः सुकृतै-
रुपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियः
शतयज्वनो वनचरा वसतिम् ॥ २९ ॥

पतितैरिति । अपेतजलदात् निरभ्रात् नभसः पतितैः अपां पृषतैः जलबिन्दुभिः रजश्च शमयता तपसा कर्त्रा दयालुना इव इति उत्प्रेक्षा । दयालुत्वे हेतुं सूचयति—परिगाढ़कृशः अतिक्षीणः सः अर्जुनः परिचर्य्यया उक्तविधया शुश्रूषया अनुजगृहे अनुगृहीतः । अनुग्रहः अत्र सहकारित्वम् एव सर्व्वभूतानुकूल्यलिङ्गात् पचेलिमं तपः अस्य इति भावः । अस्य श्लोकत्रयस्य अपि एकवाक्यत्वात् उत्प्रेक्षा एव प्रधानालङ्कारः ॥ २७ ॥

महत इति । सः अर्जुनः महते फलाय श्रेयसे शस्याय च विकसत् पूर्वोक्तं शिवं निमित्तम् एव कुसुमं पुरः अग्रे अवेक्ष्य विस्मयवशं न जगाम । तथाहि—वशिनाम् अनुभाव एव गुणः सः च धैर्य्यं न निहन्ति विस्मयादिविकारं न जनयति इत्यर्थः । जनने वा तपः क्षीयेत । "तपः क्षरति विस्मयात्" इति स्मरणात् इति भावः ॥ २८ ॥

तदिति । सुकृतैः तपोभिः करणैः अभूरिभिः कतिपयैः एव वासरैः कृतं तत् पूर्वोक्तं वैभवम् अतः अन्यस्य न भवति इति अनन्यभवम् अन्यस्य असाध्यम् इत्यर्थः । पचाद्यजन्तोत्तरपदेन नञ्समासः । उपलभ्य निश्चित्य आस्थितविषादाः प्राप्तखेदाः धियः येषां ते वनचराः । "तत्पुरुषे कृति-बहुलम्" इति बहुलग्रहणात् लुक् । शतेन शतस्य वा मखानां यज्वनः शतक्रतोः । अत्र संख्येयविशेषलाभः यजिसन्निधानात् अवगन्तव्यः । "यज्वा तु विधिनेष्टवान्" इत्यमरः । "सुयजोर्ङ्वनिप्" । वसतिम् उपतस्थुः प्रापुः ॥ २९ ॥

विदिताः प्रविश्य विहितानतयः
शिथिलीकृतेऽधिकृतकृत्यविधौ।
अनपेतकालमभिरामकथाः
कथयाम्बभूवुरिति गोत्रभिदे॥ ३०॥

शुचिवल्कलवीतवपुरन्यतम-
स्तिमिरच्छिदामिव गिरौ भवतः।
महते जयाय मघवन्ननघः
पुरुषस्तपस्यति तपन् जगतीम्॥ ३१॥

स बिभर्ति भीषणभुजङ्गभुजः
पृथु विद्विषां भयविधायि धनुः।
अमलेन तस्य धृतसच्चरिता-
श्चरितेन चातिशयिता मुनयः॥ ३२॥

विदिता इति। वनचराः इति अनुवर्त्तनीयम्। विदिताः ज्ञाताः अनुमतप्रवेशाः सन्तः इत्यर्थः। प्रविश्य विहितानतयः कृतप्रणामाः अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षणात्मकस्य विधौ अनुष्ठाने शिथिलीकृते सति अनपेतकालम् अनतिक्रान्तकालं यथा तथा गोत्रभिदे शक्राय इति वक्ष्यमाणप्रकारेण अभिरामकथाः आव्यवाचः। "चिन्तिपूजिकथिकुम्बिचर्चश्च" इति अङ् प्रत्ययः। कथयाम्बभूव॥ ३०॥

शुचीति। शुचिना वल्केन वल्कलेन वीतम् आच्छादितं वपुः यस्य सः। तिमिरच्छिदां सूर्यादीनाम् अन्यतमः इव स्थितः इत्युत्प्रेक्षा। अनघः पुरुषः हे भगवन्! भवतः गिरौ इन्द्रकीले जगतीं भुवं तपन् तापयन् महते जयाय तपस्यति तपश्चरति। "कर्मणो रोमन्थ" इत्यादिना क्यङ् लट्॥ ३१॥

जयाय तपस्यति इत्युक्तं तत्र हेतुमाह—स इति। भीषयेते इति भीषणौ। नन्द्यादित्वात् ल्युप्रत्ययः। तौ च तौ इव भुजङ्गौ च तौ इव भुजौ यस्य सः तथोक्तः पुरुषः, विद्विषां भयविधायि पृथु धनुः बिभर्त्ति अतः जयार्थी इत्यर्थः। अमलेन तस्य पुरुषस्य चरितेन धृतानि यैः ते मुनयः अतिशयिताः अतिक्रान्ताः॥ ३२॥

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदानुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥

इतरेतरानभिभवेन मृगा-
स्तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये
परवान् स तेन भवतीव नगः ॥ ३४ ॥

उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥

अथ अस्य तपःसिद्धिं वर्णयति—मरुत इत्यादिना । मरुतः वाताः शिवाः सुखाः । जगती पृथ्वी नवतृणा शयनासनाद्यनुकूला इत्यर्थः । नभः विमलं नीहारादिरहितं रजसि सति अपां वृष्टिः भवतीति शेषः । किं बहुना, अस्य पुरुषस्य गुणसम्पदा अनुगुणताम् अनुकूलतां गमितः वशीकृतः इत्यर्थः । भूतगणः पृथिव्यादिपञ्चकं भक्तिं सेवां कुरुते इव इति उत्प्रेक्षा ॥ ३३ ॥

इतरेतरेति । किञ्च मृगाः पशवः तम् अन्ते अन्तिके सीदन्ति इति अन्तसदः अन्तेवासिनः । "सत्सूद्विष" इति क्विप् । गुरुम् इव इतरेतरेषाम् अनभिभवेन अद्रोहेण उपासते सेवन्ते । प्रचये पुष्पावचये तरवः अस्य विनमन्ति नम्रीभवन्ति इत्यर्थः । अस्य इति सम्बन्धसामान्ये षष्ठी । किं बहुना, सः नगः इन्द्रकीलः अचलः इव तेन पुरुषेण परवान् पराधीनः सात्त्विकस्य अपि तत्र इव तस्य अतिशयः वर्त्तते इत्यर्थः ॥ ३४ ॥

उर्विति । किञ्च विपरिश्रमता आयासे अपि श्रमराहित्यम् उरु महत् सत्त्वम् अन्तःसारम् आह दुर्बलस्य अश्रमजयासम्भवात् इति भावः । परमं वपुः जयं प्रथयति च आकारेण एव जिष्णुत्वं गम्यते इत्यर्थः । शमिनः शान्तस्य अपि तस्य नवसङ्गमने अपूर्वप्राप्तौ जनः विभुतायाः प्रभावस्य

ऋषिवंशजः स यदि दैत्यकुले
यदि वान्वये महति भूमिभृताम् ।
चरतस्तपस्तव वनेषु सहा
न वयं निरूपयितुमस्य गतिम् ॥३६॥

विगणय्य कारणमनेकगुणं
निजयाथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः
क्व वनेचराः क्व निपुणा मतयः ॥३७॥

अधिगम्य गुह्यकगणादिति तत्
मनसः प्रियं प्रियसुतस्य तपः ।
निजुगोप हर्षमुदितं मघवा
नयवर्त्मगाः प्रभवतां हि धियः ॥३८॥

अनुषङ्गि व्यापकं न तु हिंस्रकत्वानुषङ्गि इति भावः । भयम् एति । शास्त्रोद्भवं पराभवं गमयतीति भावः ॥ ३५ ॥

अथ ईदृशः असौ कः इति चेत् तत् न विद्मः इति आह—ऋषीति । सः पुरुषः ऋषिवंशजः वा इति शेषः काकुः वा । यदि वा दैत्यकुले जातः इति शेषः । यदि वा महति भूमिभृताम् अन्वये जातः । तव वनेषु तपः चरतः अस्य गतिं स्वरूपं निरूपयितुं वयं सहन्ते इति सहाः । पचाद्यच् । न सहाः स्म इति शेषः ॥ ३६ ॥

अपृष्टपरिभाषणापराधं परिहरन्ति—विगणय्येति । अनेकगुणं बहुफलं इन्द्रत्वाद्यनेकफलसाधकत्वेन योग्यम् इत्यर्थः । कारणं तपोरूपं विगणय्य विचार्य अथवा निजया नैसर्गिक्या अल्पतया बालिश्येन वा कथितं नः अस्माकम् अदः इदं वचनम् इत्यर्थः । असत् असाधु अपि सहितुं सोढुम् । "तीषसह" इत्यादिना विकल्पात् इडागमः । अर्हसि योग्यः असि । तर्हि सदैव किं न उक्तं तत्र आहुः । वनेचराः क्व ? निपुणाः मतयः विवेकबुद्धयः क्व ? न उभयं सङ्गच्छते इत्यर्थः । अज्ञानं न अपराध्यति इति भावः । अर्थान्तरन्यासः अलङ्कारः ॥ ३७ ॥

अधिगम्येति । मघवा इन्द्रः इति पूर्वोक्तगुह्यकगणात् तत् मनसः

प्रणिधाय चित्तमथ भक्ततया
विदितेऽप्यपूर्व इव तत्र हरिः।
उपलब्धुमस्य नियमस्थिरतां
सुरसुन्दरीरिति वचोऽभिदधे ॥३९॥

सुकुमारमेकमणु मर्मभिदा-
मतिदूरगं युतममोघतया।
अविपक्षलक्ष्यमस्त्रमपरं कतमद्
विजयाय यूथमिव चित्तभुवः ॥४०॥

प्रियं प्रियसुतस्य अर्जुनस्य तपः अधिगम्य ज्ञात्वा। गुणापेक्षया मघवान-कर्तृकत्वात् ज्ञात्वानिर्देशः। उदितं तत् तपसः देवकार्यार्थत्वात् उत्पन्नं हर्षं निजुगोप गोपयामास। तथाहि -प्रभवतां प्रभूणां धियः नयवर्त्मगाः नीतिमार्गानुसारिण्यः हि। अन्यथा मन्त्रभेदे कार्यहानिः स्यादिति भावः ॥ ३८ ॥

प्रणिधायेति। अथ हरिः इन्द्रः चित्तं प्रणिधाय विषयान्तरपरिहारेण आत्मनि अवस्थाप्य तत्र तस्मिन् अर्जुने भक्ततया विदिते अपि। उपलक्षणे तृतीया। अपूर्व इव अविदित इव इत्यर्थः। "पूर्वादिभ्यो नवभ्यो वा" इति विकल्पात् न स्मिन्नादेशः। अस्य अर्जुनस्य नियमे स्थिरतां दार्ढ्यम् उपलब्धुं परीक्षितुम् इत्यर्थः। लोकज्ञतार्थम् इति भावः। सुरसुन्दरीः इति वक्ष्यमाणप्रकारं वचः अभिदधे ॥ ३९ ॥

सुकुमारमिति। मर्मभिदां मर्मच्छेदिनाम् अस्त्रान्तराणां मध्ये इत्यर्थः। "यतश्च निर्द्धारणम्" इति षष्ठी। अपरम् अन्यत् कतमत्। "वा बहूनां जाति-परिप्रश्ने डतमच्।" यूथम् इव सुकुमारं कोमलं न तु कठिनम्। अन्यत् तु कठिनं भवति। तथा एकं न बहु तत् तु भवति। तथा अणु सूक्ष्मं न स्थूलम् अलक्ष्यलक्ष्यवेधित्वादिति भावः। तत् तु लक्ष्यलक्ष्य-प्रवेशि। तथा अतिदूरगं दूरलक्ष्यभेदि तत् तु समीपलक्ष्यभेदि। तथा अमोघतया अमोघत्वगुणेन युतं युक्तं, न कदाचित् व्यभिचरति इति भावः। अन्यत् तु कदाचित् अपि लक्ष्यात् अपराध्यति। तथा अविपक्षम् असत्प्रतिकारम्। अन्यत् विद्यमानप्रतीकारम् अस्त्रं चित्तभुवः कामस्य। कर्त्तरि षष्ठी। विजयाय एतद्विशेषणविशिष्टमस्त्रम् अस्ति इति शेषः। न

भववीतये हतबृहत्तमसाम्
अवबोधवारि रजसः शमनम् ।
परिपीयमानमिव वोऽसकलै-
रवसादमेति नयनाञ्जलिभिः ॥४१॥

बहुधा गतां जगति भूतसृजा
कमनीयतां समभिहृत्य पुरा ।
उपपादिता विदधता भवतीः
सुरसद्मयानसुमुखी जनता ॥४२॥

तदुपेत्य विघ्नयत तस्य तपः
कृतिभिः कलासु सहिताः सचिवैः ।
हृतवीतरागमनसां ननु वः
सुखसङ्गिनं प्रति सुखावजितिः ॥४३॥

किञ्चित् अस्ति इत्यर्थः । अत्र उपमालङ्कारः । साभिप्रायविशेषणत्वात् परिकरालङ्कारश्च । तयोः उभयोः अङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

असामर्थ्यशङ्कां परिहरति—भवेति । भववीतये संसारनिवृत्तये हतबृहत्तमसां निरस्तमहामोहानां योगिनां सम्बन्धि रजोगुणः रजोधूलिः इति श्लिष्टरूपकं, तस्य शमनं निवर्त्तकम् अवबोधः तत्त्वज्ञानम् एव वारि तत् वः युष्माकम् असकलैः असमग्रैः नयनानि एव अञ्जलयः तैः परिपीयमानम् इव इति उत्प्रेक्षा । अवसादं तपःक्षयम् एति । मुक्तान् अपि बध्नतीनां वः कथम् असामर्थ्यम् इति भावः । अत्र उत्प्रेक्षारूपकयोः सङ्करः ॥ ४१

बहुधेति । किञ्च पुरा जगति बहुधा गतां नानामुखेन विप्रकीर्णां कमनीयतां चन्द्राद्युपमानद्रव्यगतलावण्यं समभिहृत्य संगृह्य भवतीः विदधता सृजता भूतसृजा ब्रह्मणा जनता जनसमूहः । "ग्रामजन" इत्यादिना तल् । सुरसद्मयानसुमुखी स्वर्लोकयात्राप्रवणा उपपादिता कृता । स्वर्गस्य अपि यत्प्रसादात् सर्वलोकश्लाघ्यत्वं तासां वः कथम् असामर्थ्यम् इति भावः । अत्र अप्सरसां प्रकीर्णलावण्यसंग्रहासम्बन्धेऽपि तत्सम्बन्धाभिधानात् अतिशयोक्तिः ॥ ४२ ॥

अविमृष्यमेतदभिलष्यति सः
द्विषतां वधेन विषयाभिरतिम् ।
भववीतये न हि तथा स विधिः
क्व शरासनं क्व च विमुक्तिपथः ॥४४॥

पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद्विकृतिः ।
स्वयशांसि विक्रमवतामवतां
न वधूष्वघानि विमृषन्ति धियः ॥४५॥

अथ कार्य्यशक्तिमाह—तदिति। तत् तस्मात् समर्थत्वात् कलासु गीतवाद्यादिषु कृतिभिः कुशलैः सचिवैः गन्धर्वैः सहिताः उपेत्य गत्वा तस्य पुरुषस्य तपः विघ्नयत विघ्नवत् कुरुत विहत इत्यर्थः। विघ्नवच्छब्दात् मत्वन्तात् "तत्करोति" इति णिचि लोट्। णाविष्टवद्भावात् मतुपः लुक्। न च अत्र असामर्थ्यशङ्का कार्य्या इति अर्थान्तरन्यासेनाह—हृतेति! ननु सम्बोधने हे अप्सरसः! हृतानि वशीकृतानि वीतरागाणां निःस्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिः तासां वः युष्माकम् अप्सरसां सुखसङ्गिनं पुरुषं प्रति सुखाभिलाषिणं प्रति अवजितिः विजयः सुखा सुखसाध्या न तु दुष्करा खलु। तेन अयं सुखार्थ न मुमुक्षुः इति उक्तम्। अर्थान्तरन्यासः ॥४३॥

अथ सुखसङ्गित्वमाह—अविमृष्येति। हे अप्सरसः। सः पुरुषः द्विषतां शत्रूणां वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखम् अभिलष्यति वाञ्छति। "वा भ्राश" इत्यादिना श्यन्प्रत्ययः। एतद्विषयासक्तत्वम् अविमृष्यम् अविचार्य्यम्। अविमृष्यम् असन्दिग्धम्। "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप्। भवतीभिर्न सन्देग्धव्यमित्यर्थः। हि यस्मात् सः विधिः "स बिभर्त्ति भीषणभुजङ्गभुजः" इत्यादिश्लोकोक्तः अनुष्ठानप्रकारः भववीतये संसारमुक्तये न भवति। कुतः इति आह—शरासनं धनुः क्व? विमुक्तेः पन्थाश्च क्व? द्वयं परस्परं विरुद्धम् इत्यर्थः। न खलु हिंसासाध्या मुक्तिः इति भावः। अर्थान्तरन्यासः अलङ्कारः ॥४४॥

न च शापभयम् अपि सम्भाव्यं यस्मात् इति आह—पृथिति। पृथुधाम्नि महातेजसि तत्र तस्मिन् पुरुषविषये अन्यमुनिवत् अन्यस्मिन् मुनौ इव। "तत्र तस्येव" इति वतिप्रत्ययः। विकृतिः कोपनविकारश्च भव-

आशंसितापचितिचारु पुरः सुराणा-
मादेशमित्यभिमुखं समवाप्य भर्त्तुः ।
लेभे परां द्युतिममर्त्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥४६॥
प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।
अचलनलिनलक्ष्मीहारि नालं बभूव
स्तिमितममरभर्त्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥४७॥

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
युवतिप्रस्थानं नाम षष्ठः सर्गः ॥६॥

तोभिः मा परिबोधि मा विज्ञायि मा शङ्कि इति यावत् । बुध्यतेः कर्मणि लुङ् माङ्योगात् आशीरर्थे अडागमाभावश्च । तथाहि—स्वयशांसि अवतां रक्षतां यशोधनानाम् इत्यर्थः । विक्रमवतां धियः चित्तानि वधूषु स्त्रीविषयेषु अघानि व्यसनानि । "दुःखैनोव्यसनेष्वघम्" इति वैजयन्ती । न विमृषन्ति । अर्थान्तरन्यासः । स्त्रीहिंसायाः शूराणां यशोहानिकरत्वात् न सर्वथा वो हिनस्ति स इत्यर्थः ।। ४५ ॥

आशंसितेति । अमर्त्त्यवधूसमूहः अप्सरसां गणः सुराणां पुरः अग्रे आशंसितापचितिभिः अपेक्षितसम्भावनाभिः चारु यथा तथा । "पूजार्च-योरपचितिः" इत्यमरः । अभिमुखं समक्षं भर्त्तुः स्वामिनः इति पूर्वोक्तम् आदेशं नियोगं समवाप्य परां द्युतिं लेभे । तथाहि—अधि-कृतस्य क्वचित् अधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥ ४६ ॥

प्रणतिमिति । अथ प्रणतिं विधाय सद्मनः इन्द्रभवनात् प्रस्थिताः प्रचलिताः स्तनभरैः नमितानि अङ्गानि यासां ताः । "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीष् । प्रीतिभाजः स्वामिसम्भावनया सन्तुष्टाः ताः अङ्गनाः अचलनलिनानां स्थिरकमलानां लक्ष्मीः हरति इति तत् तथोक्तम् तद्वत् मनोहरम् इत्यर्थः । कुतः ? स्तिमितं विस्मयनिश्चलम् अमरभर्त्तुः अक्ष्णां

महत्त्वं कर्त्तृ द्रष्टुम् अलं समर्थं न बभूव । तासां सौन्दर्य्यसागरस्य उद्वेलत्वात् इति भावः । अत्र उपमालङ्कारः ॥ ४७॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्त्तुः ।
सम्मूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ॥१॥

सोत्कण्ठैरमरगणैरनुप्रकीर्णात्
निर्याय ज्वलितरुचः पुरात् मघोनः ।
रामाणामुपरि विवस्वतः स्थितानां
नासेदे चरितगुणत्वमातपत्रैः ॥२॥

श्रीमद्भिरिति । अथ प्रस्थानानन्तरं श्रीमद्भिः शोभावद्भिः सह रथगजैः सरथगजाः तैः । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । त्रयाणां लोकानां भर्तुः त्रिलोकभर्त्तुः इन्द्रस्य । "तद्धितार्थ" इत्यादिना उत्तरपदसमासः । सचिवैः गन्धर्वैः गुप्तानां सुराङ्गनानां प्रस्थानं गमनम् अलघुषु महत्सु विमानरन्ध्रेषु विमानानां कुक्षिकुहरेषु भिन्नः प्रतिध्वानैः अनेकीभूतः अत एव संमूर्च्छन् व्याप्नुवन् मृदङ्गनादः समभिदधे आचख्यौ । पौरेभ्यः इति शेषः । अस्मिन् सर्गे प्रहर्षिणीवृत्तम् । "म्नौ जौ गः त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ १ ॥

सोत्कण्ठैरिति । सोत्कण्ठैः अविचक्षणोत्सुकैः इत्यर्थः । अमरगणैः अनुप्रकीर्णात् अकीर्णात् ज्वलितरुचः दीप्तप्रभावात् मघोनः इन्द्रस्य पुरात् अमरावत्याः निर्याय निर्गत्य । यातेः क्त्वो ल्यप् । विवस्वतः उपरि स्थितानां

धूतानामभिमुखपातिभिः समीरै-
रायासादविशदलोचनोत्पलानाम्।
आनिन्ये मदजनितां श्रियं वधूना-
मुष्णांशुद्युतिजनितः कपोलरागः॥३॥

तिष्ठद्भिः कथमपि देवतानुभावा-
दाकृष्टैः प्रजविभिरायतं तुरङ्गैः।
नेमीनामसति विवर्त्तने रथौघै-
रासेदे नभसि विमानवत्प्रवृत्तिः॥४॥

कान्तानां कृतपुलकः स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः।

रामाणाम् आतपात्त्रायन्ते इति आतपत्त्रैः। "सुपि" इति योगविभागात् कप्रत्ययः। चरितगुणत्वं न आसेदे न प्रापि। [आतपत्त्राणाम् आतपनिवारणाकरणात् इति भावः।] तासां सूर्य्योपरिस्थितत्वात् आतपासम्भवादिति भावः॥ २॥

धूतानामिति। अभिमुखपातिभिः समीरैः प्रतिकूलवायुभिः धूतानाम् इति दुर्निमित्तसूचनम्। आयासात् गतिप्रयासात् अविशदलोचनोत्पलानां वधूनाम् उष्णांशुद्युतिजनितः आतपकृतः कपोलानां रागः पाटलत्वं मदेन जनितां श्रियं तत्सदृशीं श्रियम् इत्यर्थः। अतएव निदर्शनालङ्कारः। आनिन्ये आनीतवान् वधूः इति शेषः। आङ्पूर्वात् नयतेः कर्त्तरि लिट्। अकारानुबन्धत्वात् (पक्षे) आत्मनेपदम्॥ ३॥

तिष्ठद्भिरिति। कथम् अपि बाढ़म्। "कथमादौ तथाप्यन्ते यत्ने गौरवबाढ़योः" इति वैजयन्ती। देवतानाम् अनुभावात् तिष्ठद्भिः अपतद्भिः इत्यर्थः। रथविशेषणम् एतत्। प्रजविभिः वेगवद्भिः तुरङ्गैः आयतं दूरम् आकृष्टैः रथौघैः वियति आकाशे नेमीनां चक्रधाराणाम्। "चक्रधारा प्रधिर्नेमिः" इति यादवः। विवर्त्तने भ्रमणे असति विमानवत् विमानानाम् इव इति उपमा। "तत्र तस्येव" इति वतिप्रत्ययः। प्रवृत्तिः गतिः आसेदे प्राप्ता। सदेः कर्मणि लिट्॥ ४॥

कान्तानामिति। कान्तानां स्तनानाम् अङ्गरागे कृतपुलकः जनितो-

सम्पेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियं तनोति ॥५॥

राजद्भिः पथि मरुतामभिन्नरूपैः
उल्कार्चिःस्फुटगतिभिर्ध्वजांशुकानाम्।
तेजोभिः कनकनिकाषराजिगौरैः
आयामः क्रियत इव स्म सातिरेकः ॥६॥

रामाणामवजितमाल्यसौकुमार्य्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥७॥

द्भेदः छतगोमात्रः इत्यर्थः। च्युताः प्रमृष्टाः तिलकाः येषां तेषां तेषु वक्त्रेषु मौक्तिकाभः श्रमसलिलोद्गमः स्वेदोद्भेदः विभूषा भूषणं सम्पेदे सम्पन्नः। कर्त्तरि लिट्। तथाहि— रम्याणां स्वभावसुन्दराणां विकृतिः अपि श्रियं तनोति। अतः स्वेदस्य अपि विभूषणत्वम् उपपद्यते इति भावः ॥ ५ ॥

राजद्भिरिति। मरुतां पथि आकाशे राजद्भिः दीप्यमानैः अभिन्नरूपैः अविच्छिन्नाकारैः अत एव उल्कानाम् अर्च्चींषि इव स्फुटगतीनि दीप्तमार्गाणि तैः कनकस्य निकाषः कषणं तस्य राजिः रेखा तद्वत् गौरैः अरुणैः। "गौरः पीतेऽरुणे श्वेते" इति विश्वः। ध्वजांशुकानां तेजोभिः पताकाकान्तिभिः आयामः तेषाम् एव दैर्घ्यं सातिरेकः सातिशयः क्रियते स्म इव कृतः इव दीर्घाः ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमा इव लक्ष्यन्ते इति उत्प्रेक्षा। सा च उल्काद्युपमानुप्राणिता ॥ ६ ॥

रामाणामिति। माला एव माल्यं तस्य सौकुमार्य्यम् अवजितं येन तस्मिन् कुसुमात् अपि मनोहरे इत्यर्थः। रामाणां वपुषि आतपस्य। कृद्योगे कर्मणि षष्ठी। सहते इति सहः क्षमः। पचाद्यच। तस्य भावः सहत्वम्। तत् सम्प्राप्ते सति अधिगतविस्मयैः सम्प्राप्ताश्चर्य्यैः गन्धर्वैः विधातुः विधिषु सृष्टिषु कल्याणी साध्वी श्रेयसी उपकारकत्वात् इति भावः। विचित्रता नानाविधत्वं प्रतीये अवगता ज्ञाता प्रतिपूर्वात् इणः कर्म्मणि लिट् ॥ ७ ॥

सिन्दूरैः कृतरुचयः सहेमकक्ष्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।
सादृश्यं ययुररुणांशुरागभिन्नै-
र्वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥ ८ ॥

अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्य्यन्तादहिममयूखमण्डलस्य ।
आशानामुपरचितामिवैकवेणीं
रम्योर्मिं त्रिदशनदीं ययुर्बलानि ॥ ९ ॥

आमत्तभ्रमरकुलाकुलानि धुन्वन्
उद्धूतग्रथितरजांसि पङ्कजानि ।
कान्तानां गगननदीतरङ्गशीतः
सन्तापं विरमयति स्म मातरिश्वा ॥ १० ॥

सिन्दूरैरिति । सिन्दूरैः नागसम्भवाख्यैः रागद्रव्यविशेषैः । "सिन्दूरं नागसम्भवम्" इत्यमरः । कृतरुचयः अलङ्कृता इत्यर्थः । सह हेम्नः कक्ष्याभिः मध्यबन्धनैः सहेमकक्ष्याः । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः । स्रोतोभिः सप्तभिः मदनाडीभिः । "करात्कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदच्युतिः" इति पालकाप्ये । करात् नासारन्ध्राभ्याम् इत्यर्थः । मदं क्षरन्तो वर्षन्तः त्रिदशगजाः अरुणस्य अर्कस्य अंशूनां रागेण आरुण्येन भिन्नैः संसृष्टैः वर्षद्भिः स्फुरितशतह्रदैः स्फुरिततडित्कैः पयोदैः सादृश्यं ययुः इति उपमालङ्कारः ॥ ८ ॥

अत्यर्थमिति । बलानि सैन्यानि अत्यर्थं दुरुपसदात् दुःसहात् अहिममयूखमण्डलस्य सूर्य्यबिम्बस्य पर्य्यन्तात् समीपात् दूरम् उपेत्य आगत्य आशानाम् उपरचितां गुम्फिताम् एकवेणीम् इव स्थिताम् इत्युत्प्रेक्षा । रम्याः ऊर्मयः तरङ्गाः भङ्गाश्च यस्याः तां त्रिदशनदीं मन्दाकिनीं ययुः प्रापुः ॥ ९ ॥

आमत्तेति । आमत्तैः भ्रमरकुलैः आकुलानि उद्धूतानि उत्थापितानि

सम्भिन्नैरभितुरगावगाहनेन
प्राप्योर्वीरनुपदवीं विमानपङ्क्तीः ।
तत्पूर्वं प्रतिविदधे सुरापगायाः
वप्रान्तस्खलितविवर्त्तनं पयोभिः ॥ ११ ॥

क्रान्तानां ग्रहचरितात् पथो रथाना-
मक्षाग्रक्षतसुरवेश्मवेदिकानाम् ।
निःसङ्गं प्रधिभिरुपाददे विवृत्तिः
सम्पीडक्षुभितजलेषु तोयदेषु ॥ १२ ॥

तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः ।

ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि पङ्कजानि धुन्वन् कम्पयन् सुरभिः इत्यर्थः । गगननदीमरुत् शीतः मातरिश्वा वायुः कान्तानां सन्तापं विरमयति स्म शमयामास । मातरि अन्तरिक्षे श्वयति इति मातर्याश्वयतीति चेति निरुक्तिः ॥ १०

सम्भिन्नैरिति । इभतुरगावगाहनेन हस्त्यश्वावलोडनेन सम्भिन्नैः संक्षुभितैः सुरापगायाः पयोभिः कर्त्तृभिः पदवीम् अनु पदव्याम् इत्यर्थः । "लक्षणेत्थम्भूत" इत्यादिना कर्मप्रवचनीयत्वात् द्वितीया । उर्वीः विपुलाः विमानपङ्क्तीः प्राप्य तत् एव पूर्वं तत्पूर्वम् इदं प्रथमं यथा तथा आकाशगङ्गायाः तटाभावात् इति भावः । वप्रान्तेषु रोधोभूमिषु स्खलितानि तैः विवर्त्तनं प्रत्यावृत्तिः वप्रान्तस्खलितविवर्त्तनं तटान्तस्खलनप्रतिवर्त्तनम् । "वप्रः पितरि केदारे वप्रः प्राकाररोधसोः" इति वैजयन्ती । प्रतिविदधे चक्रे इति अतिशयोक्तिः ॥ ११ ॥

क्रान्तानामिति । ग्रहैः सूर्य्यादिभिः चरितात् आश्रितात् । कर्म्मणि क्तः । पथः मार्गात् । क्रान्तानां निष्क्रान्तानाम् अक्षाः चक्राधाराः दारुविशेषाः तेषाम् अग्रैः क्षताः दारिताः सुरवेश्मवेदिकाः यैः तेषां रथानां प्रधिभिः नेमिभिः चक्रान्तैः । "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरः । सम्पीडेन नोदनेन क्षुभितानि जलानि येषां तेषु तोयदेषु निःसङ्गम् अप्रतिघातं यथा तथा विवृत्तिः परिभ्रमणम् उपाददे स्वीकृता इति अतिशयोक्तिः स्वभावोक्त्या संसृज्यते ॥ १२ ॥

युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ १३ ॥
संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम् ।
पर्य्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्व्वोः ॥ १४ ॥
प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।
कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ॥ १५ ॥

तप्तानामिति । विषाणभिन्नाः गजदन्तक्षताः । "विषाणं दन्तशृङ्गयोः" इति हलायुधः । अतएव क्षरन्तः स्रवन्तः घनाः तप्तानां सुरकरिणां प्रह्लादम् उपदधिरे उपचक्रिरे । तथाहि—परोपकारे युक्तानाम् आसक्तानां महतां सतां रुजत्सु अपि पीड़यत्सु अपि विषये कल्याणी हितकारिणी खलु प्रवृत्तिः व्यापारः भवति इति अर्थान्तरन्यासः अलङ्कारः । ततो युक्तं मेघानां गजदन्तक्षतानाम् अपि तदाह्लादकत्वम् इति भावः ॥ १३ ॥

संवातेति । संवाता संवहता । वातेर्गत्यर्थत्वात् शतृप्रत्ययः । अनिलेन कामिना इव इति भावः दिव्यस्त्रीणां जघनेषु वरं श्रेष्ठं यत् अंशुकं तस्मिन् विवृत्तिम् अपसारं मुहुः नीयमाने सति पर्य्यस्यत् प्रसर्पत् पृथु विशालं मणिमेखलांशुजालम् ऊर्व्वोः युतकं चलनाख्यम् इव । "युतकं संशये युग्मे यौतके चलनेऽपि च" इति विश्वः ।—अन्तरे भवम् अन्तरीयम् अधोऽंशुकम् । "गहादिभ्यश्च" इति छप्रत्ययः । अन्तरीयोपसंव्यानपरिधानान्यधोऽंशुके" इत्यमरः । संजज्ञे संजातम् । जनिधातोः कर्त्तरि लिट् । उत्प्रेक्षालङ्कारः ॥ १४ ॥

प्रतीति । तुषारपातैः शीकरवर्षैः । "तुषारौ हिमशीकरौ" इति विश्वः । प्रत्यार्द्रीकृततिलकाः मार्जितविशेषकाः अपि शमितपरिश्रमाः प्रह्लादम् आनन्दं दिशन्तः पयोदाः कान्तानाम् । कर्त्तरि षष्ठी । बहुमतिं सम्मानम् आययुः । तथाहि—अल्पीयान् अल्पो दोषो बहु प्रभूतं सुकृतम् उपकारं न हिनस्ति न हन्ति । अर्थान्तरन्यासोऽलङ्कारः ॥१५॥

यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।
आतेनुस्त्रिदशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभा मणीनाम् ॥ १६ ॥

संसिद्धाविति करणीयसन्निबद्धै-
रालापैः पिपतिषतां विलङ्घ्य वीथीम् ।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७ ॥

आकीर्णा मुखनलिनैर्विलासिनीनाम्
उद्धूतस्फुटविशदातपत्रफेना ।

यातस्येति । ग्रथिततरङ्गं बद्धोर्मि यत् सैकतं तस्य आभा इव आभा यस्य तस्मिन् । विगतानि पयांसि यस्मात् तस्मिन् निर्जले । "शेषाद्विभाषा" इत्यादिना पाक्षिकत्वात् नञ्समासान्तः । उरःप्रभृतिपाठस्तु पयःशब्दस्य एकवचनान्तस्य एव इति न कश्चित् विरोधः । वारिवाहजाले मेघवृन्दे विच्छेदं त्रुटिं यातस्य सुरधनुषः इन्द्रचापस्य त्रिदशवधूजनाङ्गभाजां मणीनां तदङ्गसङ्गिविभूषामणीनाम् इत्यर्थः । प्रभाः कान्तयः सन्धानम् आतेनुः चक्रुः । अत्र आभरणप्रभाणाम् इन्द्रधनुःसन्धानासम्बन्धेऽपि सम्बन्धाभिधानात् अतिशयोक्तिरलङ्कारः ॥१६॥

संसिद्धाविति । संसिद्धौ कार्य्यसिद्धिविषये इति इत्थं भाविना प्रकारेण कर्त्तव्यम् इति करणीयं तेन सन्निबद्धैः संयोजितैः इत्यर्थः । आलापैः आभाषणैः उपलक्षितया । "स्यादाभाषणमालापः" इत्यमरः । दशशतानि संख्या येषु तानि लोचनानि यस्य सः सहस्रलोचन इत्यर्थः, तस्य ध्वजिन्या सेनया पिपतिषतां पक्षिणां वीथीं मार्गम् । "पितन्तो नभसङ्गमाः" इत्यमरः । "तनिपति" इत्यादिना विकल्पात् इड़ागमः । विलङ्घ्य जीमूतैः जीवस्य उदकस्य मूतः पटबन्धः येषां तैः । पृषोदरादित्वात् साधुः । अपिहितसानुः आच्छादिततटः उन्नतः इत्यर्थः । इन्द्रकीलः आसेदे प्राप्तः । सीदतेः कर्मणि लिट् ॥१७॥

सा तूर्य्यध्वनितगभीरमापतन्ती
भूभर्त्तुः शिरसि नभोनदीव रेजे ॥ १८ ॥

सेतुत्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथान् जवेन
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः ॥ १९ ॥

माहेन्द्रं नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदा दिवः पतन्तः ।
साद्दश्यं निलयननिष्प्रकम्पपक्षैः
आजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥ २० ॥

आकीर्णेति । विलासिनीनां मुखनलिनैः । उपमितसमासः । आकीर्णा व्याप्ता उद्धूतानि ऊर्द्ध्वम् उत्क्षिप्तानि स्फुटानि असङ्कुचितानि । विशदातपत्राणि श्वेतच्छत्राणि फेना इव यस्याः तथोक्ता तूर्य्यध्वनितैः वाद्यघोषैः गभीरं यथा तथा भूभर्त्तुः इन्द्रकीलस्य शिरसि आपतन्ती सा सेना नभोनदी इव रेजे ॥ १८॥

सेतुत्वमिति । पयोमुचां विताने सेतुत्वं दधति सति संरम्भात् आटोपात् जवेन अभिपततः संवहन्दम् अधरीकृत्य धावतः इत्यर्थः । तथाभूतान् रथान् नियमितैः आकृष्टैः रश्मिभिः प्रग्रहैः भुग्नाः आकुञ्चिताः घोणाः प्रोथाः येषां तैः । "कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रम्" इत्यमरः । "किरणप्रग्रहौ रश्मी" इत्यमरः । "घोणा तु प्रोथमस्त्रियाम्" इत्यमरः । अवनमन्ति इति अवनामिनः अवनतपृष्ठकायाः तुरङ्गाः कृच्छ्रेण महता प्रयत्नेन क्षितिम् आनिन्युः इति स्वभावोक्तिः ॥ १९ ॥

माहेन्द्रमिति । माहेन्द्रं नगम् अभितः इन्द्रकीलाभिमुखम् । "अभितः परितः" इत्यादिना द्वितीया । दिवः अन्तरिक्षात् पतन्तः अवतरन्तः पर्य्यन्तस्थिताः पार्श्वस्था जलदाः येषां ते करेणुवर्य्याः करेणुषु वर्य्याः श्रेष्ठाः इत्यर्थः । "न निर्द्धारणे" इति षष्ठीसमासनिषेधात् "सप्तमी" इति योगविभागात् सप्तमीसमासः निलयने स्थाने निष्प्रकम्पपक्षैः निश्चलपक्षैः जलनिधिशायिभिः नगेन्द्रैः मैनाकादिभिः साद्दश्यम् आजग्मुः इत्युपमा ॥२०॥

उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन ।
आ मूलादुपनदि सैकतेषु लेभे
सामग्र्यं खुरपदवी तुरङ्गमाणाम् ॥ २१ ॥
सध्वानं निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन् प्रतिनिनदैरधित्यकासु ।
उद्ग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥ २२ ॥
सम्भिन्नामविरलपातिभिर्मयूखै-
र्नीलानां भृशमुपमेखलं मणीनाम् ।
विच्छिन्नामिव वनिता नभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयाम्बभूवुः ॥ २३ ॥

उत्सङ्ग इति । महाद्रेः उत्सङ्गे मूर्ध्नि विषये यत् समविषमं समं च विषमं च निम्नोन्नतं तस्मिन् । द्वन्द्वैकवद्भावः । वियदभिपातलाघवेन गगनसञ्चारपाटवेन समम् एकरूपम् आरोहावरोहरहितम् इत्यर्थः । क्रान्तानां गच्छतां तुरङ्गमाणां खुरपदवी खुरपङ्क्तिः उपनदि नदीसमीपे । "अव्ययीभावश्च" इति नपुंसकत्वात् ह्रस्वत्वम् । सैकतेषु आमूलात् मूलम् आरभ्य आदित आरभ्य इति यावत् । समग्रस्य भावः सामग्र्यं साकल्यं,भावे ष्यञ्, लेभे । सैकतात् अन्यत्र निम्नेषु गगनचारिणा समप्रदेशवत् विषमेषु समखुरस्पर्शाभावात् विच्छिन्ना खुरसरणिः । सैकतेषु तु सर्वत्र समत्वात् अविच्छिन्ना इत्यर्थः ॥ २१ ॥

सध्वानमिति । सध्वानं सशब्दं निपतिताः निर्झराः प्रवाहाः यासु तासु । "प्रवाहो निर्झरो झरः" इत्यमरः । अधित्यकासु नगोर्द्ध्वभूमिषु । "भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्याम्" इत्यादिना त्यकन्-प्रत्ययः । मन्द्रैः गम्भीरैः । "कलो मन्द्रस्तु गम्भीरे" इत्यमरः । प्रतिनिनदैः प्रतिध्वानैः सम्मूर्च्छन् वर्द्धमानः रथानां ध्वनिः घनरवशङ्कया मेघगर्जितभ्रमेण इति भ्रान्तिमदलङ्कारः । उद्ग्रीवैः मयूरैः सोत्कण्ठम् उपशुश्रुवे उपश्रुतः । शृणोतेः कर्म्मणि लिट् ॥ २२ ॥

आसन्नाद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४ ॥

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं
पर्य्यस्यन्नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा
घर्मान्तक्षुभितजलेव जह्नुकन्या ॥ २५ ॥

सम्भिन्नामिति । अविरलपातिभिः निरन्तरप्रसारिभिः उपमेखलं मेखलातटेषु इत्यर्थः । "अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धने" · यादवः । नीलानां मणीनां मयूखैः भृशं सम्भिन्नाम् एकीभूताम् अतएव नभोऽन्तराले विच्छिन्नाम् इव स्थिताम् इति उत्प्रेक्षा । वप्राम्भःस्रुतिं वप्रोदकधारां वनिताः अवलोकयाम्बभूवुः । वप्राम्भःस्रुतेः स्वधवलिमत्यागेन इन्द्रनीलानां नीलिमस्वीकाररूपतद्गुणोत्थापिता विच्छेदोत्प्रेक्षा इति · योः अङ्गाङ्गिभावेन सङ्करः । तेन च नैल्याविच्छेदभ्रमरूपो भ्रान्तिमान् व्यज्यते ॥ २३

आसन्नेति । धुरं गताः तेषां धूर्गतानां नियन्तॄणां धियम् अवमत्य अगणयित्वा अवज्ञाय इति यावत् । आसन्नायां द्विपपदव्यां वनगजमार्गे यः मदानिलः तस्मै क्रुध्यन्तः तं प्रति कुप्यन्तः । "क्रुधद्रुह" इत्यादिना सम्प्रदानत्वात् चतुर्थी । सव्याजं सकपटं निजकरिणीभिः आत्तचित्ताः आकृष्टचित्ताः सुरकरिणः देवनागाः प्रस्थानं गमनं कथञ्चित् कष्टेन ईषुः अभिलेषुः ॥ २४ ॥

नीरन्ध्रमिति । नीरन्ध्रं सान्द्रं पथिषु रथाङ्गैः चक्रैः नुन्नं प्रेरितम् । "नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समाः" इत्यमरः । पर्य्यस्यत् प्रसरत् नवसलिलम् इव अरुणं रजो वहन्ती सा वाहिनी सेना घर्मान्ते प्रावृषि क्षुभितजला कलुषोदका इत्यर्थः । जह्नुकन्या गङ्गा इव वनानि फलकुसुमप्रधानानि गहनानि जीर्णानि च तानि च तानि वनगहनानि आतेने व्यानशे । अत्र समासगतवाक्यगतोपमयोः अङ्गाङ्गिभावेन सङ्करः ॥ २५

सम्भोगक्षमगहनामथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहाया
वृत्रारेरविरलशाद्वलां धरित्रीम् ॥ २६ ॥
भूभर्त्तुः समधिकमादधे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः ।
संसक्तौ किमसुलभं महोदयानाम्
उच्छ्रायं नयति यदृच्छयापि योगः ॥ २७ ॥
सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किसलयशालिनी लतानाम् ॥

सम्भोगेति । अथ वृत्रारेः शक्रस्य सहायाः सचिवाः गन्धर्वाः उपगङ्गं गङ्गासमीपे । अव्ययीभावस्य नपुंसकत्वात् ह्रस्वत्वम् । सम्भोगक्षमगहनाम् उपभोगयोग्यवनां ज्वलिताः मणयो येषु तानि सैकतानि बिभ्राणाम् । भृञः कर्त्तरि लटः शानच् । च्युतैः स्वयंपतितैः कुसुमैः आचितां व्याप्ताम् अविरलाः सान्द्राः शाद्वलाः शादप्रायप्रदेशाः यस्यां सा तां धरित्रीम् अध्यूषुः अधितस्थुः । वसतेर्यजादित्वात् सम्प्रसारणम् । अत्र धरित्रीविशेषणार्थानाम् अधिवासहेतुत्वात् अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६

भूभर्त्तुरिति । तदा हरिसखवाहिनीनिवेशो गन्धर्वसेनाशिबिरम् । "निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्त्तितः" इति शाश्वतः । भूभर्त्तुः पर्वतस्य उर्व्याः समधिकं पूर्वस्मात् अभ्यधिकं यथा तथा श्रीमत्तां श्रियम् इत्यर्थः । आदधे जनयामास । तथाहि—महोदयानां महात्मनां संसक्तौ सम्यक्सम्बन्धे । "संभक्तौ" इति पाठे तु सम्यक्सेवायां किम् असुलभं ? न किञ्चित् दुर्लभम् इत्यर्थः । यतः यदृच्छया दैवात् योगः अपि उच्छ्रायम् उत्कर्षं नयति । अत्र प्रकृतयदृच्छया योगस्य उत्कर्षाभिधानादप्रकृतभक्तियोगस्य उत्कर्षाधायकत्वे कैमुतिकन्यायेन अर्थापत्तिरिति प्राकरणिकात् अप्राकरणिकस्यार्थापत्तिरलङ्कारः । तदुक्तम्—"एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा पतेत् । कैमुत्येन यतः सा स्यादर्थापत्तिरलङ्क्रिया ॥" इति ॥ २७

सामोदा इति । सामोदाःससौरभाः कुसुमप्रधानाः तरवः । शाक-

साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८ ॥

क्लान्तोऽपि त्रिदशवधूजनः पुरस्ता-
ल्लीनाहिश्वसितविलोलपल्लवानाम् ।
सेव्यानां हतविनयैरिवावृतानां
सम्पर्कं परिहरति स्म चन्दनानाम् ॥ २९ ॥

उत्सृष्टध्वजकुथकङ्कटा धरित्री-
मानीता विदितनयैः श्रमं विनेतुम् ।
आच्छिन्नद्रुमगहना युगान्तवातैः
पर्य्यस्ता गिरय इव द्विपा विरेजुः ॥ ३० ॥

पार्थिवादिषु द्रष्टव्यः । तेषां श्रियः समृद्धयः विविक्ताः विजनप्रदेशाः । "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः । किशलयशालिनी लतानां नवपल्लवयुतवल्लीनां सम्पत्तिः एताः अमराङ्गनोपभुक्ताः सत्यः साफल्यं ययुः । तथाहि—यया लक्ष्म्या कारणेन परेषाम् उपकुरुते लक्ष्मीवान् इति शेषः । सा लक्ष्मीः नान्येति भावः । परेषामित्यत्र "अनुकरोति भगवतो नारायणस्य" इत्यादिवत् क्रियायोगे हि सम्बन्धसामान्ये षष्ठी ॥२८

क्लान्त इति । क्लान्तः अपि त्रिदशवधूजनः पुरस्तात्—अग्रे लीनानां संश्रितानाम् अहीनां श्वसितैः निःश्वासैः विलोलाः पल्लवाः येषां तेषां चन्दनानां सम्पर्कं हतविनयैः दुर्जनैः खलैः आवृतानां संवृतानां सेव्यानां प्रभूणां सम्पर्कम् इव परिहरति स्म । दुष्टवद्दुष्टसंसृष्टाः गुणाढ्या अपि त्याज्या इति भावः ॥ २९ ॥

उत्सृष्टेति । उत्सृष्टाः आच्छिन्नाः ध्वजाः कुथाः आस्तरणानि कङ्कटाः तनुत्राणानि च येभ्यः ते । "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः" इत्यमरः । विदितनयैः शिक्षाभिज्ञैः यन्तृभिः श्रमं विनेतुं क्लमम् अपनेतुं धरित्रीम् आनीताः निवेश्यमाना इत्यर्थः । द्विपाः युगान्तवातैः आच्छिन्नानि उद्धृतानि द्रुमाणां गहनानि वनानि येभ्यः ते पर्य्यस्ताः विपर्यासिताः गिरय इव विरेजुः शुशुभिरे ॥ ३० ॥

प्रस्थानश्रमजनितां विहाय निद्रा-
मामुक्ते गजपतिना सदानपङ्के ।
शय्यान्ते कुलमलिनां चणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥ ३१ ॥

आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्द्धानं निहितशिताङ्कुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥ ३२ ॥

आरोढ़ुः समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।
सम्मार्ज्जन्नरुणमदस्रुतौ कपोलौ
सस्यन्दे मद इव शीकरः करेणोः ॥ ३३ ॥

प्रस्थानेति । गजपतिना प्रस्थानश्रमेण गमनक्लेशेन जनितां निद्रां विहाय आमुक्ते अतएव सदानपङ्के गजमदयुक्ते शय्यान्ते शयनीयप्रदेशे चणं विलीनं लग्नम् अलिनां कुलं संरम्भेण उत्थानसम्भ्रमेण च्युतं भ्रष्टं शृङ्खलं निगडम् इव इत्युत्प्रेचा । "अथ शृङ्खले । अन्दुको निगड़ोऽस्त्री स्यात्" इत्यमरः । चकाशे शुशुभे ॥३१॥

आयस्त इति । वनगजदानस्य गन्धः अस्य अस्ति इति तथोक्तं रोधः परकूलमित्यर्थः । सम्प्राप्तुं गन्तुम् आयस्तः उत्सुकः प्रयत्नं कुर्वाणः इत्यर्थः । "यसु प्रयत्ने" इति धातोः कर्त्तरि क्तः । किन्तु सुरसरिदोघेन गङ्गाप्रवाहेण रुद्धं वर्त्म यस्य सः । नागः गजः निहितः दत्तः शितः तीक्ष्णः अङ्कुशः यस्मिन् । "अङ्कुशोऽस्त्री सृणिः स्त्रिया" मित्यमरः । तं मूर्द्धानं विधुन्वन् रोषादिति भावः । यन्तारं न विगणयाञ्चकार न विगणयामास ॥३२॥

आरोढ़ुरिति । समवनतस्य जलपानार्थम् आनतपूर्वकायस्य करेणोः गजस्य । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । करेण पीतस्य शेषे पयसि आरोढ़ुः हस्तिपकात् साशङ्कं सभयं समीरिते चिप्ते सति इत्यर्थः । शीकरः अम्बुकणः अरुणे मदस्रुती मदधारे ययोः तौ कपोलौ सम्मार्ज्जन्

आघ्राय क्षणमतितृष्यतापि रोषा-
दुत्तीरं निहितविवृत्तलोचनेन ।
सम्पृक्तं वनकरिणां मदाम्बुसेकै-
र्नाचेमे हिममपि वारि वारणेन ॥ ३४ ॥

प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीड़न्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहिततामदानलेखै-
रुत्तेरुः सरसिजगन्धिभिः कपोलैः ॥ ३५ ॥

आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैः सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ ३६ ॥

प्रमृजन् । "मृजेरजादौ संक्रमे विभाषावृद्धिर्वक्तव्या" इति वृद्धिः । मद इव सस्यन्दे सुस्राव । मदसम्पृक्तस्य रुदमाहण्यात् मदोपमा ॥ ३३ ॥

आघ्रायेति । अतितृष्यता अपि अति पिपासता अपि क्षणम् आघ्राय रोषात् उत्तीरं परतीरं । विभक्त्यर्थे अव्ययीभावः । निहिते विवृत्ते घूर्णिते लोचने यस्य:तेन प्रतिगजदिदृक्षया इति भावः । वारणेन हिमं शीतलम् अपि वनकरिणां मदाम्बुसेकैः दानधाराभिः सम्पृक्तं वारि न आचेमे न पीतम् । "चमु अदने" इति धातोः कर्मणि लिट् ॥ ३४ ॥

प्रश्च्योतदिति । क्रीड़न्तः विहरन्तः गजपतयः निम्नगायाः गङ्गायाः पयांसि प्रश्च्योतद्भिः क्षरद्भिः मदैः सुरभीणि कृत्वा किञ्जल्कैः केसरैः व्यवहिताः तिरोहिताः ताम्राः ताम्रवर्णाः दानलेखाः मदराजयः येषु तैः अतएव सरसिजगन्धिभिः कपोलैः उपलक्षिताः सन्तः उत्तेरुः निर्जग्मुः । अत्र मदसरसिजगन्धयोः समयोः विनिमयोक्त्या समपरिवृत्तिरलङ्कारः । तेन गजानां निम्नगायाश्च परिमलव्यत्ययान्तरसंरम्भो व्यज्यते ॥३५ ॥

आकीर्णमिति । घनारुणेन सान्द्रलोहितेन । विशेषणसमासः । बलरजसा सेनापरागेण आकीर्णं सपदि प्रक्षोभैः आलोड़नैः तटेषु तीरेषु तरङ्गितं सञ्जाततरङ्गं तारकादित्वात् इतच् । यद्वा तरङ्गवत् कृतं मत्वन्तात्

श्रीमद्भिर्नियमितकन्धरापरान्तैः
संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निसृतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७ ॥

निःशेषं प्रशमितरेणु वारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम् ।
आमोदं व्यवहितभूरिपुष्पगन्धो
भिन्नैलासुरभिमुवाह गन्धवाहः ॥ ३८ ॥

साद्दश्यं दधति गभीरमेघघोषै-
रुन्निद्रक्षुभितमृगाधिपश्रुतानि ।

"तत्करोति" इति णिचि कर्मणि क्तः, णाविष्ठवद्भावात् मतुपो लुक् । तथा मातङ्गैः उन्मथितानां लुलितानां सरोजानां रेणुभिः पिङ्गं पिशङ्गम् अम्बु, माञ्जिष्ठेन महारजनेन आरक्तं माञ्जिष्ठं वसनम् इव निर्बभासे । "तेन रक्तम्" इति अण् । "माञ्जिष्ठम्" इत्यत्र "कौशेयम्" इति वा पाठे 'कोशाड्-ढञ्, इति कोशशब्दात् ढञ् । "कौशेयं कृमिकोशोत्थम्" इत्यमरः ॥ ३६ ॥

श्रीमद्भिरिति । श्रीमद्भिः शोभावद्भिः नियमिताः कन्धराः अपरान्ताः चरमपादाग्राणि च येषां तैः । "अपरः पश्चिमः पादः" इति वैजयन्ती । अगुरुवनेषु साङ्गहारं साङ्गविक्षेपं यथा तथा संसक्तैः निसृतानि प्रस्रुतानि मदाम्बूनि येषां तैः गजेन्द्रैः प्रस्यन्दिनः जलस्राविनः प्रचलिताः ये गण्डशैलाः च्युतोपलाः तेषां शोभा सम्प्रापे प्राप्ता । कर्मणि लिट् । "गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः । अत्र अन्यस्य अन्यशोभाप्राप्त्य-सम्भवात् तत्सदृशी शोभा इति प्रतिबिम्बत्वाक्षेपात् निदर्शनालङ्कारः ॥ ३७ ॥

निःशेषमिति । गन्धं वहति इति गन्धवाहः वायुः । कर्मणि अण् । निःशेषं यथा तथा प्रशमितः रेणुः येन तत् मदजलं स्रोतोभिः मदनाडीभिः अजस्रम् उज्झतां वर्षतां वारणानां सम्बन्धिनं व्यवहितः । तिरस्कृतः भूरिः बहुलः पुष्पगन्धः येन सः भिन्नाः फुल्लाः एलाः । लताविशेषाः । "पृथ्वीका चन्द्रवालैला" इत्यमरः । तत्पुष्पाणि च एलाः । "पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले" इत्यमरः । भिन्नैलावत् सुरभिं सुगन्धिं घ्राणेन्द्रिय-तर्पणम् इत्युपमा । आमोदं परिमलम् उवाह वहति स्म ॥ ३८ ॥

आतेनुरुत्कितचकोरनीलकण्ठान्
कच्छान्तानमरमहेभबृंहितानि ॥ ३९ ॥

शाखावसक्तकमनीयपरिच्छदाना-
मध्वश्रमातुरवधूजनसेवितानाम् ।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ ४० ॥

इति * * * किरातार्जुनीये महाकाव्ये
सप्तमः सर्गः ॥ ७ ॥

सादृश्यमिति । गर्भीरैः मेघघोषैः सान्द्रगर्जितैः सादृश्यं दधति इत्युपमा । दधातेः शतृप्रत्ययः "वा नपुंसकस्य" इति विकल्पान्नुमभावः । उन्निद्राः बृंहितश्रवणात् एव प्रबुद्धाः क्षुभिताः संरब्धाश्च ये मृगाधिपाः तैः श्रुतानि आकर्णितानि न तु प्रबुद्धान् इति भावः । अमरमहेभबृंहितानि महान्तश्च ते इभाः गजाश्च इति महेभाः अमराणां महेभाः तेषां बृंहितानि सुरगजगर्जितानि कच्छान्तान् अनूपप्रदेशान् । "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । चकिताः गर्जितशङ्कया सम्भ्रान्ताः चकोराः पक्षिविशेषाः नीलकण्ठाः मयूराश्च येषु तान् तथाभूतान् आतेनुः । भ्रान्तिमदलङ्कारः ॥३९

शाखेति । परिच्छाद्यते अनेन इति परिच्छदः परिकरः वसनाभरणादिः । "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः, "छादेर्घेऽद्व्युपसर्गस्य" इति ह्रस्वत्वम् । शाखासु अवसक्ताः कमनीयाः परिच्छदाः येषां तेषाम् अध्वनि श्रमः तेन आतुरैः पीडितैः वधूजनैः संवितानां निवेशनविभागैः आवसतिकावच्छेदैः परिष्कृतानाम् अलङ्कृतानाम् । "संपर्युपेभ्यः" इत्यादिना सुट् । वनपादपानाम् अरण्यवृक्षाणां पुरे यत् उपवनं कृत्रिमवनं तत्र जाता पुरोपवनजा लक्ष्मीः शोभा जज्ञे जाता । अत्र अन्योन्यलक्ष्मीसम्बन्धासम्भवात् तत्सदृशी इति सादृश्याक्षेपात् असम्भवे तद्वस्तुसम्बन्धा इयं निदर्शना । वसन्ततिलकावृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ ४० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम् ।
सुराङ्गना गोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः ॥ १ ॥
यथायथं ताः सहिता नभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः
क्षणद्युतीनां दधुरेकरूपताम् ॥ २ ॥

अथेति । अथ निवेशनानन्तरं सुराङ्गनाः अप्सरसः स्वमायया स्वेच्छाविशेषेण कृतैः निर्मितैः मन्दिरैः उज्ज्वलं दीप्तं ज्वलन्तः मणयः यस्मिन् तत् व्योमसदां गन्धर्वाणां सनातनं सदातनम् । "सायंचिरम्" इत्यादिना भावार्थे ट्युप्रत्ययः । गौः वज्रं तत्पतिः इन्द्रः तच्चापवर्णानि यस्य तत् तथोक्तम् इत्युपमा । पुरं नगरं वनानां विजिहीर्षया वनानि विहर्त्तुम् इच्छया । कर्मणि षष्ठी, जहुः तत्यजुः । जहातेर्लिट् । अत्र ज्वलं ज्वलत् इति पुरं पुरम् इति च असकृद्व्यञ्जनद्वयावृत्त्या छेकानुप्रासः । अन्यत् तद्वैपरीत्यात् वृत्त्यनुप्रासः इति तयोः उपमायाश्च संसृष्टिः । अस्मिन् सर्गे वंशस्थं वृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

यथायथमिति । यथायथं स्वकीयम् अनतिक्रम्य इत्यर्थः । "यथास्वं तु यथायथम्" इत्यमरः । नपुंसकनिपातनन्तु ह्रस्वार्थम् । नभश्चरैः गन्धर्वैः मेघैश्च सहिताः प्रभाभिः स्वदीप्तिभिः उद्भासिताः शैलवीरुधः याभिः ताः पूर्वोक्ताः वनजायतेक्षणाः पद्मलोचनाः स्त्रियः वनं विशन्त्यः क्षणं द्युतिः यासां तासां क्षणद्युतीनां विद्युताम् एकरूपतां समानरूपतां दधुः । मुहुः दूरान्तराले तासां स्फुरणस्य क्षणिकत्वादिति भावः । श्लेषानुप्राणिता इयम् उपमा, श्लेषोऽयम् इति केचित् । उभयथा अपि अनुप्रासेन संसर्गः ॥ २ ॥

निवृत्तवृत्तोरुपयोधरक्लमः
प्रवृत्तनिर्ह्रादिविभूषणारवः।
नितम्बिनीनां भृशमादधे धृतिं
नभःप्रयाणादवनौ परिक्रमः॥ ३॥
घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयानपहाय शाखिनः।
पुरोऽभिससे सुरसुन्दरीजनै-
र्यथोत्तरेच्छा हि गुणेषु कामिनः॥ ४॥
तनूरलक्ताकरुणपार्ष्णिपल्लवाः
स्फुरन्नखांशूत्करमञ्जरीभृतः।
विलासिनीबाहुलता वनालयो
विलेपनामोदहृताः सिषेविरे॥ ५॥

निवृत्तेति। निवृत्तः गतः वृत्तस्य वर्त्तुलस्य उरुपयोधरस्य क्लमः यस्मिन् सः पादप्रक्षेपेषु विश्रान्तिसम्भवादिति भावः। किञ्च प्रवृत्तः जातः निर्ह्रादिविभूषणानां नपुरादीनाम् आरवः यस्मिन् सः। अवनौ पृथिव्यां परिक्रमः सञ्चारः नितम्बिनीनां नभःप्रयाणात् भृशम् अधिकम्। "पञ्चमी विभक्ते" इति पञ्चमी। धृतिं सन्तोषम् आदधे। अत्र विशिष्टपरिक्रमस्य धृत्याधानहेतुत्वात् काव्यलिङ्गम् अलङ्कारः॥ ३॥

घनानीति। घनानि सान्द्राणि न तु विरलानि करप्रचेयानि हस्त-ग्राह्याणि अनुच्चानि। "कृत्यैरधिकार्थवचने" इति तृतीयासमासः। कामं कुसुमानि बिभ्रतः नवकुसुमितान् शाखिनः तरून् अपहाय सुरसुन्दरी-जनैः पुरः अग्रे अभिससे अभिसृतम्। भावे लिट्। तथाहि—कामिनः गुणेषु अतिशयेषु विषये उत्तरम् उत्तरम्। वीप्सार्थे अव्ययीभावः। यथो-त्तरम् इच्छा येषां ते यथोत्तरेच्छाः उत्तरोत्तराभिलाषुकाः हि। अत्र परिकरोत्थापितः अर्थान्तरन्यासः अलङ्कारः॥ ४॥

तनूरिति। विलेपनामोदैः हृता आकृष्टाः वनालयः वनभृङ्गाः तनूः कृशाः अलक्तैः अरुणाः पाणय एव पल्लवाः यासां ताः स्फुरन्तः नखांशूनाम् उत्कराः पुञ्जा एव मञ्जर्यः ताः बिभ्रति इति तथोक्ताः। क्विप्। विला-

निपीयमानस्तवका शिलीमुखै-
रशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनै-
रमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥
करौ धुनाना नवपल्लवाकृती
वृथा कृथा मानिनि मा परिश्रमम् ।
उपेयुषी कल्पलताभिशङ्कया
कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ७ ॥

मिनीनां बाहव एव लताः, ताः सिषेविरे । अत्र समस्तवस्तुविषयरूपकालङ्कारः, बाहवयवानां पल्लवादीनाम् अपि निरूपणात् इति ॥ ५ ॥

निपीयमानेति । शिलीमुखैः अलिभिः । "अलिबाणौ शिलीमुखौ" इत्यमरः । निपीयमानः स्तवकः गुच्छः यस्याः सा चलाः बालपल्लवाः यस्याः सा अत एव अमन्दं दृढं दष्टः ओष्ठः यस्मिन् तं करावधूननं करकम्पनं तत् विडम्बयन्ती । स्तवकपानेन ओष्ठदंशनं पल्लवचलनेन करावधूननं च अनुकुर्वती इत्यर्थः । धूञः ण्यन्तात् ल्युट् । णिचि धूञ्प्रीञो नुग् वक्तव्यः । अशोकयष्टिः अशोकशाखा इत्यर्थः वधूजनैः ददृशे दृष्टा । अत्र विडम्बयन्ती इति प्रस्तुताशोकशाखाविशेषणभूतोपमासहिम्ना अप्रस्तुतनायिकाप्रतीतिः समासोक्तिः उत्तिष्ठमानया एव उपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ६ ॥

अथ कश्चित् अलिकुलाक्रान्तां काञ्चिदाह--कराविति । मानपरिहारेण मधुपाश्रयणं तु न कश्चित् बाध इति आशयेन सम्बोधयति—हे मानिनीति । नवपल्लवस्य आकृतिः इव आकृतिः ययोः इत्युपमा. तौ करौ धुनाना । धूञः क्रैयादिकात् कर्त्तरि लटः शानच् । वृथा व्यर्थं परिश्रमं मा कृथा मा कुरुष्व । करोतेः आशीरर्थे माङि लुङ् । वृथात्वे हेतुम् आह—कल्पलताभिशङ्कया कल्पवल्लीभ्रमेण इति भ्रान्तिमदलङ्कारः । उपेयुषी उपगता षट्पदावलिः कथं नु इतः त्रस्यति बिभेति न त्रस्यति इव इत्यर्थः । "वा भ्राश" इत्यादिना विकल्पेन श्यन्प्रत्ययः । अत्र कान्तापरिश्रमवैयर्थ्यरूपकार्य्यस्य षट्पदावलेः कल्पवल्लीभ्रमनिबन्धनविश्वासरूपकारणसमर्थनात् कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः भ्रान्तिमता अङ्गाङ्गिभावेन सङ्कीर्णः सन् उपमया संसृज्यते ॥ ७ ॥

जहीहि कोपं दयितोऽनुगम्यतां
पुरानुशेते तव चञ्चलं मनः ।
इति प्रियं काञ्चिदुपैतुमिच्छतीं
पुरोऽनुनिन्ये निपुणः सखीजनः ॥ ८ ॥

समुन्नतैः काशदुकूलशालिभिः
परिक्वणत्सारसपङ्क्तिमेखलैः ।
प्रतीरदेशैः स्वकलत्रचारुभि-
र्विभूषिताः कुञ्जसमुद्रयोषितः ॥ ९ ॥

विदूरपातेन भिदामुपेयुष-
श्च्युताः प्रवाहादभितः प्रसारिणः ।
प्रियाङ्कशीताः शुचिमौक्तिकत्विषो
वनप्रहासा इव वारिबिन्दवः ॥ १० ॥

अथ काचित् सखी काञ्चित् प्रणयकुपिताम् आह—जहीहीति । प्रियम् उपैतुं स्वयम् एव अनुसर्त्तुम् इच्छतीम् । "आच्छीनद्योर्नुम्" इति विकल्पात् नुमभावः । काञ्चित् नायिकां निपुणः चित्तज्ञः सखीजनः कोपं जहीहि त्यज । "आ च हौ" इति विकल्पात् इकारादेशः । दयितः अनुगम्यताम् अनुस्रियताम् । उभयथापि प्रार्थनायां लोट् । अन्यथा चञ्चलम् अस्थिरं तव मनः पुरा अनुशेते अग्रे अनुशयिष्यते अनुतप्स्यते इत्यर्थः । "यावत् पुरानिपातयोर्लट्" इति लट् । इति अनेन प्रकारेण पुरः पूर्वम् एव अनुनिन्ये प्रसादयामास ॥८॥

अथ चतुर्भिः श्लोकैः कलापकम् आह—समुन्नतैरिति । समुन्नतैः काशानि अश्ववालकुसुमानि तानि दुकूलानि इव तैः शालन्ते इति तथोक्तैः । सारसपङ्क्तयः मेखलाः इव ताः परिक्वणन्त्यः येषु ते तैः स्वेषां कलत्राणि श्रोण्यः तद्वत् चारवः तैः । "कलत्रं श्रोणिभार्ययोः" इत्यमरः । प्रतीरदेशैः विभूषिताः तटप्रदेशैः भूषिताः कुञ्जसमुद्रयोषितः वननद्यः इत्यर्थः । अत्र तीरादीनां कलत्राद्यौपम्योपमेयत्वात् योषिच्छब्दसामर्थ्याच्च नदीनां योषिदौपम्यं गम्यते ॥९॥

विदूरेति । विदूरपातेन भिदां भेदम् । "षिद्भिदादिभ्योऽङ्" ।

सखीजनं प्रेमगुरूकृतादरं
निरीक्षमाणा इव नम्रमूर्त्तयः ।
स्थिरद्विरेफाञ्जनशारितोदरै-
र्विसारिभिः पुष्पविलोचनैर्लताः ॥ ११ ॥
उपेयुषीणां बृहतीरधित्यका
मनांसि जह्रुः सुरराजयोषिताम् ।
कपोलकाषैः करिणां मदारुणै-
रुपाहितश्यामरुचश्च चन्दनाः ॥ १२ ॥
॥ कलापकम् ॥
स्वगोचरे सत्यपि चित्तहारिणां
विलोभ्यमानाः प्रसवेन शाखिनाम् ।

उपेयुषः उपगतात् प्रवाहात् च्युताः, अतएव अभितः प्रसारिणः प्रसपन्तः इति प्रियायाः अङ्कः उत्सङ्गः इव शीताः शीतलाः शुचीनां मौक्तिकानां त्विष इव त्विषः येषां ते । किञ्च वनस्य प्रहासा इव स्थिता इत्युत्प्रेक्षा । वारि-बिन्दवश्च । अत्र उपमयोः उभयोः उत्प्रेक्षायाश्च संसृष्टिः ॥ १० ॥

सखीति । द्वौ रेफौ वर्णविशेषौ येषां ते द्विरेफाः भ्रमरशब्देन तदर्थो लक्ष्यते । "द्व्यक्षरं मासमिति विदधाति" इति भाष्यकारः । स्थिराः निश्चलाः द्विरेफा एव अञ्जनानि तैः, शारितानि शबलीकृतानि उदराणि येषां तैः । "शारः शबलवातयोः" इति विश्वः । विसारिभिः विस्तृतैः पुष्पाणि एव विलोचनानि तैः प्रेम्णा गुरूकृतः आदरो यस्मिन् कर्म्मणि तत् । तथा सखीजनं निरीक्षमाणाः पश्यन्त इव स्थिताः । कुतः ? नम्रमूर्त्तयः अवनताङ्गयः लताश्च । अत्र रूपकोत्प्रेक्षयोः सङ्करः ॥११॥

उपेयुषीणामिति । मदेन अरुणैः अव्यक्तरागैः । "अव्यक्तरागस्त्वरुणः" इत्यमरः । करिणां कपोलानां काषैः कषणैः उपाहितश्यामरुचः जनित-कृष्णवर्णाः इति तद्भूषणालङ्कारः । चन्दनाः मलयजाः "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः । बृहतीः अधित्यकाः ऊर्द्ध्वभूमीः उपे-युषीणां सुरराजयोषितां मनांसि जह्रुः । अत्र चतुःश्लोक्या नद्यादीनां विशिष्टानाम् एव अप्सरोमनोहरणहेतुत्वोक्त्या काव्यलिङ्गम् उन्नेयम् ॥१२॥

नभश्चराणामुपकर्त्तुमिच्छतां
प्रियाणि चक्रुः प्रणयेन योषितः॥ १३ ॥

प्रयच्छतोच्चैः कुसुमानि मानिनी
विपक्षगोत्रं दयितेन लम्भिता।
न किञ्चिदूचे चरणेन केवलं
लिलेख वाष्पाकुललोचना भुवम्॥ १४ ॥

प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया।
समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम्॥ १५ ॥

स्वगोचर इति। चित्तहारिणा मनोहरेण शाखिनां प्रसवेन पुष्पजातेन विलोभ्यमानाः आकृष्यमाणाः योषितः स्वगोचरे स्वविषये। स्वकरप्रचेये सति अपि इत्यर्थः। प्रसवे इति शेषः। उपकर्त्तुं परिचरितुम् इच्छतां नभश्चराणां गन्धर्वाणां प्रणयेन सहायहेतुना प्रियाणि चक्रुः। स्वकरग्राह्यम् अपि प्रसवं स्वकान्तप्रियार्थं तद्दाप्यमानम् एव अग्रहीषुः इत्यर्थः॥ १३ ॥

प्रयच्छतेति। कुसुमानि प्रयच्छता ददता दयितेन उच्चैः उच्चैस्तरां विपक्षगोत्रं सपत्नीनामधेयं लम्भिता प्रापिता तन्नाम्ना आहूता इत्यर्थः। "नाम गोत्रं कुलं गोत्रम्" इति शाश्वतः। मानिनी अतएव न किञ्चित् ऊचे। कर्त्तरि लिट्। किन्तु केवलं वाष्पाकुललोचना सती चरणेन भुवं लिलेख। गोत्रस्खलनजनितेर्ष्यानिमित्तनिर्वेदादिति भावः। मानिनी अतएव न किञ्चित् ऊचे इति उक्तम्। तदुक्तं दशरूपके—तत्त्वाज्ञानापदीर्ष्यादेनिर्वेदः स्वावमानना। तत्र चिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वासदीनता" इति॥ १४ ॥

प्रिय इति। वाचं यच्छति ददति समालपति इत्यर्थः। दाणः शतृप्रत्ययः। "पाघ्रा" इत्यादिना यच्छादेशः। प्रिये निबद्धदृष्टिः अतएव उन्मुखी शिथिलः श्लथः आकुलः चलितश्च तादृशः उच्चयो नीवीबन्धः यस्याः सा। "नारीकट्यंशुकग्रन्थौ नीविः स्यादुच्चयोऽप्यथ" इति मार्त्तण्डः। अपरा अन्या स्त्री अंशुकं न समादधे न बबन्ध। रागपारवश्यादिति भावः। पुष्पेषु वृथा व्यर्थम्। आहितम् आरोपितम् अस्थाने प्रसारितम् इत्यर्थः।

सलीलमासक्तलतान्तभूषणं
समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीड़ं नुनुदे नितम्बिना
घनेन कश्चिज्जघनेन कान्तया ॥ १६ ॥

कलत्रभारेण विलोलनीविना
गलद्दुकूलस्तनशालिनोरसा ।
बलिव्यपायस्फुटरोमराजिना
निरायतत्वादुदरेण ताम्यता ॥ १७ ॥

विलम्बमानाकुलकेशपाशया
कयाचिदाविष्कृतबाहुमूलया ।

पाणिपल्लवं च न विवेद। प्रियासक्तचित्तत्वात् इति भावः। एषा च प्रगल्भा नायिका। "पाणिपल्लवम्" इत्यत्र अन्यतरसाधकप्रमाणाभावात् उपमारूपकयोः सन्देहसङ्करः ॥ १५ ॥

सलीलमिति। आसक्ताः लतान्ताः पल्लवाः भूषणं यस्य तत् पल्लवैः सह ग्रथितम् इत्यर्थः। कुसुमावतंसकं पुष्पशेखरं कान्तदत्तम् इति भावः। सलीलं सविलासं समासजन्त्या शिरसि प्रणिदधत्या। "दंशसञ्जस्वञ्जां शपि" इति नलोपः। कान्तया कश्चित् स्तनाभ्याम् उपपीड्य इति स्तनोपपीड़म्। "सप्तम्याञ्च" इत्यादिना णमुल् प्रत्ययः। नितम्बिना। प्रशंसायाम् इनिः। घनेन निविड़ेन जघनेन। "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः। नुनुदे नुन्नः अंशुकातिरेकादिति भावः। एषा च प्रगल्भा एव ॥ १६ ॥

अथ युग्मेन आह— कलत्रेति। विलोलनीविना गात्रोन्नमनात् विश्लिष्ट-वस्त्रग्रन्थिना कलत्रभारेण श्रोणिभारेण "कलत्रं श्रोणिभार्य्ययोः" इत्यमरः। तथा गलत् स्रंसमानं दुकूलं याभ्यां ताभ्यां स्तनाभ्यां शालते इति तथोक्तेन उरसा। तथा वलिव्यपायेन भङ्गिनिवृत्त्या स्फुटा रोमराजिः यस्मिन् तेन निरायतत्वात् अपसारितत्वात् ताम्यता तनूभवता उदरेण च उपलक्षितया स्वभावोक्तिरलङ्कारः ॥ १७ ॥

विलम्बमानेति। विलम्बमानः विस्रंसमानः आकुलः विलुलितश्च

तरुप्रसूनान्यपदिश्य सादरं
मनोऽधिनाथस्य मनः समाददे ॥ १८ ॥
॥ युग्मम् ॥

व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी ॥ १९ ॥

इमान्यमूनीत्यपवर्जिते शनै-
र्यथाभिरामं कुसुमाग्रपल्लवे ।
विहाय निःसारतयेव भूरुहान्
पदं वनश्रीर्वनितासु सन्दधे ॥ २० ॥

केशपाशः यस्याः तया आविष्कृतबाहुमूलया दर्शितकचप्रदेशया कयाचित् कान्तया तरुप्रसूनानि अपदिश्य प्रसूनग्रहणं व्याजीकृत्य इत्यर्थः। "व्याजोपदेशो लक्ष्यं च" इत्यमरः। सादरं साभिलाषं मनोऽधिनाथस्य प्रियस्य मनः समाददे आचकृषे। कर्मणि लिट्। सर्वाङ्गसौष्ठवदर्शनात् सद्योलग्नं प्रियमनः तत्र इति भावः। अत्र प्रियमनोहरणहेतुभिः कान्ताविशेषणपदार्थैः काव्यलिङ्गम् उत्तिष्ठमानं स्वभावोक्त्या सह अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १८ ॥

व्यपोहितुमिति। उन्नतौ च पीवरौ च स्तनौ यस्याः सा उन्नतपीवरस्तनी। "स्वाङ्गाच्च" इत्यादिना ङीष्। काचित् लोचनतः स्वनेत्रात् पुष्पजं रजः परागं मुखानिलैः फूत्कारमारुतैः व्यपोहितुम् अपनेतुं अपारयन्तं किल अशक्नुवन्तं किल इति अलीके। वस्तुतः तदास्यस्पर्शलोभात् अपारयन्तम् इत्यर्थः। प्रियम् उन्मनाः उत्सुका सती अतएव पयोधरेण उरसि जघान। तत्कपटपरिज्ञानजन्यात् औत्सुक्यादिति भावः। हननस्थानत्वात् उरसि इति सप्तमी। इयञ्च प्रगल्भा एव ॥ १९ ॥

इमानीति। यथाभिरामम्। वीप्सायाम् अव्ययीभावः। कुसुमानि अग्रपल्लवानि च कुसुमाग्रपल्लवं तस्मिन्। 'जातिः अप्राणिनाम्' इत्येकवद्भावात् नपुंसकत्वम्। इमानि अमूनि इति इत्थं निर्देशपूर्वकम् इत्यर्थः। इदमदसौ सन्निकृष्टविप्रकृष्टार्थौ। शनैः अपवर्जिते अपचिते सति वनश्रीः निःसारतया एव इति हेतूत्प्रेक्षा। भूरुहान् तरून् विहाय वनितासु पदं

प्रवालभङ्गारुणपाणिपल्लवः
परागपाण्डूकृतपीवरस्तनः ।
महीरुहः पुष्पसुगन्धिराददे
वपुर्गुणोच्छ्रायमिवाङ्गनाजनः ॥ २१ ॥

वरोरुभिर्वारणहस्तपीवरै-
श्चिराय खिन्नान् नवपल्लवश्रियः ।
समेऽपि यातुं चरणाननीश्वरा-
न्मदादिव प्रस्खलतः पदे पदे ॥ २२ ॥

विसारिकाञ्चीमणिरश्मिलब्धया
मनोहरोच्छ्रायनितम्बशोभया ।

सन्दधे । अत्र वनितागतायाः पुष्पप्रसाधनसम्भाव्यमानायाः लक्ष्म्याः विषय-भूतायाः निगरणेन विषयेण वनश्रियः वनितागतत्वोत्प्रेक्षया सम्बन्धे असम्बन्धरूपा भेदेऽभेदरूपा वा अतिशयोक्तिरलङ्कारः । "विषयस्यानुपादानात् विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता ॥" इति लक्षणात् उत्प्रेक्षाङ्गत्वमस्याः ॥ २० ॥

प्रवालेति । प्रवालभङ्गेन पल्लववलयेन अरुणः पाणिपल्लवः यस्य तद्भ्रम-रञ्जनात् इत्यर्थः । परागेण पुष्परजसा पाण्डूकृतौ पीवरौ स्तनौ यस्य सः पुष्पैः सुगन्धिः सुरभिः अङ्गनाजनः महीरुहः वृक्षजातात् वपुर्गुणस्य स्वदेह-गुणस्य उच्छ्रायः पाणिपल्लवारुण्यादेः यः उत्कर्षः तम् आददे लब्धवान् इव इति उत्प्रेक्षा । वस्तुतस्तु स्वाभाविक एव प्रवालभङ्गादिभिः अभिव्यज्यते इति भावः । "उत्कृष्टः श्राय उच्छ्राये" इति घञन्तेन प्रादिसमासः । न तु उपसृष्टात् घञ्प्रत्ययः, "श्रिणीभुवोऽनुपसर्गे" इति प्रतिषेधात् ॥ २१ ॥

पञ्चभिः कुलकम् आह—वरोरुभिरित्यादिभिः । अनुसानु सानुषु यत् वर्त्म ततः सकाशात् गुरुणा खेदेन मन्थरम् अलसं विनिर्यतीनां निर्गच्छ-न्तीनां सुराङ्गनानां सम्बन्धिभिः वारणहस्तपीवरैः करिकरस्थूलैः वराश्च ते ऊरवश्च इति तैः चिराय खिन्नान् । किञ्च नवपल्लवानां श्रीः इव श्रीः येषां तान् तद्वत् मृदून् इत्यर्थः । अतएव समे समस्थले अपि किं विषम इति भावः । यातुं गन्तुम् अनीश्वरान् अशक्तान् अतएव मदात् इव पदे पदे । वीप्सायां द्विर्भावः । प्रस्खलतः चरणान् । मदात् इव इति उपमा ॥ २२ ॥

स्थितानि जित्वा नवसैकतद्युतिं
श्रमातिरिक्तैर्जघनानि गौरवैः ॥ २३ ॥

समुच्छ्वसत्पङ्कजकोशकोमलै-
रुपाहितश्रोण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु
स्तनातिभारादुदराणि नम्रताम् ॥ २४ ॥

समानकान्तीनि तुषारभूषणैः
सरोरुहैरस्फुटपत्रपङ्क्तिभिः ।
चितानि घर्माम्बुकणैः समन्ततो
मुखान्यनुत्फुल्लविलोचनानि च ॥ २५ ॥

विसारीति ॥ विसारिभिः काञ्चीमणिरश्मिभिः लब्धया तज्जनितया इत्यर्थः, मनोहरः उच्छ्रायः उत्सेधः येषां तेषां नितम्बानां शोभया करणेन नवसैकतानां द्युतिं शोभां जित्वा स्थितानि तत्तुल्यानि इत्यर्थः । अतएव उपमालङ्कारः । श्रमेण अतिरिक्तैः अतिशयितैः गौरवैः गुरुत्वैः उपलक्षितानि नितरां भारायमाणानि इत्यर्थः । जघनानि च । उच्छ्रायः व्याख्यातः ॥ २३ ॥

समुच्छ्वसदिति । समुच्छ्वसत्पङ्कजकोशकोमलैः उल्लसत्कमलमुकुलैः इव मुग्धैः इति उपमा । नाभिभिः प्रतारिकाख्यैः । "अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका" इति केशवः । पुंलिङ्गतायां तु कविः एव प्रमाणम् । उपनीवि नीविसमीपे उपाहितश्रोणि जनितशोभानि तथा वलीविभङ्गिषु ऊर्मिमत्सु मध्येषु जघनस्थलेषु स्तनातिभारात् नम्रतां दधन्ति बिभ्राणानि । "वा नपुंसकस्य" इति विकल्पे नुमागमः । उदराणि च ॥ २४ ॥

समानेति । किञ्च घर्माम्बुकणैः स्वेदोदकबिन्दुभिः समन्ततः चितानि व्याप्तानि अनुत्फुल्लविलोचनानि अविकसदक्षीणि अतएव तुषारभूषणैः शीकरपरिवृतैः । "तुषारौ हिमशीकरौ" इत्यमरः । अस्फुटपत्रपङ्क्तिभिः अविकचदलावलिभिः । "व्याकोशविकचस्फुटाः" इत्यमरः । सरोरुहैः समानकान्तीनि । इति उपमा । मुखानि च ॥ २५ ॥

विनिर्य्यतीनां गुरुखेदमन्थरं
सुराङ्गनानामनुसानु वर्त्म नः।
सविस्मयं रूपयतो नभश्चरान्
विवेश तत्पूर्वमिवेक्षणादरः॥ २६॥

॥ कुलकम् ॥

अथ स्फुरन्मीनविधूतपङ्कजा
विपङ्कतीरस्खलितोर्म्मिसंहतिः।
पयोऽवगाढं कलहंसनादिनी
समाजुहावेव वधूः सुरापगा॥ २७॥

प्रशान्तघर्माभिभवः शनैर्विवान्
विलासिनीभ्यः परिमृष्टपङ्कजः।
ददौ भुजालम्बमिवात्तशीकर-
स्तरङ्गमालान्तरगोचरोऽनिलः॥ २८॥

विनिर्य्यतीनामिति। सविस्मयं रूपयतः पूर्वोक्तचरणादीनि वर्णयतः नभश्चरान् गन्धर्वान् तत् पूर्वम् इव तत् तत्र प्रथमं यथा इति उत्प्रेक्षा। ईक्षणादरः आलोकनकौतुकं विवेश। पूर्वार्द्धं व्याख्यातम्। अत्र कुलके स्वभावोक्तिः उत्प्रेक्षाङ्गम्॥ २६॥

सम्प्रति सलिलक्रीड़ावर्णनम् आरभते—अथेति। अथ पुष्पावचयानन्तरं स्फुरद्भिः चलद्भिः मीनैः विधूतपङ्कजा इति सद्दशत्वात् मुखवीक्षणोक्तिः। विपङ्कं पङ्करहितं विहारयोग्यम् इति यावत्। तत्र तीरे स्खलिता विचलिता ऊर्मिसंहतिः यस्याः सा इति हस्तसंज्ञोक्तिः। कलहंसनादिनी कादम्बशब्दवती इति वाग्व्यापारोक्तिः। अतएव सुरापगा गङ्गा वधूः अप्सरसः पयः अवगाढम् अवगाहितुम्। गाहेः उदित्त्वात् इड्विकल्पः। समाजुहाव इव आकारयामास इव इति उत्प्रेक्षा। "हूतिराकारणाह्वानम्" इत्यमरः। ह्वयतेर्लिट्। "अभ्यस्तस्य च" इति सम्प्रसारणम्॥ २७॥

प्रशान्तेति। प्रशान्तघर्माभिभवः प्रशान्तोष्णबाधः। "वा दान्तशान्त" इत्यादिना निपातनात् साधुः। शनैः विवान् मन्दं वहन्। वातेः शतृ-

गतैः सहावैः कलहंसविक्रमं
कलत्रभारैः पुलिनं नितम्बिभिः ।
मुखैः सरोजानि च दीर्घलोचनैः
सुरस्त्रियः साम्यगुणान्निरासिरे ॥ २९ ॥

विभिन्नपर्य्यन्तगमीनपङ्क्तयः
पुरो विगाढ़ाः सखिभिर्मरुत्वतः ।
कथञ्चिदापः सुरसुन्दरीजनैः
सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ३० ॥

विगाढ़मात्रे रमणीभिरम्भसि
प्रयत्नसंवाहितपीवरोरुभिः ।

प्रत्ययः । परिमृष्टपङ्कजः । पद्मगन्धी इत्यर्थः । आत्तशीकरः । कुतः ? तरङ्ग-मालानाम् अन्तरे मध्ये गोचरः स्थानं यस्य सः अनिलः विलासिनीभ्यः भुजावलम्बनं ददौ इव इति उत्प्रेक्षा । विशिष्टवायुसम्पर्कात् तथा उच्छ्‌वसुः इत्यर्थः ॥ २८ ॥

गतैरिति । सुरस्त्रियः अप्सरसः सहावैः सविलासैः गतैः गतिभिः । नपुंसके भावे क्तः । कलहंसानां विक्रमं गतिं विलासविधुरम् इति शेषः । तथा नितम्बिभिः प्रशस्तनितम्बैः कलत्रभारैः जघनभारैः पुलिनं नितम्ब-भारशून्यम् इत्यर्थः, तथा दीर्घलोचनैः मुखैः सरोजानि च अलोचनानि इति शेषः । साम्यगुणात् समानगुणत्वात् निरासिरे निरस्तवत्यः । गुणवद-गुणयोः कुतः साम्यम् इति भावः । अस्यतेः कर्त्तरि लिट् । “उपसर्गादस्य-त्यूह्योर्वा” इति विकल्पात् आत्मनेपदम् ॥ २९ ॥

विभिन्न इति । विभिन्नाः विच्युतसङ्घाताः पर्य्यन्तगाः प्रान्तगताः मीनानां पङ्क्तयः यासां ताः । कुतः ? मरुत्वतः सखिभिः इन्द्रस्य सचिवैः गन्धर्वैः पुरः पूर्व्वं विगाढ़ाः प्रविष्टाः तासां विश्वासार्थं गर्त्तग्राहादिपरीक्षार्थं च इति भावः । सभीतिभिः अप्रविष्टविषयत्वात् सभयैः । ‘विषादिभिः’ इति पाठे अपि अयम् एव अर्थो लक्ष्यः । सुरसुन्दरीजनैः तदेव अवगाहनं प्रथमं यथा तथा अतएव कथञ्चित् भयात् कृच्छ्रेण आपः प्रपेदिरे जगाहिरे ॥ ३० ॥

विभिद्यमाना विससार सारसान्
उदस्य तीरेषु तरङ्गसंहतिः ॥ ३१ ॥

शिलाघनैर्नाकसदामुरःस्थलै-
र्बृहन्निवेशैश्च वधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना
रुषेव भेजे कलुषत्वमम्भसा ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः
सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद्विहितागसो मुहुः
प्रकम्पमीयुः सभया इवोर्मयः ॥ ३३ ॥

विगाढेति । प्रयत्नेन संवाह्निताः संचारिताः पीवराः स्थूलाः ऊरवः याभिः ताभिः रमणीभिः अम्भसि विगाढमात्रे प्रविष्टे एव सति । सुप्सुपा इति समासः । "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । विभिद्यमाना स्वयं विशीर्य्यमाणा । कर्म्मकर्त्तरि शानच् । तरङ्गसंहतिः तीरेषु सारसान् पक्षिविशेषान् । "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः । यद्वा सारसान् हंसान् । "चक्राङ्गः सारसो हंसः" इति शब्दार्णवे । उदस्य उत्सार्य्य विससार विसस्तार ॥ ३१ ॥

शिलेति । शिलावद्घनैः कठिनैः नाकसदां गन्धर्वाणाम् उरःस्थलैः बृहन्निवेशैः महासंस्थानैः अतिस्थूलैः इत्यर्थः । वधूपयोधरैश्च तटम् अभितः नीतेन प्रापितेन अतएव विभिन्नवीचिना भग्नोर्म्मिणा अम्भसा कर्त्रा रुषा इव । इति हेतूत्प्रेक्षा । कलुषत्वम् आविलत्वम् अन्तःक्षोभश्च ध्वन्यते भेजे । कर्म्मणि लिट् । यथा कश्चित् मृदुस्वभावः केनचित् कठिनादिना साङ्गभङ्गं ताड़यित्वा निष्कासितः क्षुभ्यति तद्वदिति भावः कलुषत्वम् इत्यत्र वाच्यप्रतीयमानयोरभेदाध्यवसायः । अन्यथा शुद्धवाच्यस्य आविलत्वस्य रोषहेतुकत्वात् उत्प्रेक्षानुत्थानादिति ॥ ३२ ॥

विधूतेति । विधूताः विक्षिप्ताः केशाः यैः ते परिलोलिताः विलोलिताः स्रजः यैः ते प्रविलुप्तचन्दनाः प्रमृष्टाङ्गरागाः अतिप्रसङ्गात् अविच्छेदात् सुराङ्गनानां विहितागसः कृतमण्डनखण्डनरूपापराधाः अतएव ऊर्मयः

विपक्षचित्तोन्मथना नखव्रणा-
स्तिरोहिता विभ्रममण्डनेन ये ।
हृतस्य शेषानिव कुङ्कुमस्य तान्
विकत्थनीयान् दधुरन्यथा स्त्रियः ।। ३४ ।।

सरोजपत्रे नु विलीनषट्पदे
विलोलदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्वित् नतपक्ष्मसन्तते-
र्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥ ३५ ॥

अगूढहासस्फुटदन्तकेसरं
मुखं स्विदेतद् विकसत् नु पङ्कजम् ।

तरङ्गाः । सभया इव स्त्रीभ्यः भीता इव मुहुः प्रकम्पम् ईयुः । स्वाभाविकस्य कम्पस्य भयहेतुकत्वम् उत्प्रेक्ष्यते । यद्वा सुराङ्गनानां विधूतकेशा इत्यादियोजना । सापेक्षत्वेऽपि गमकत्वात् समासः । स्त्रीसङ्ग्रहण-साहसम् अपराधः भयं तु राजादिभ्य इति ॥ ३३ ॥

विपक्षेति । विपक्षस्य सपत्नीजनस्य चित्तानाम् उन्मथनाः व्यथकाः इत्यर्थः । बहुलग्रहणात् कर्त्तरि ल्युट् । ये नखव्रणाः नखक्षतानि । "व्रणोऽस्त्रियाम्" इत्यमरः । विभ्रमस्य सौन्दर्य्यस्य मण्डनम् । तादर्थ्ये अपि अश्वघासादिवत् षष्ठीसमासः, न तु चतुर्थीसमासः, यूपदार्वादिवत् प्रकृतिविकाराभावादिति । तेन कुङ्कुमलेपादिना तिरोहिताः छन्नाः हृतस्य क्षालितस्य कुङ्कुमस्य व्यञ्जकत्वेन शेषान् इव अवशिष्टलेशान् इव स्थितान् इति उत्प्रेक्षा । विकत्थनीयान् भर्त्तृवाल्लभ्यस्य व्यञ्जकत्वेन श्लाघनीयान् तान् नखव्रणान् स्त्रियः अन्यथा दधुः इत्यर्थः ॥ ३४ ॥

अथ युग्मेन आह—सरोजेत्यादिना । अमू पुरोवर्त्तिनी विलीनषट्पदे संसक्तभृङ्गे सकनीनिकत्वम् अक्ष्णोः अर्थसिद्धम् इति उपमानं विशिष्यते । सरोजपत्रे नु । यद्वा विलोलदृष्टेः चञ्चलाक्ष्या विलोचने स्वित् । नुस्विच्छब्दौ वितर्के । किञ्च नतपक्ष्मसन्ततेः चञ्चलाक्ष्याः शिरोरुहाः स्वित् निशब्दं नीरवं च तत् निश्चलं च तत् द्विरेफवृन्दं नु ॥ ३५॥

अगूढेति । किञ्च अगूढहासं व्यक्तस्मितं तेन स्फुटाः दन्ताः केसराः

इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुः सुचिरेण योषितः ॥ ३६ ॥
॥ युग्मम् ॥

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ३७ ॥

असंशयं न्यस्तमुपान्तरक्ततां
यदेव रोद्धुं रमणीभिरञ्जनम् ।
हृतेऽपि तस्मिन् सलिलेन शुक्लतां
निरास रागो नयनेषु न प्रियम् ॥ ३८ ॥

इव दन्तकेसराः यस्य तत् मुखं स्वित् ? यद्वा विकसत्पङ्कजं नु ! इति इत्थम् संशयेन इति शेषः । नलिनीवने प्रलीनां निगूढ़ां सखीं योषितः सुचिरेण अतिविलम्बात् विदाम्बभूवुः विविदुः निश्चिक्युः इत्यर्थः । "उषविदजागृभ्यो-ऽन्यतरस्याम्" इति विकल्पात् आम्प्रत्ययः । अत्र युग्मे निश्चयान्त-सन्देहालङ्कारः ॥ ३६ ॥

प्रियेणेति । काचित् प्रियेण सङ्ग्रथ्य स्वयम् एव रचयित्वा विपक्षसन्निधौ सपत्नीजनसमक्षं पीवरस्तने वक्षसि उपाहितां स्रजं मालां जलाविलाम् मृदिताम् अपि इत्यर्थः । तां न विजहौ न तत्याज । न च निर्गुणायां तत्र का प्रीतिः ? इति वाच्यम् इति अर्थान्तरन्यासेन आह । गुणाः प्रेम्णि वसन्ति वस्तुनि न वसन्ति हि । यत् प्रेमास्पदं तत् एव गुणवत् अन्यत् तु गुणवत् अपि निर्गुणम् एव । प्रेम तु न वस्तुपरीक्षाम् अपेक्षते इति भावः ॥ ३७ ॥

असंशयमिति । स्त्रीणां नेत्रशोभार्थम् अञ्जनधारणम् अम्बुविहारोपगमात् रक्तवर्णत्वं च अक्ष्णां ततः शुक्लत्वतिरोधानं च निश्चितम् इति उत्प्रेक्ष्यते । रमणीभिः यत् अञ्जनं न्यस्तं तत् इति शेषः । यत्तदोर्नित्यसम्बन्धात् । तत् अञ्जनम् उपान्तयोः रक्ततां रोद्धुं प्रतिबन्धुम् एव न्यस्तं न तु शोभार्थम् इत्यर्थः । अन्यथा रागाभिव्याप्त्या शुक्लत्वतिरोधानं स्यादित्यर्थः ; असं-

द्युतिं वहन्तो वनितावतंसका
हृता: प्रलोभादिव वेगिभिर्जलैः।
उपप्लुतास्तत्क्षणशोचनीयतां
च्युताधिकाराः सचिवा इवाययुः ॥३९॥

विपत्त्रलेखा निरलक्तकाधराः
निरञ्जनाक्षीरपि बिभ्रतीः श्रियम्।
निरीक्ष्य रामा बुबुधे नभश्चरै-
रलङ्कृतं तद्वपुषैव मण्डनम् ॥४०॥

शयम् इति उत्प्रेक्षाव्यञ्जकं संशयस्यापि अभाव: न अत्र संशय: अस्ति इत्यर्थ:। अर्थाभावे अव्ययीभाव:। कुत: एतत् इति चेत्? यत: तस्मिन् अञ्जने सलिलेन हृते क्षालिते सति अपि राग: पूर्व्वोक्त एव उपान्तरक्तता किन्तु प्रतिबन्धाभावात् अभित: व्याप्य इति आशय:। नयनेषु शुक्लतां निरास निरस्तवान्। अस्यते: लिट्। श्रियं शोभां तु न निरास अत: शुक्लत्वविरोधिरागनिरोधार्थम् एव इदम् अञ्जनं स्यात् न तु शोभार्थं तस्या: तदभावे अपि सद्भावात् इत्यर्थ:। अञ्जनापगमे अपि तन्नयनानां राग एव अलङ्कार: अभूत् इति भाव:। अत्र अञ्जनन्यासम् अन्यत् तस्य शोभार्थत्व-निषेधेन रागरोधार्थत्वोत्प्रेक्षणमुदितम्। उत्तरार्द्धे तस्य एव समर्थनात्। एवमुपान्तरक्ततां रोद्धुं यत् अञ्जनं न्यस्तम् इति एकान्वये विध्यनुवाद-विरोध: स्यात् ॥ ३८ ॥

द्युतिमिति। द्युतिं शोभां तेजश्च वहन्त: वेगिभि: जविभि: जलै: जडै: अज्ञैश्च डलयोरभेदात्। "जलं गोकवले नीरे ह्रीवेरे च जडेऽन्यवत्" इति विश्व:। प्रलोभात् मोहात्। हृता: गृहीता: उपप्लुता: मृदिता:। यद्वा कर्त्तरि क्त:। प्लवमाना इत्यर्थ:। अन्यत्र धनग्रहणबन्धनादिना पीड़िता: वनितावतंसका: च्युताधिकारा: भ्रष्टाधिकारा: सचिवा इव तत्क्षणं शोचनीयताम् आययु: प्रापु: ॥ ३९ ॥

विपत्रेति। विगता: पत्त्रलेखा: तिलकविशेषा: यासां ता: विपत्त्रलेखा: निरलक्तका: क्षालितरागा: अधरा: यासां ता:। निरञ्जनानि अक्षीणि यासां ता: निरञ्जनाक्षी: अपि। बहुव्रीहौ सक्थ्यक्ष्णो: स्वाङ्गात् षच् "षिद्गौरादि-भ्यश्च" इति ङीप। तथापि श्रियं बिभ्रती: शोभाकारणाभावे अपि

तथा न पूर्व्वं कृतभूषणादरः
प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया
ददाह दृष्टीश्च विपक्षयोषिताम् ॥४१॥

शुभाननाः साम्बुरुहेषु भीरवो
विलोलहाराश्चलफेनपङ्क्तिषु ।
नितान्तगौर्य्यो हृतकुङ्कुमेष्वलं
न लेभिरे ताः परभागमूर्मिषु ॥४२॥

शोभमाना इति। विभावनालङ्कारः। रामाः निरीक्ष्य नभश्चरैः गन्धर्वैः तासां वपुषा एव मण्डनम् अलङ्कृतं न तु मण्डनेन तद्वपुः इति अक्षरार्थः। इति बुबुधे ज्ञातम्। कर्मणि लिट्। स्वभावरमणीयानां किम् अलङ्करणैः? इति भावः॥ ४०॥

तथेति। विलासिनीजनः पूर्व्वं जलविहारात् प्राक् प्रियानुरागेण कृतः भूषणेषु आदरः आसक्तिः येन सः अनुरक्तप्रियत्वात् सम्यक् प्रसाधितः सन् अपि इत्यर्थः। प्रियस्य अनुरागेण च विपक्षयोषितां सपत्नीनां दृष्टीः चक्षूंषि तथा न ददाह न दुःखीचकार। यथा जलार्द्रः सन् नखशब्देन नखक्षतानि लक्ष्यन्ते तानि एव मण्डनं तस्य श्रिया तत्कृतशोभया इत्यर्थः। विपक्षयोषितां सपत्नीनां दृष्टीः चक्षूंषि यथा ददाह तापयामास। मण्डनान्तरात् अपि नखमण्डनानुरागात् अपि च तदनुभाव एव सपत्नीनां दुःखहेतुरिति भावः। जलार्द्रः ददाह इति विरुद्धकार्य्योत्पत्तिरूपः विषमालङ्कारः। "विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरूपघटना वा स्याद् विषमालङ्कृतिस्त्रिधा" इति लक्षणात्॥ ४१॥

शुभेति। शुभाननाः विलोलहाराः नितान्तगौर्य्यः अरुणाङ्गाः "गौरोऽरुणे सिते पीते" इति वैजयन्ती। भीरवः ताः स्त्रियः साम्बुरुहेषु चलाः फेनपङ्क्तयः येषु तेषु हृतानि कुङ्कुमानि यैः तेषु कुङ्कुमसङ्क्रमारुणेषु इत्यर्थः। ऊर्मिषु विषयेषु अलम् अत्यर्थं परभागं गुणोत्कर्षं लेभिरे। 'परभागो गुणोत्कर्षः' इति यादवः। तासाम् ऊर्मीणां च अरुणत्वादिगुणसाम्यात् न कश्चित् विशेषः लक्ष्यते इत्यर्थः। अतएव सामान्यालङ्कारः। "सामान्यं गुणसाम्येन तत्र वस्त्वन्तरैकता" इति लक्षणात्। शुभाननत्वसाम्बुरुहत्वादुभय-

क्रूदाम्भसि व्यस्तवधूकराहते
रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहु: स्तनैस्तालसमं समाददे
मनोरमं नृत्यमिव प्रवेपितम् ॥४३॥

श्रिया हसद्भि: कमलानि सस्मितै-
रलङ्कृताम्बु: प्रतिमागतैर्मुखै: ।
कृतानुकूल्या सुरराजयोषितां
प्रसादसाफल्यमवाप जाह्नवी ॥४४॥

विशेषणानां क्रमेण उभयस्मिन् समन्वयात् यथासंख्यालङ्कारश्च । "यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयात्" इति काव्यप्रकाशे लक्षणात् । अनयो: अङ्गाङ्गिभावेन सङ्कर: ॥ ४२ ॥

क्रूडेति । व्यस्ताभ्यां विपर्य्यासिताभ्यां वधूकराभ्याम् आहते एकेन करेण उत्साय्य अन्येन ताड़िते इत्यर्थ: । क्रूदाम्भसि मृदङ्गध्वनिवत् धीरं गम्भीरं रवम् उज्झति सति तथा ध्वनति सति इत्यर्थ: । मुहु: स्तनै: ताल: गीतवाद्यनृत्यानां कालपरिच्छेद: । "ताल: कालक्रियामानम्" इत्यमर: । तस्य समम् अनुरूपं मनोरमं नृत्यम् इव प्रवेपितं प्रकम्पितम् । भावे क्त: । समाददे स्वीकृतम् । उपमालङ्कार: ॥ ४३ ॥

श्रियेति । श्रिया शोभया कमलानि हसद्भि: कमलसदृशै: इत्यर्थ: । "हसतीर्ष्यत्यसूयति" इति दण्डिना सदृशपर्य्यायपरा उक्ता: । सस्मितै: प्रतिमागतै: प्रतिबिम्बगतै: इत्यर्थ: । "प्रतिमानं प्रतिबिम्बं प्रतिमा" इत्यमर: । मुखै: अलङ्कृतानि अम्बूनि यस्या: सा । किञ्च सुरराजयोषितां कृतम् आनुकूल्यं विहाराद्युपकार: यया सा इत्थं योषिद्भि: उपकृता स्वयं च तासाम् उपचिकीर्षु: जाह्नवी गङ्गा प्रसादस्य स्वच्छत्वस्य साफल्यम् । अर्थ-गौरववत् षष्ठीसमासनिर्वाह: । अवाप अप्रसन्नाम्भसि विहारबिम्बग्रहणयो-रसम्भवात् इत्यर्थ: । स्वच्छा एव हि परै: उपक्रियन्ते स्वयं च उपकुर्वते तेषाम् इति भाव: । "कृतानुकारा" इति पाठे अनुकार: अनुकूलकरणम् उपकार: इत्येवं व्याख्येयम् । अत्र जाह्नवीविशेषणपदार्थस्य साफल्यं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कार: ॥ ४४ ॥

परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥४५॥

भयादिवाश्लिष्य झषाहतेऽम्भसि
प्रियं मुदानन्दयति स्म मानिनी।
अकृत्रिमप्रेमरसाहितैर्मनो
हरन्ति रामाः कृतकैरपीहितैः ॥४६॥

तिरोहितान्तानि नितान्तमाकुलै-
रपां विगाहादलकैः प्रसारिभिः।
ययुर्वधूनां वदनानि तुल्यतां
द्विरेफवृन्दान्तरितैः सरोरुहैः ॥४७॥

परीति। परितः स्फुरद्भिः विवर्त्तमानैः मीनैः विघट्टिताः ऊरवः यासां ता अतएव त्रासविलोलदृष्टयः भयविक्रमनेत्राः कम्पितपाणिपल्लवाश्च सुराङ्गनाः सखीजनस्य अपि विलोकनीयताम् उपाययुः। किमुत प्रियजनस्य इति भावः। स्वभावोक्तिरलङ्कारः॥ ४५॥

भयादिति। मानिनी दुर्लभस्वयंग्रहणा इति भावः। अम्भसि जले झषेण मत्स्येन आहते सति। "पृथुरोमा झषो मत्स्यः" इत्यमरः। भयात् इव वस्तुतस्तु न तथा इति भावः। किन्तु मुदा औत्सुक्येन एव आश्लिष्य प्रियम् आनन्दयति स्म। तथाहि—रामाः स्त्रियः अकृत्रिमः अनारोपितः यः प्रेम एव रसः तेन आहितैः जनितैः कृतकैः कृत्रिमैः अपि इत्यर्थः। ईहितैः चेष्टितैः मनः हरन्ति। आरोपितम् अपि भयं प्रेममूलत्वात् मनोहरं बभूव इत्यर्थः। अत्र अल्पानुभावेन भयेन सहजरागनिगूहनात् मीलनालङ्कारः। "मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्" इति लक्षणान्तरसम्भवात् अर्थान्तरन्यासेन संसृज्यते॥ ४६॥

तिरोहितेति। अपां विगाहात् नितान्तम् आकुलैः विकीर्णैः प्रसारिभिः आयतैः अलकैः केशैः तिरोहितान्तानि छन्नप्रान्तानि वधूनां वदनानि द्विरेफ-

करौ धुनाना नवपल्लवाकृती
पयस्यगाधे किल जातसम्भ्रमा।
सखीषु निर्वाच्यमधार्ष्ट्यदूषितं
प्रियाङ्गसंश्लेषमवाप मानिनी॥ ४८॥

प्रियैः सलीलं करवारिवारितः
प्रवृद्धनिःश्वासविकम्पितस्तनः।
सविभ्रमाधूतकराग्रपल्लवो
यथार्थतामाप विलासिनीजनः॥ ४९॥

वृन्दैः अन्तरितानि छन्नानि सरोरुहाणि तैः सरोरुहैः तुल्यतां ययुः इति उपमालङ्कारः॥ ४७॥

कराविति। मानिनी पयसि अगाधे सति किल इति अलीके, मज्जनभयात् इव इत्यर्थः। जातसम्भ्रमा उत्पन्नभया अतएव नवपल्लवाकृती करौ धुनाना कम्पयन्ती। धुनोतेः क्र्यादिकात् कर्त्तरि लटः शानच्। सखीषु विषये निर्वाच्यम् अवाच्यम् अनिन्द्यम् इत्यर्थः। धार्ष्ट्यदूषितम् न भवति इति अधार्ष्ट्यदूषितः तं वस्तुतः रागमूलम् अपि भयमूलत्वारोपात् इति भावः। प्रियाङ्गसंश्लेषम् अवाप। अत्रापि तुल्याङ्केन भयेन आगन्तुकेन सहजानुरागनिगूहनात् मीलनालङ्कारः। तदुक्तं काव्यप्रकाशे—"समानलक्षणं वस्तु वस्तुना यन्निगूह्यते। निजेनागन्तुना वापि तन्मीलनमुदाहृतम्"॥ ४८॥

प्रियैरिति। प्रियैः कामिभिः सलीलं करवारिभिः अञ्जलिजलैः वारितः अवरुद्धः सिक्त इत्यर्थः। प्रवृद्धैः सन्ततैः निश्वासैः विकम्पितौ कम्पितौ स्तनौ यस्य सः। सविभ्रमं सविलासम् आधूतानि कराग्रपल्लवानि पाणिपल्लवानि येन सः। विलसनशीला विलासिनी। "वौ कषलसकत्थस्रम्भः" इति घिनुण्प्रत्ययः। सा एव जनः। जातौ एकवचनम्। यथार्थताम् आप उक्तरीत्या अनेकविलासवत्तया यथार्थनामकत्वम् अवाप इत्यर्थः। क्वचित् गम्यमानार्थस्य नाम्नः न प्रयोगः, यथा माघे—"चिराय याथार्थ्यमलम्भि दिग्गजैः" इति। क्वचित् प्रयुज्यते च, यथा रघुवंशे—"परन्तपो नाम यथार्थनामा" इति। नैषधेऽपि—"स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः" इति। स्वभावोक्तिरलङ्कारः॥ ४९॥

उदस्य धैर्य्यं दयितेन सादरं
प्रसादितायाः करवारिवारितम् ।
मुखं निमीलन्नयनं नतभ्रुवः
श्रियं सपत्नीवदनादिवाददे ॥ ५०

विहस्य पाणौ विधृते धृताम्भसि
प्रियेण वध्वा मदनार्द्रचेतसः ।
सखीव काञ्ची पयसा घनीकृता
बभार वीतोच्चयबन्धमंशुकम् ॥ ५१ ॥

निरञ्जने साचिविलोकितं दृशा-
वयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयति स्म विग्रहे
बलिक्रिया चातिलकं तदास्पदम् ॥ ५२ ॥

उदस्येति । दयितेन धैर्य्यं काठिन्यम् उदस्य अपनीय अनुनीय इत्यर्थः सादरं यथा तथा प्रसादितायाः सौमनस्यं गमितायाः नतभ्रुवः स्त्रियाः सम्बन्धि करवारिभिः वारितम् अवरुद्धम् अतएव निमीलती नयने यस्य तन्मुखं सपत्नीवदनात् इव श्रियम् आददे जग्राह । तदानीं तद्वदनस्य निःश्रीकत्वात् तदीयश्रीग्रहणम् उत्प्रेक्ष्यते ॥ ५० ॥

विहस्येति । धृताम्भसि प्रियसेचनार्थं गृहीतजले पाणौ अञ्जलौ इत्यर्थः । प्रियेण विहस्य विधृते अवलम्बिते सति अतएव मदनार्द्रचेतसः मदनपरवशायाः इत्यर्थः । वध्वाः सम्बन्धि वीतोच्चयबन्धं मुक्तनीविग्रन्थि स्रंसमानम् इत्यर्थः । अंशुकं पयसा घनीकृता काञ्ची सखी इव बभार जग्राह । स्त्रीणां किल स्त्रीषु एव आयत्तं लज्जारक्षणम् इति भावः ॥ ५१ ॥

निरञ्जने इति । नतभ्रुवः अङ्गनायाः विग्रहे वपुषि निरञ्जने निर्धौतकज्जले दृशौ विलोचने कर्म साचिविलोकितं तिर्य्यक् ईक्षणं कर्त्तृ मण्डयति स्म । "तिर्य्यगर्थे साचि तिरः" इत्यमरः । अयावकं क्षालितलाक्षारागम् ओष्ठपल्लवं वेपथुः कम्पः मण्डयति स्म । "ट्वितोऽथुच्" इति अथुच् प्रत्ययः । अतिलकं तिलकरहितं तदास्पदतिलकस्थानं ललाटम् । "आस्पदं प्रति-

निमीलदाकेकरलोलचक्षुषां
प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः
श्रमो नु तासां मदनो नु पप्रथे ॥ ५३ ॥

प्रियेण सिक्ता चरमं विपक्षत-
श्चुकोप काचित् न तुतोष सान्त्वनैः ।
जनस्य रूढप्रणयस्य चेतसः
किमप्यमर्षोऽनुनये भृशायते ॥ ५४ ॥

इत्थं विहृत्य वनिताभिरुदस्यमानं
पीनस्तनोरुजघनस्थलशालिनीभिः ।

ञायाम्" इति निपातः। वलिक्रिया रेखाबन्धश्च मण्डयति स्म। तदा निरलङ्कारस्य अङ्गनाशरीरस्य तच्छरीरविकारैः एव अलङ्कारः समजनि इत्यर्थः ॥ ५२ ॥

निमीलदिति। प्रियोपकण्ठं प्रियसमीपे। अत्यन्तसंयोगे द्वितीया। निमज्जतीनां विगाहमानानाम् अतएव निमीलन्ति निमिषन्ति आकेकराणि आकेकरवन्ति लोलानि चक्षूंषि यासां तासाम्। आकेकरलक्षणं तु नृत्य-विलासे—"दृष्टिराकेकरा किञ्चित् स्फुटापाङ्गे प्रसारिता। मीलितार्द्ध-पुटा लोके ताराव्यावर्त्तनोत्तरा" इति। तासां स्त्रीणां कृतः गात्राणां वेपथुः कम्पः येन सः श्वसितैः निःश्वासैः उद्धतौ उत्पतितौ स्तनौ येन स श्रमः खेदः नु मदनः नु पप्रथे प्रादुर्बभूव ? निमज्जनप्रियसन्निधानरूपोभयकारण-सम्भवात् नेत्रनिमीलनगात्रकम्पनिःश्वासधारणाच्च सन्देहः, स एव अलङ्कारः ॥ ५३ ॥

प्रियेणेति। काचित् प्रियेण विपक्षतः सपत्नीतः चरमं पश्चात् सिक्ता सती चुकोप। "पृष्ठन्तु चरमं तनोः" इत्यमरः। सान्त्वनैः अनुनयैः न तुतोष। तथाहि—रूढप्रणयस्य गाढप्रेम्णः जनस्य सम्बन्धी चेतसः मनसः अमर्षः प्रकोपः किम् अपि कुतः अपि हेतोः अनुनये सति भृशायते गाढो भवति। "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति क्यङ्। अन्यत्र शान्तिहेतुः अनु-नयः अत्र प्रकोपाय एव भवति, तत्र कारणं तु न ज्ञायते इत्यर्थः ॥ ५४ ॥

उत्सर्पितोर्मिचयलङ्घिततीरदेश-
मौत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ॥ ५५ ॥

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः ।
संरेजिरे सुरसरिज्जलधौतहारा-
स्तारावितानतरला इव यामवत्यः ॥ ५६ ॥

संक्रान्तचन्दनरसाहितवर्णभेदं
विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्मि नाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥५७॥

इति श्रीमहामहोपाध्यायभारविकृतौ किरातार्ज्जुनीये
महाकाव्ये सुराङ्गनाविहारो नामाष्टमः सर्गः ॥८॥

इत्थमिति । पीनैः स्तनैः ऊरुभिः जघनस्थलैश्च शालन्ते इति तथोक्ताभिः इति सलिलनोदनसामर्थ्योक्तिः । स्थलस्य साक्षात् अप्राण्यङ्गत्वात् न द्वन्द्वैकवद्भावः । वनिताभिः इत्थं विहृत्य उदस्यमानं नुद्यमानम् उत्सर्पितैः उपरिभावं प्रापितैः ऊर्मिचयैः लङ्घितः तीरदेशः येन तत् वारि । औत्सुक्यं विहारासहिष्णुत्वं तेन नुन्नं प्रेरितम् इव इति उत्प्रेक्षा । "नुदविद" इत्यादिना निष्ठानत्वम् । पुरः अग्रे प्रतस्थे स्वजनवत् इति भावः ॥ ५५ ॥

तीरान्तराणीति । रथाङ्गनाम्नां मिथुनानि चक्रवाकद्वन्द्वानि अन्यानि तीराणि तीरान्तराणि नीत्वा नियोज्य इत्यर्थः । अविहितलक्षणः तत्पुरुषः मयूरव्यंसकादिषु द्रष्टव्यः । विलोलिताः विलुलिताः सरोजवनश्रियः याभिः ताः सुरसरिज्जलैः धौतहाराः क्षालितमुक्तावलयः ताः स्त्रियः तारावितानैः उडुगणैः तरलाः भासुराः । "तरलो भासुरे हारे चञ्चलेऽपि" इति वैजयन्ती । यामवत्यः रात्रय इव संरेजिरे शुशुभिरे ॥ ५६ ॥

संक्रान्तेति । संक्रान्तैः चन्दनरसैः मलयजद्रवैः आहितः वर्णभेदः रूपान्तरं यस्य तत् । विच्छिन्नानि त्रुटितानि यानि विभूषणानि तेषां ये

## नवमः सर्गः ।

—·(*)·—

वीक्ष्य रन्तुमनसः सुरनारी-
रात्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्तं
भानुमानुपपयोधि ललम्बे ॥ १ ॥
मध्यमोपलनिभे लसदंशा-
वेकतश्च्युतिमुपेयुषि भानौ

मणिप्रकराः मणिगणाः तेषाम् अंशुभिः चित्रं नानावर्णम् । बद्धोर्मितरलं तरङ्गितं नाकवनिताभिः परिभुक्तमुक्तं पूर्वं परिभुक्तं पश्चात् मुक्तम् । "पूर्वकाल" इत्यादिना तत्पुरुषः । सिन्धोः गङ्गायाः सलिलम् । शेरते अत्र इति शयनीयं तल्पम् । बहुलग्रहणात् साधु । तस्य लक्ष्मीं बभार । अतएव निदर्शनालङ्कारः । लक्षणं तु उक्तम् ॥ ५७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायाम्
अष्टमः सर्गः ॥ ८ ॥

---

वीक्ष्येति । अथ जलक्रीडानन्तरं भानुमान् अंशुमान् सूर्यः आत्तचित्रपरिधानविभूषाः स्वीकृतविविधवस्त्राभरणाः सुरतसन्नाहं वहतीः इत्यर्थः । अत एव रन्तुमनसः । "समानकर्तृकेषु तुमुन्" । "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति मकारलोपः । सुरनारीः वीक्ष्य । तासां प्रियार्थं तत्प्रियार्थम् इव अवसरदानरूपं प्रियं कर्तुम् इव इत्यर्थः । फलोत्प्रेक्षा इयम् । अस्तम् अदर्शनम् मकारान्तम् अव्ययम् एतत् । यातुं प्राप्तुम् उपपयोधि पयोधिसमीपे ललम्बे सस्रंसे । अस्मिन् सर्गे स्वागतावृत्तम् । "स्वागतेति रनभाद् गुरुयुग्मम्" इति लक्षणात् ॥ १ ॥

द्यौरुवाह परिवृत्तिविलोलां
हारयष्टिमिव वासरलक्ष्मीम् ॥ २ ॥

अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा ।
क्षीबतामिव गतः क्षितिमेष्यन्
लोहितं वपुरुवाह पतङ्गः ॥ ३ ॥

गम्यतामुपगते नयनानां
लोहितायति सहस्रमरीचौ ।
आससाद विरहय्य धरित्रीं
चक्रवाकहृदयान्यभितापः ॥ ४ ॥

मध्येति। मध्यमोपलनिभे नायकमणिसदृशे। "निभसङ्काशनीकाशप्रतिरूपोपमादयः" इत्यमरः। "शर्करायां दृषत्पुत्रे [ स्त्रियां प्रोक्ताः] पुंस्य-श्मन्युपलो मणौ" इति वैजयन्ती। लसदंशौ प्रसरद्रश्मौ भानौ एकतः एकस्मिन् भागे च्युतिं स्रस्तताम् उपेयुषि प्राप्ते सति द्यौः परिवृत्त्या मध्याक्रातिक्रमेण विलोलां गलरोम् अन्यत्र गात्रस्य तिर्य्यक् आवृत्त्या मुहुः चलन्तीं वासरलक्ष्मीं हारयष्टिं मुक्तावलीम् इव उवाह वहति स्म ॥ २ ॥

अंशुपाणिभिरिति। पतङ्गः सूर्य्यः। "पतङ्गः पक्षिसूर्य्ययोः" इत्यमरः। अतीव निर्भरम्। "अत्यतीव च निर्भरे" इत्यमरः। पातुम् इच्छुः पिपासुः तृषितः सन्। पिबतेः सन्नन्तात् उप्रत्ययः। अंशवः एव पाणयः तैः पद्मेषु जातं पद्मजं मधु मद्यं व। मध्विति श्लिष्टं रूपकम्। मकरन्दमयम् इत्यर्थः। "मधु मद्ये पुष्परसे" इत्यमरः। भृशम् अत्यन्तं रसयित्वा आस्वाद्य क्षीबतां मत्तत्वं गते इव इति उत्प्रेक्षा। "मत्ते शौण्डोत्कटक्षीबाः" इत्यमरः। क्षितिम् एष्यन् गमिष्यन् लोहितं रक्तं वपुः उवाह। यथा मत्तः क्षीबतया क्षितौ लुण्ठति रज्यते च तद्वदिति भावः। सूर्य्यस्य क्षितिविलयनम् अस्तमयः इति आगमः। अत्र रूपकोत्प्रेक्षयोः सापेक्षत्वात् अङ्गाङ्गिभावेन सङ्करः ॥ ३ ॥

गम्यतामिति। सहस्रमरीचौ सूर्य्ये। लोहितो भवतीति लोहितायति। "लोहितादिडाज्भ्यः क्यष्।" "वा क्यषः" इति परस्मैपदे शतृ-

मुक्तमूललघुरुज्झितपूर्वः
पश्चिमे नभसि सम्भृतसान्द्रः
सामि मज्जति रवौ न विरेजे
खिन्नजिह्म इव रश्मिसमूहः ॥ ५ ॥

कान्तदूत्य इव कुङ्कुमताम्राः
सायमण्डलमभि त्वरयन्त्यः।
सादरं ददृशिरे वनिताभिः
सौधजालपतिता रविभासः ॥ ६ ॥

प्रत्ययः। अतएव नयनानां गम्यताम् उपगते दर्शनीयतां प्राप्ते सति अभितापः धरित्रीं विरहय्य विहाय। "ल्यपि लघुपूर्व्वात्" इति अयादेशः। चक्रवाकहृदयानि आससाद प्राप। अत्र धरित्र्याः यादृशः तीव्रार्ककरकृतसन्तापः तादृक्चक्रवाकहृदयेषु विरहसन्तापः सञ्जात इति परमार्थः। परन्तु तदुपक्रमानन्तरम् एतस्याविर्भावात् स एव अत्र संक्रान्त इति अभेदाध्यवसायेन उपदेशः। अतएव भेदे अभेदरूपातिशयोक्तिः अलङ्कारः ॥ ४ ॥

मुक्तेति। रवौ सामि मज्जति अर्द्धास्तमिते सति। "सामि त्वर्द्धे जुगुप्सायाम्" इत्यमरः। मुक्तं त्यक्तप्रायं मूलम् आश्रयभूतः रविः। अन्यत्र स्वामी। येन सः अतएव लघुः अल्पकश्च मुक्तमूललघुः उज्झितपूर्वः त्यक्तपूर्वदिक्कः। अन्यत्र त्यक्तपूर्वजनः। पश्चिमे नभसि पश्चिमनभोभागे। अन्यत्र क्वचित् नीचस्थले। सम्भृतः संहतः सन् अतएव सान्द्रश्च रश्मिसमूहः आश्रितजनश्च ध्वन्यते। दुःखेन खिन्नः सन् जिह्मो दीन इव न विरेजे। अत्र मुक्तत्वादिप्रस्तुतविशेषणसाम्यात् अप्रस्तुताश्रितजनप्रतीतेः समासोक्तिः। तत्र वाच्यस्य रश्मिसमूहस्य अचेतनस्यापि प्रतीयमानेन चेतनेन अभेदाभिधानात् दुःखितत्वाद्युत्प्रेक्षा इति तयोः अङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

कान्तेति। कुङ्कुमवत् कुङ्कुमेन वा ताम्राः सायस्य सायंकालस्य। "सायं साये प्रगे प्रातः" इत्यमरः। यत् मण्डनं तत् अभि तत्-उद्दिश्य त्वरयन्त्यः त्वरां कारयन्त्यः सौधानां जालैः गवाक्षैः पतिताः प्रविष्टाः। "जालं गवाक्ष आनाय' इति वैजयन्ती। रविभासः सूर्य्यरश्मयः कान्तानां प्रेयसां दूत्य

अग्रसानुषु नितान्तपिशङ्गै-
र्भूरुहाम् मृदुकरैरवलम्ब्य ।
अस्तशैलगहनं नु विवस्वान्
आविवेश जलधिं नु महीं नु ॥ ७ ॥

आकुलश्चलपतत्रिकुलानाम्
आरवैरनुदितौषसरागः ।
आययावहरिदश्वविपाण्डु-
स्तुल्यतां दिनमुखेन दिनान्तः ॥ ८ ॥

इव वनिताभिः सादरं यथा तथा ददृशिरे दृष्टाः । सायन्तनार्कभासां प्रियसमागमसूचकत्वादेव दूत्य इव तासु स्त्रीणामादरोऽभवदित्यर्थः ॥ ६ ॥

अग्रेति । विवस्वान् सूर्य्यः अग्रे अस्तशैलशिखरे ये सानवः तेषु ये भूरुहाः तान् नितान्तपिशङ्गैः अत्यन्तारुणैः मृदुभिः करैः इव करैः अंशुहस्तैः इति श्लिष्टरूपकम् । "बलिहस्तांशवः कराः" इत्यमरः । यद्वा करैः मृदु श्लथम् अवलम्ब्य अस्तः इति शैलः अस्तशैलः । "अस्तस्तु चरमक्ष्माभृत्" इत्यमरः । तस्य गहनं काननं नु, आविवेश । तपनस्य पतनसन्देह एव दृष्टः । पतनं तु क्व च अस्य तत् न ज्ञायते शीघ्रगमनात् इत्यर्थः । अत्र तपने तपनस्य आरोप्यमाणस्य गहनाद्यनेकविषयत्वेन सन्देहालङ्कारः । उत्प्रेक्षा इति केचित् ॥ ७ ॥

आकुल इति । चलानां कुलायेभ्यः कुलायान् प्रति चलतां पतत्रिकुलानाम् आरवैः शब्दैः आकुलः व्याप्तः । अनुदितशब्देन अभावमात्रम्, उषःशब्देन सन्ध्यामात्रं च विवक्षितं उषसि भवः औषसः । "सन्धिवेला" इत्यादिना योगविभागात् अण्प्रत्ययः, अन्यथा कालात् ठञ् स्यात् । तथा च अनुदितौषसराग इति अविद्यमानसन्ध्याराग इत्यर्थः । एकत्र अपगमात् अन्यत्र अनुदयात् च इति भावः । अहरिदश्वः अविद्यमानसूर्य्यः एकत्र अनुदयात् अन्यत्र अस्तमयात् च इति भावः । अतएव विपाण्डुः तिमिरानुदयात् इति शेषः । दिनान्तः सायंकालः दिनमुखेन प्रातःकालेन तुल्यताम् आययौ तद्वत् बभूव इत्यर्थः । अतएव उपमालङ्कारः ॥ ८ ॥

परिसुरपतिसूनुधाम सद्यः
समुपदधन्मुकुलानि मालतीनाम् ।
विरलमपजहार बद्धबिन्दुः
सरजसतामवनेरपां निपातः ॥ २० ॥

प्रतिदिशमभिगच्छताभिमृष्टः
ककुभविकाससुगन्धिनानिलेन ।
नव इव विबभौ सचित्तजन्मा
गतधृतिराकुलितश्च जीवलोकः ॥ २१ ॥

व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुफलोपभोगहृष्टा ।
परभृतयुवतिः स्वनं वितेने
नवनवयोजितकण्ठरागरम्यम् ॥ २२ ॥

परीति । परिसुरपतिसूनुधाम अर्जुनाश्रमं प्रति । परीति लक्षणार्थे कर्मप्रवचनीयस्य योगात् द्वितीया ; यद्वा वर्जनार्थस्य तस्यात्र विरोधात् विभक्त्यर्थे अव्ययीभावः । तथाच सुरपतिसूनुधाम्नीत्यर्थः । सद्यः मालतीनां जातीलतानाम् । "सुमना मालती जातिः" इत्यमरः । मुकुलानि समुपदधत जनयन् । विरलं यथा तथा बद्धबिन्दुः अपां निपातः वृष्टिः अवनेः सम्बन्धिनीं सरजसतां सरजस्कत्वम् । "अचतुर" इत्यादिसूत्रेण साकल्यार्थे अव्ययीभावः । "समासान्तनिपातश्च बहुव्रीह्यर्थस्तु लक्ष्यते ।" अव्ययीभावदर्शनन्तु प्रायिकमिति केचित् । अपजहार धूलिं शमयामास इत्यर्थः ॥ २० ॥

प्रतिदिशमिति । दिशि दिशि प्रतिदिशम् । यथार्थे अव्ययीभावः । शरत्प्रभृतित्वात् समासान्तनिपातः । अभिगच्छता संगता ककुभानि अर्जुनकुसुमानि । "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः । तेषां विकासेन सुगन्धिना मनोज्ञगन्धेन । गन्धस्येत्वे तदेकान्तग्रहणं प्रायिकम् । अनिलेन अभिमृष्टः अत एव सचित्तजन्मा कामाक्रान्त इत्यर्थः । अत एव गतधृतिः गतधैर्य्यः आकुलितः क्षोभितश्च, रतिं प्रतीति भावः । एवम्भूतः जीवलोकः नव इव अवस्थान्तरप्राप्त्या अपूर्व इव विबभौ भाति स्म । इति उत्प्रेक्षा ॥ २१ ॥

अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे ।
जन इव न धृतेश्चचाल जिष्णु-
र्न हि महतां सुकरः समाधिभङ्गः ॥२३॥

धृतबिसवलयावलिर्वहन्ती
कुमुदवनैकदुकूलमात्तबाणा ।
शरदमलतले सरोजपाणौ
घनसमयेन वधूरिवाललम्बे ॥ २४ ॥

व्यथितमिति । व्यथितं दुःखितमपि मनो भृशं हरन्ती, किमुत सुखितमिति भावः । जम्ब्वाः फलं जम्बुः । "वाहतञ्च फले जम्बा, जम्बूः स्त्री जम्बु जाम्बवम्" इत्यमरः । "जम्ब्वा वा', इति अणाभावपक्षे अञि "फले लुक्" इति लुक् । "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययनिवृत्तिः । जम्बु च तत् फलञ्चेति सामान्यविशेषयोः सह निर्देशः । यद्वा जम्ब्वाः फलमिति विग्रहः । "इको ह्रस्वोऽड्यो गालवस्य" इति ह्रस्वः । तस्य परिणतस्य उपभोगेन हृष्टा । अत एव परभृतयुवतिः कोकिलाङ्गना नवनवं नवप्रकारं यथा तथा योजितेन सम्पादितेन कण्ठरागेण कण्ठमाधुर्येण रम्यं सौम्यमित्यर्थः । स्वनं स्वरं वितेने । वर्षासु अपि मधुराः स्वराः कोकिलाया इति प्रसिद्धिः ॥ २२ ॥

अभिभवतीति । कदम्बवायौ कदम्बसम्बन्धिनि मारुते मदमधुरे शिखण्डिनां निनादे च मनः अभिभवति अभिहरति सति जिष्णुः जयनशीलः अर्जुनः जनः पृथगजन इव धृतेः धैर्यान्न चचाल ; वर्षा अपि तदुद्दीपनाय न शेकुरित्यर्थः । हि यस्मात् महतां समाधिभङ्गः न सुकरः । न केनापि कर्त्तुं शक्यत इत्यर्थः ॥ २३ ॥

धृतेति । बिसानि वलयानीव तेषामावलिः धृता यया सा । कुमुदवनमेकं मुख्यं दुकूलमिव तद् वहन्ती । आत्ता गृहीता बाणा नीलझिण्टी यया सा आत्तबाणा धृतशरा च । "गृह्णीयात् क्षत्रियः शरम्" इति स्मरणात् । "बाणोक्ता नीलझिण्टी च" इति वैजयन्ती । शरद्वधूः जाया इव घनसमयेन वर्षर्त्तुना वरेणेति शेषः । अमलतले निर्मलतले सरोजं पाणिरिव तस्मिन् आललम्बे जगृहे । कर्मणि लिट् । वधूवरसमागमवदृतुसन्धिः अशोभत इत्यर्थः । अत्र "आत्तबाणा" इति झिण्टी-

समदशिखिरुतानि हंसनादैः
कुमुदवनानि कदम्बपुष्पवृष्ट्या ।
श्रियमतिशयिनीं समेत्य जग्मु-
र्गुणमहतां महते गुणाय योगः ॥ २५॥

सरजसमपहाय केतकीनां
प्रसवमुपान्तिकनीपरेणुकीर्णम् ।
प्रियमधुरसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि ॥२६॥

गरयोः बाणयोः अभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरुपमाङ्गमिति अनयोः सङ्करः ॥ २४ ॥

अथ ऋतुसन्धिं वर्णयति—समदेति । समदशिखिरुतानि मत्तमयूरकूजितानि हंसनादैः समेत्य तथा कुमुदवनानि कदम्बपुष्पवृष्ट्या कदम्बपुष्पसम्पदा समेत्य अतिशयिनीम् अतिशयवतीं श्रियं जग्मुः, तथाहि—गुणमहतां गुणाधिकानां योगः परस्परसमागमः महते गुणाय उत्कर्षाय भवतीति शेषः । अत्र त्रिपाद्यां समालङ्कारः । "सा समालङ्कृतिर्योग्यवस्तुनो रुभयोरपि" इति लक्षणात् । सोऽपि चतुर्थेन अर्थान्तरन्यासेन स्वसमर्थकेन अङ्गाङ्गिभावेन सङ्कीर्यते ॥ २५ ॥

सरजसमिति । प्रियमधुः इष्टमकरन्दः । नात्र कप्समासान्तः "पुंलिङ्गोत्तरपदो बहुव्रीहिः" इति केचित् । नपुंसकलिङ्गस्य एव मधुशब्दस्य उरःप्रभृतिषु पाठात् । "मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः ॥" इति अभिधानात् । षट्पदाली षट्पदावलिः उपान्तिके यानि नीपानि कदम्बकुसुमानि तेषां रेणुभिः परागैः कीर्णं व्याप्तं, किन्तु स्वतोऽपि सह रजसा सरजसं न तु अरजस्कमिति भावः । साकल्ये अव्ययीभावः । "अचतुर" इत्यादिना निपातः । केतकीनां प्रसवं पुष्पमपहाय विनीलबन्धनानि नलिनवृन्तानि असनानि प्रियकपुष्पाणि मकरन्दभरितानीति शेषः । "सर्जकासनबन्धूकपुष्पप्रियकजीवकाः" इत्यमरः । मलिनयति स्म । यथा वृन्तात् अन्यत्रापि मालिन्यं स्यात्, तथा मधुलोभात् छादयामास इत्यर्थः । न हि मध्वासक्तः [मधुलाभे] असति विभूतिषु आसज्जतीति भावः ॥ २६ ॥

मुकुलितमतिशय्य बन्धुजीवं
धृतजलबिन्दुषु शाद्वलस्थलीषु ।
अविरलवपुषः सुरेन्द्रगोपा
विकचपलाशचयश्रियं समीयुः ॥ २७ ॥

अविरलफलिनीवनप्रसूनः
कुसुमितकुन्दसुगन्धिगन्धवाहः ।
गुणमसमयजं चिराय लेभे
विरलतुषारकणस्तुषारकालः ॥ २८ ॥

निचयिनि लवलीलताविकाशे
जनयति लोध्रसमीरणे च हर्षम् ।
विकृतिमुपययौ न पाण्डुसूनु-
श्चलति नयान्न जिगीषतां हि चेतः ॥२९॥

मुकुलितमिति । धृताः जलबिन्दवः यासु तासु शाद्वलस्थलीषु शाद्वलहरितप्रदेशेषु अविरलवपुषः स्थूलमूर्त्तयः सुरेन्द्रगोपाः कीटविशेषाः मुकुलितं मुकुलीकृतं बन्धुजीवं बन्धुजीवकुसुमकुलमित्यर्थः । "बन्धुको बन्धुजीवकः" इत्यमरः । अतिशय्यातिक्रम्य विकचपलाशचयः विकसितकिंशुकराशिः । "पलाशे किंशुकः पर्णः" इत्यमरः । तस्य श्रियं तत्सदृशीं श्रियमित्यर्थः । अत एव निदर्शनालङ्कारः । समीयुः प्रापुः ॥ २७ ॥

अथ हेमन्तवर्णनमाह—अविरलेति । अविरलानि घनानि फलिनीवनानां प्रियङ्गुवनानां प्रसूनानि यस्मिन् सः । "प्रियङ्गुः फलिनी फली" इत्यमरः । कुसुमितैः कुन्दैः माघ्यकुसुमैः सुगन्धिः गन्धवाहः यस्मिन् सः । "माघ्यं कुन्दम्" इत्यमरः । शैशिराणामपि कुन्दानां हेमन्ते प्रादुर्भावात् अविरोधः । विरलतुषारकण इति प्रारम्भोक्तिः । तुषारकालः हेमन्तः चिराय असमयजम् अकालसम्भवं गुणमुत्कर्षं लेभे ॥ २८ ॥

निचयिनीति निचयिनि उपचयवति लवलीलतानां विकाशे पुष्पविजृम्भणे तथा लोध्रसमीरणे च हर्षं प्रसादं चोत्कण्ठां जनयति सति पाण्डुसूनुः विकृतिं न उपययौ । कुतः ? हि यस्मात् जिगीषतां जेतु-

कतिपयसहकारपुष्परम्य-
स्तनुतुहिनोऽल्पविनिद्रसिन्धु(न्दु)वारः ।
सुरभिमुखहिमागमान्तशंसी
समुपययौ शिशिरः स्मरैकबन्धुः ॥ ३० ॥

कुसुमनगवनान्युपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम् ।
क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ३१ ॥

मिच्छतां चेतः नयात् नीतिः न चलति । न हि क्रोधाक्रान्ते चेतसि शृङ्गार-रसस्य विकाशः, तद्विरुद्धत्वात् रोषस्येति भावः ॥ २९ ॥

कतिपयेति । कतिपयैरेव सहकारपुष्पैः चूतकुसुमैः रम्यः । न तु वसन्तवत् समग्रैः, नापि हेमन्तवत् तद्रहितैरिति भावः । तनुतुहिनः अल्पहिमः, न तु हेमन्तवत् बहुतुहिनः, नापि वसन्तवत् विरलतुहिन इति भावः । अल्पानि कतिपयानि विनिद्राणि सिन्धु[न्दु]वाराणि विकसित-सिन्धुवारकुसुमानि यस्मिन् सः । अत्रापि सहकारवत् अभिप्रायो द्रष्टव्यः । "सिन्धु[न्दु]वारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः । इत्थं सुरभिमुखं वसन्तप्रारम्भं हिमागमान्तं हेमन्तावसानञ्च शंसति सूचयतीति सः तथोक्तः । स्मरस्य एकबन्धुः सहकारी उभयत्र धर्मसम्पत्तेरिति भावः । शिशिरः समुपययौ ॥ ३० ॥

अथ वसन्तप्रादुर्भावमाह—कुसुमेति । कुसुमप्रधानानां नगानां वृक्षाणां कुन्दानां नगा वृक्षा वा तेषां वनानि उपैतुम् आरोढुं कामः यस्याः सा । "शैलवृक्षौ नगावगौ" इत्यमरः । "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति मकारलोपः । वसन्तलक्ष्मीः किसलयिनीं पल्लविनीं चूतयष्टिं चूतशाखामिवेति भावः । अवलम्ब्य अवष्टभ्य, अन्यथा आरोढुमशक्यत्वादिति भावः क्वणत् शिञ्जमानं शब्दायमानम् अलिकुलं नूपुरमिव यस्याः सा तथोक्ता सती । "क्वणदलिकुलनूपुरम्" इत्यपि पाठः । अन्यत्र अलिकुलवत् नूपुरं नलिनवनेषु पदं निरासे निदधे । तेषु प्रथमं प्रादुरासीदित्यर्थः । "उपसर्गादस्यत्यूह्योर्वा" इति

विकसितकुसुमाधरं हसन्तीं
कुरवकराजिवधूं विलोकयन्तम् ।
ददृशुरिव सुराङ्गना निषण्णं
सशरमनङ्गमशोकपल्लवेषु ॥ ३२ ॥

मुहुरनुपतता विधूयमानं
विरचितसंहति दक्षिणानिलेन ।
अलिकुलमलकाकृति प्रपेदे
नलिनमुखान्तविसर्पि पङ्कजिन्याः ॥३३॥

श्वसनचलितपल्लवाधरोष्ठे
नवनिहितेर्ष्यमिवावधूनयन्ती ।
मधुसुरभिणि षट्पदेन पुष्पे
मुख इव शाललतावधूश्चुचुम्बे ॥३४॥

वचनात् आत्मनेपदम् । अत्र प्रक्रान्तवसन्तलक्ष्मीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥ ३१ ॥

विकसितेति । विकसितः विश्लिष्टः कुसुममेवाधरो यस्मिन् कर्मणि तद् यथा तथा हसन्तीं स्मयमानां कुरवकराजिरेव वधूः तां विलोकयन्तः कामुकतयेति भावः । अत एव अशोकपल्लवेषु पल्लवसंस्तरेषु निषण्णं स्थितमित्यर्थः । रिरंसयेति शेषः । सशरं नित्यविजयित्वादिति भावः । इत्थं शृङ्गारवीरयोरेकाधिकरणभूतम् अनङ्गं सुराङ्गनाः ददृशुरिवेति उत्प्रेक्षा । अशोकाद्यवलोकनात् मदनसाक्षात्कारादिव महान् मनःक्षोभः तासाम् आसीदित्यर्थः । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ३२ ॥

मुहुरिति । अनुपतता अनुधावता दक्षिणानिलेन मलयमारुतेन मुहुर्विधूयमानं कम्पितम् अत एव विरचिता संहतिर्येन, तत्सम्भूतमित्यर्थः । पङ्कजिन्याः यत् नलिनं मुखमिव तस्य अन्तविसर्पि प्रान्तचारि अलिकुलं कर्त्तृ अलकाकृतिम् अलकसादृश्यं प्रपेदे ॥ ३३ ॥

श्वसनेति । षट्पदेन शाललता सर्जतरुशाखा वधूरिव शाललता-

प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा ।
अवजितभुवनस्तथाहि लेभे
सिततुरगे विजयं न पुष्पमासः ॥ ३५ ॥

कथमिव तव सम्मतिर्भवित्री
सममृतुभिर्मुनिनावधीरितस्य ।
इति विरचितमल्लिकाविकाशः
स्मयत इव स्म मधुं निदाघकालः ॥३६॥

वधूः । "प्राकारग्रहयोः शालः शालः सर्ज्जतरुः स्मृतः" इति शाश्वतः । श्वसनेन वायुना निःश्वासेन च चलितः पल्लवः अधरोष्ठ इव यत्र तस्मिन् । "ओत्वोष्ठयोः समासे वा" इति पररूपं वक्तव्यम् । मधुना मकरन्देन मद्येन च सुरभिणि पुष्पे मुखे इव नवं यथा तथा निह्नितर्ष्यं कृतकोपमिवेति क्रियाविशेषणम् । तथा अवधूनयन्ती कम्पयन्ती । "धूञ्प्रीञोर्नुग् वक्तव्यः" इति णिचि नुमागमः । चुचुम्बे चुम्बिता । अत्र श्वसनशब्दार्थमधुशब्दार्थयोश्च श्लेषभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः । सा च उपमाङ्गमित्यनयोः सङ्करः ॥ ३४ ॥

प्रभवतीति । परः शत्रुस्तदा तस्मिन् काले विजेतुं न प्रभवति न शक्नोति । यदा जितेन्द्रियता इन्द्रियजयित्वम् आत्मरक्षा भवति विद्यते । तथाहि—अवजितभुवनः त्रैलोक्यविजयी पुष्पमासो वसन्तः सिततुरगे अर्जुने विषये विजयं न लेभे । अतो जितेन्द्रिया दुर्जया इत्यर्थः । विशेषेण सामान्यार्थसमर्थनरूपः अर्थान्तरन्यासः अलङ्कारः ॥ ३५ ॥

अथ ग्रीष्मं वर्णयति—कथमिति । विरचितमल्लिकाविकाशः निदाघकालः ग्रीष्मः ऋतुभिः वर्षादिभिः समं मुनिना अवधीरितस्य तिरस्कृतस्य तव सम्मतिः लोके योग्यत्वेन अनुमतिः मान्यत्वं कथमिव भवित्री ? न सम्मानः कथञ्चित् भविष्यतीत्यर्थः । इति इत्थं मधुर्वसन्तः "चैत्रे दैत्ये वसन्ते च जीवे काके मधुः स्मृतः" इति विश्वः । स्मयते स्म इव जहास किम् ? इति उत्प्रेक्षा । "लट् स्मे" इति भूतार्थे लट् । प्रहासस्य शुभ्रत्वेन प्रसिद्धेर्मल्लिकाविकाशे हासत्वाध्यवसायः । अत्र ऋतुभिः सममवधीरितस्य इत्यत्र अभेदाध्यवसायमूला सहोक्तिरलङ्कारः । सम्बन्धि-

बलवदपि बलं मिथो विरोधि
प्रभवति नैव विपक्षनिर्जयाय ।
भुवनपरिभवी न यत्तदानीं
तमृतुगणः क्षणमुन्मनीचकार ॥ ३७ ॥

श्रुतिसुखमुपवीणितं सहायै-
रविरललाञ्छनहारिणश्च कालाः ।
अविहितहरिसूनुविक्रियाणि
त्रिदशवधूषु मनोभवं वितेनुः ॥ ३८ ॥

भेदभिन्नस्य अवधीरणस्य अभिन्नतया अध्यवसायात् तदेव अवधीरणम-सम्मतिद्वारा स्मयोत्प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३६ ॥

बलवदिति । बलवत् प्रबलमपि प्रकृष्टगामि इति यावत् । मिथो विरोधि परस्परस्पर्द्धि बलं सैन्यम् । "वरूथिनी बलं सैन्यम्" इत्यमरः । विपक्षनिर्जयाय शत्रुविजयाय । "तुमर्थाच्च" इत्यादिना चतुर्थी । शत्रून् जेतुमित्यर्थः न प्रभवति न शक्नोति एव । कुतः ? यत् यस्मात् कारणात् भुवनानां परिभवी जेता अपि । "जिदृक्षि" इत्यादिना इनिप्रत्ययः । ऋतुगणः तदानीं तम् अर्जुनं क्षणमपि न उन्मनीचकार अनुन्मनसम् उन्मनसं न चकार । "अरुर्मनश्चक्षुः" इत्यादिना अभूततद्भावे च्विप्रत्ययः सलोपश्च । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

एवं तटस्थस्य उद्दीपनसामग्री विफला इत्युक्तम् । सम्प्रति विपरीता जातेत्याह—श्रुतीति । सहायैः तासां सहचरैः गन्धर्वैः कृतमिति शेषः । "न लोक" इत्यादिना षष्ठीप्रतिषेधः, कर्त्तरि तृतीया । श्रुतिसुखं श्रोत्रमधुरम् उपवीणितं वीणया उपगानम् "सत्यापपाश" इत्यादिना वीणाशब्दात् णिजन्तात् भावे क्तः । अविरलैः भूयोभिर्लाञ्छनैः पूर्वोक्तैः फलकुसुमादिभिश्चिह्नैः हारिणः मनोहराः कालाः वसन्तादि-ऋतवः अविहिता अकृता हरिसूनोरर्जुनस्य विक्रिया मनोविकृतिर्यैः तानि तथाभूतानि सन्ति, "नपुंसकमनपुंसक" इत्यादिना नपुंसकैकशेषः । त्रिदशवधूषु मनोभवं वितेनुः विस्तारयामासुः । सः अयं परप्रहारार्थम् उद्यतमायुधं स्वात्मानमेव प्रहरतीति, न्यायवत् जात इति भावः । अत्र मुनिविक्रियार्थं स्त्रीणां विक्रियारूपानर्थोत्पत्तिकथनात् द्वितीयो विषमाल-

न दलति निचये तथोत्पलानां
न च विषमच्छदगुच्छयूथिकासु ।
अभिरतिमुपलेभिरे यथासां
हरितनयावयवेषु लोचनानि ॥ ३९ ॥

मुनिमभिमुखतां निनीषवो याः
समुपययुः कमनीयतागुणेन ।
मदनमुपदधे स एव तासां
दुरधिगमा हि मतिः प्रयोजनानाम् ॥ ४० ॥

प्रकृतमनुससार नाभिनेयं
प्रविकसदङ्गुलि पाणिपल्लवं वा ।
प्रथममुपहितं विलासि चक्षुः
सिततुरगे न चचाल नर्त्तकीनाम् ॥ ४१ ॥

ङ्कारः । तथाच सूत्रम्—"विरूपकार्य्यानर्थयोरुत्पत्तिरूपसंघटनाद्विषमा-लङ्कारः" इति ॥ ३८ ॥

तटस्थवत् आलम्बनगणोऽपि विपरीतोऽभूदिति श्लोकद्वयेनाह—नेत्यादि । आसां लोचनानि हरितनयावयवेषु यथा दलति विकसति उत्पलानां निचये अभिरतिं न उपलेभिरे न प्रापुः । तथा विषमच्छदगुच्छाः सप्तपर्णस्तवकाः यूथिकामल्लिकाश्च तासु अभिरतिं न उपलेभिरे । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । तथा रमणीयत्वात् तदवयवानामित्यर्थ इति चक्षुःप्रीतिरुक्ता ॥ ३९ ॥

अथ मनःसङ्गं सूचयति—मुनिमिति । याः स्त्रियः कमनीयता सौन्दर्य्यमेव गुणः तेन मुनिम् अर्जुनम् अभिमुखतां निनीषवः नेतुम् इच्छवः समुपययुः । तासां स्त्रीणां सः मुनिरेव मदनम् उपदधे जनयामास । तथाहि—प्रयोजनानाम् उद्देश्यानां गतिः परिणतिः दुरधिगमा हि दुर्ज्ञेया खलु । अतः क्वचित् भवति क्वचित् न भवतीति भावः ॥४०॥

अथासाम् अनुरागमेव कार्य्यतः प्रपञ्चयति—प्रकृतमिति । विलासि सविलासं नर्त्तकीनां सम्बन्धि । "शिल्पिनि ष्वुन्" इति ष्वुन्प्रत्ययः "नृतिखनिरञ्जिभ्य एव" इति नियमः । चक्षुः कर्त्तृ प्रकृतं प्रक्रान्तम्

अभिनयमनसः सुराङ्गनाया
निहितमलक्तकवर्त्तनाभिताम्रम् ।
चरणमभिपपात षट्पदाली
धृतनवलोहितपङ्कजाभिशङ्का ॥ ४२ ॥

अविरलमलसेषु नर्त्तकीनां
द्रुतपरिषिक्तमलक्तकं पदेषु ।
सवपुषमिव चित्तरागमूहु-
र्नमितशिखानि कदम्बकेसराणि ॥४३॥

नृपसुतमभितः समन्मथायाः
परिजनगात्रतिरोहिताङ्गयष्टेः ।

अभिनेयम् अभिनेतव्यं रसभावादिव्यञ्जकं न अनुससार । तद्दूषणं तदाम्-गुख्येनैव दृष्टिप्रयोगनियमादिति भावः। तथा प्रविकसदङ्गुलि पाणि-पल्लवं वा न अनुससार। स च दोषः "यतो हस्तस्ततो दृष्टिः" इति नियमादिति भावः। पल्लवोऽस्त्री किसलयम्" इत्यमरः। "वा स्याद्वि-कल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः। किन्तु प्रथमं प्रवेश एव सिततुरगे अर्जुने उपहितं सत् न चचाल तत्रैव लग्नं तस्थौ। रागात्तेन किञ्चित् करणीयमनुसन्धेयमिति भावः ॥ ४१ ॥

अभिनयेति। अभिनयः रसभावादिव्यञ्जकचेष्टाविशेषः। "व्यञ्जका-भिनयौ समौ" इत्यमरः। तत्र मनो यस्याः तस्याः व्यासङ्गात् भङ्गापातम् अजानन्त्या इत्यर्थः। सुराङ्गनायाः सम्बन्धि अलक्तकवर्त्तनेन लाक्षारस-रञ्जनेन अभिताम्रं निहितं चरणं न्यस्तं षट्पदाली कर्त्री धृता नवलोहित-पङ्कजानामभिशङ्का प्रत्यग्रकोकनदभ्रमो यया सा अभिपपात अभिधावति स्म। अत्र षट्पदाल्याः स्त्रीचरणे पङ्कजभ्रमाभिधानात् भ्रान्तिमदलङ्कारः, तेन च उपमा व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः ॥ ४२ ॥

अविरलमिति। नमितशिखानि नर्त्तकीपादपीडनात् नमिताग्राणि कदम्बकेसराणि रङ्गपूजादत्तानीति शेषः। अविरलं सान्द्रं यथा तथा द्रुतं रागोष्मणा विगलितम् अत एव परिषिक्तं नर्त्तकीनाम् अलसेषु पदेषु पाद-न्यासेषु अलक्तकं लाक्षारागं सवपुषं मूर्त्तिमन्तं चित्तरागम् उत्कण्ठतया-बहिर्निःसृतं मुनिविषयकं रागमिवेति उत्प्रेक्षा। ऊहुर्वहन्ति स्म ॥ ४३ ॥

स्फुटमभिलषितं बभूव वध्वा
वदति हि संवृतिरेव कामितानि ॥४४॥

अभिमुनि सहसा हृते परस्या
घनमरुता जघनांशुकैकदेशे।
चकितमवसनोरु सत्रपायाः
प्रतियुवतीरपि विस्मयं निनाय ॥४५॥

धृतबिसवलये निधाय पाणौ
मुखमधिरूषितपाण्डुगण्डलेखम्।
नृपसुतमपरा स्मराभितापा-
दमधुमदालसलोचनं निदध्यौ ॥ ४६ ॥

अथासां शृङ्गारचेष्टां कथयति—नृपेति। नृपसुतम् अर्जुनम् अभितः सम्मुखं परिजनस्य सखीजनस्य गाढेन तिरोहिता लज्जया साकारगोपनाय अन्तर्हिता अङ्गयष्टिः यस्याः सा तस्याः समन्मथायाः वध्वाः अभिलषितं मुनिं प्रति अनुरागः स्फुटं बभूव। न च संव्रियमाणस्य अभिव्यक्तिर्विरुद्धेति वाच्यम् इति आह—यतः संवृतिः सम्यक् गोपनमेव कामितानि अनुरागान्। कामयतेर्भावे क्तः। वदति हि प्रकटयति इत्यर्थः। अयम् अनुरागस्य स्वभावः उक्तः, यया चेष्टया रागः संव्रियते स एव अस्य प्रकाशिकेति भावः॥ ४४॥

अभिमुनीति। अभिमुनि मुनिसमक्षं घनेन मरुता जवनांशुकस्य एकदेशे सहसा हृते सति सत्रपायाः सलज्जायाः परस्याः सम्बन्धि अवसना निरावरणौ ऊरू यस्मिन् तत् चकितं भयसंभ्रमः प्रतियुवतीरपि सपत्नीरपि विस्मयं निनाय। किमुत अन्यजनमिति अपिशब्दार्थः। न तु मुनिमित्याशयः॥ ४५॥

धृतेति। अपरा स्त्री स्मराभितापाद्धेतोः धृतानि बिसानि एव वलयानि येन तस्मिन् पाणौ अधिरूषितं चन्दनादिचर्चितं पाण्डु गण्डलेखे गण्डस्थले यस्य तत् मुखं निधाय आरोप्य अमधुमदे मधुमदरहिते तथापि अलसे लोचने यस्मिन् कर्मणि तत् यथा तथा तं नृपसुतं निदध्यौ पश्यति स्म। "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः॥ ४६॥

सखि दयितमिहानयेति सा मां
प्रहितवती कुसुमेषुणाभितप्ता ।
हृदयमहृदया न नाम पूर्वं
भवदुपकण्ठमुपागतं विवेद ॥ ४७ ॥

चिरमपि कलितान्यपारयन्त्या
परिगदितुं परिशुष्यता मुखेन ।
गतघृण गमितानि सत्सखीनां
नयनयुगैः सममार्द्रतां मनांसि ॥४८॥

अचकमत सपल्लवां धरित्रीं
मृदुसुरभिं विरहय्य पुष्पशय्याम् ।

अथ पञ्चभिर्मुनिं प्रति दूतीवाक्यमाह—सखीति । कुसुमेषुणा कामेन अभितप्ता पीड़िता सा नायिका, हे सखि ! दयितं मुनिम् इह आनय इति मां प्रहितवती भवदन्तिकं प्रेषितवती । किन्तु अविमृश्यकारिणीय-मित्याह—हृदयमिति । अहृदया असमन्का तस्याः तदङ्गत्वादिति भावः । अत एव सा पूर्वं प्रागेव भवदुपकण्ठं त्वत्समीपम् उपागतं हृदयं मनः न विवेद । नाम सम्भावनायाम् । अतो मत्प्रेषणं व्यर्थं तस्य अन्तरङ्गत्वाद् बहिरङ्गस्य दुर्बलत्वादिति भावः । एतेन मनःसङ्ग उक्तः । चक्षुःप्रीतिस्तु प्रागेव सर्वासाम् उक्ता इति न पृथक् उच्यते ॥ ४७ ॥

"दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इति । तत्राद्यम् अवस्थाद्वयम् अभ्यधायि । सम्प्रति काचित् क्रमशेषपि छेदेन सूच्यते—चिरमिति । चिरं कलितानि अपि सन्देशार्थबुद्ध्या योजितानि अपि वचनानीति शेषः । परिशुष्यता मुखेनेति जागरोक्तिः । परिगदितुम् अपारयन्त्या अशक्नुवत्या तया । हे गतघृण ! अद्यापि तां न अनुकम्पसे इति भावः । सत्सखीनां मनांसि नयनयुगैः समम् आर्द्रतां गमितानि उपचयं गमितानीत्यर्थः । शोकबाष्पाभ्यामिति भावः । अत्र सखीशोकोक्त्या मूर्च्छावस्था सूच्यते । अत्र शोकबाष्परूप-कारणभेदात् प्रतियोगिभेदाच्च आर्द्रत्वभेदेऽपि अभेदाध्यवसायः । तन्मूला च इयं नयनयुगैः सममिति सहोक्तिरलङ्कारः ॥ ४८ ॥

भृशमरतिमवाप्य तत्र चास्या-
स्तव सुखशीतमुपैतुमङ्कमिच्छा ॥४९॥
तदनघ तनुरस्तु सा सकामा
व्रजति पुरा हि परासुतां त्वदर्थे ।
पुनरपि सुलभं तपोऽनुरागी
युवतिजनः खलु नाप्यतेऽनुरूपः ॥५०॥
जहिहि कठिनतां प्रयच्छ वाचं
ननु करुणामृदु मानसं मुनीनाम् ।

अचकमतेति । किं वाच्यं तेत्याह—सा स्त्री मृद्वी सुरभिश्च या तां मृदुसुरभिं पुष्पशय्यां विरहय्य विहाय सपल्लवां धरित्रीम् अचकमत ऐच्छत् । तस्याः ततोऽपि शीतलत्वादिति भावः । कमेर्णिङन्तात् लुङ् । "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति द्विर्भाव इति केचित् । तन्न अचीकमत इति प्रसङ्गात् । अतो णिङभावपक्षे "कमेश्चङ् वक्तव्यः" इति वक्तव्यात् चङि रूपमेतत् । अस्या नायिकायास्तत्र धरित्र्यामपि भृशम् अरतिं दुःखम् अवाप्य सुखयति इति सुखः शीतः शीतलश्च तं सुख-शीतलं तव अङ्कम् उत्सङ्गम् उपैतुम् इच्छा, वर्त्तते इति शेषः । अस्याश्च शीत-लत्वं कथितम्, अत्र अरतिजागरौ सुव्यक्तौ इति अस्या नायिकायाः क्रमेण पुष्पशय्याद्यनेकाधारसम्बन्धकथनात् प्रथमः पर्य्यायालङ्कारः । तदुक्तम्— "क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि । एकस्मिन्नथवानेकं पर्य्यायालङ्कृति-र्द्विधा ॥" इति लक्षणात् ॥ ४९ ॥

तदिति । तत् तस्मात् कारणात् तस्याः दुःखस्थत्वात् हेतोः । हे अनघ ! निष्पाप ! तनुः कृशा इति कार्श्यावस्थाकथनम् । सा नायिका सकामा सफलमनोरथा अस्तु । हि यस्मात् त्वमेव अर्थः प्रयोजनं वस्तु वा तस्मिन् त्वदर्थे निमित्ते, सतीति शेषः । त्वाम् उद्दिश्य इत्यर्थः । परासुतां निष्प्राणत्वं पुरा व्रजति व्रजिष्यति, मरिष्यतीत्यर्थः । तथाच ते अनिमित्त-हत्यया अनघत्वव्याघातः स्यादिति भावः । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । इदञ्च दशमावस्थाप्रदर्शनम् । न च तपोनिष्ठत्वात् भेतव्यमित्याह—पुनरिति । पुनरपि पश्चादपि । "पुनरप्रथमे भेदे" इति विश्वः । तपः सुलभम् अनुरागी अनुरूपः योग्यश्च युवतिजनस्तु न आप्यते न लभ्यते खलु ॥ ५० ॥

उपगतमवधीरयन्त्यभव्याः
स निपुणमेत्य कयाचिदेवमूचे ॥५१॥

सललितचलितत्रिकाभिरामाः
शिरसिजसंयमनाकुलैकपाणिः ।
सुरपतितनयेऽपरा निरासे
मनसिजजैत्रशरं विलोचनार्द्धम् ॥५२॥

एवं प्रलोभितस्यापि मुनेर्मौनं न भग्नमित्याह—जहिहीति । कठिनतां निःस्पृहतां जहिहि त्यज इत्यर्थः । जहातेः "आ च हौ" इतीकारः । वाचं प्रयच्छ सन्धत्स्व इत्यर्थः । मुनीनां मानसं मनः करुणामृदु ननु दयार्द्रं खलु । "स्वान्तं हृन्मानसं मनः" इत्यमरः । किन्तु अभव्या निर्भाग्या उपगतं प्राप्तं, विषयमिति शेषः । अवधीरयन्ति अवमन्यन्ते । एवमुक्तप्रकारेण सः अर्जुनः कयाचित् एत्य समीपम् आगत्य निपुणं चतुरं यथा स्यात् तथा ऊचे उक्तः । नायिकया दूतीं प्रति वचनम् उक्तं तया दूत्या च मुनिं प्रत्युक्तं कथितमित्यर्थः । अत्र पञ्चश्लोक्यां विप्रलम्भशृङ्गारस्य औत्सुक्यनाम्ना व्यभिचारिभावस्य च अपुनरुक्तिः । अनौचित्येन नायिकायाः प्रवृत्तेराभासत्वमनुसन्धेयम् । तदुक्तम्—"एकत्र चेदनुरागस्तिर्यङ् म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥" इति तन्निबन्धनात् ऊर्जस्वलमलङ्कारः । तथाच सूत्रम्—"रसभेदतदाभासतत्प्रशमानां निबन्धनेन रसवत्प्रेय ऊर्जस्वलम्" इति । समाहितातिरसबन्धे रसवदलङ्कारः । भावनिबन्धे प्रेयोऽलङ्कारः । रसभावनिबन्धे तूर्जस्वलालङ्कारः । तत् प्रशमनिबन्धने समाहितालङ्कार इति सूत्रार्थः ॥ ५१ ॥

सललितेति । सललितं सविलासं यथा तथा चलितेन विवर्त्तितेन त्रिकेण कटिभागेन । "पृष्ठवंशाधरे त्रिकम्" इत्यमरः । अभिरामाः शिरसि जाताः शिरसिजाः । "सप्तम्यां जनेर्डः ।" "अमूर्द्धमस्तकात् स्वाङ्गादकामे" इति अलुक् । "उपपदमतिङ्" इति समासः । एतेन मनसिजो व्याख्यातः । तेषां संयमने बन्धने आकुलः व्यग्रः एकः पाणिः यस्याः सा, परा स्त्री सुरपतितनये अर्जुने जैता इव जैत्रः । जैतृशब्दात् तृजन्तात् "प्रज्ञादिभ्यश्च" इति अण्प्रत्ययः । मनसिजस्य जैत्रः शरः तथाभूतं विलोचनस्य अर्द्धम् एकदेशं कटाक्षमित्यर्थः । निरासे विससर्ज ॥ ५२ ॥

कुसुमितमवलम्ब्य चूतमुच्चै-
स्तनुरिभकुम्भपृथुस्तनानताङ्गी।
तदभिमुखमनङ्गचापयष्टि-
र्विसृतगुणेवं समुन्ननाम काचित् ॥५३॥

सरभसमवलम्ब्य नीलमन्या
विगलितनीवि विलोलमन्तरीयम्।
अभिपतितुमनाःससाध्वसेव
च्युतरशनागुणसन्दितावतस्थे ॥५४॥

यदि मनसि शमः किमङ्ग चापं
शठ विषयास्तव वल्लभा न मुक्तिः।
भवतु दिशति नान्यकामिनीभ्य-
स्तव हृदये हृदयेश्वरावकाशम् ॥५५॥

कुसुमितेति। इभकुम्भवत् पृथुभ्यां स्तनाभ्याम् आनतम् अङ्गं यस्याः सा। "अङ्गगात्रकण्ठेभ्यश्च" इति ङीष्। काचित् तनुः तन्वी। "वोतो गुणवचनात्" इति विकल्पात् न ङीष्। कुसुमितम् उच्चैरुन्नतं चूतम् अवलम्ब्य। अत एव चूतलतायोगात् विसृता गुणा यस्याः सा। "विसृतं विस्तृतं ततम्"। "मौर्वी ज्या शिञ्जिनी गुणः" इति चामरः। अनङ्ग-चापयष्टिरिव आकृष्टमुक्ता इति भावः। तदभिमुखं समुन्ननाम समुज्ज-जृम्भे अङ्गभङ्गं चकार इत्यर्थः ॥ ५३ ॥

सरभसमिति। अन्या अपरा विगलितनीवि श्लथबन्धनम् अत एव विलोलं स्थानचलितं नील्या रक्तं नीलम्। "नील्या अन् वक्तव्यः" इति अन्प्रत्ययः। अन्तरीयं परिधानम् अवलम्ब्य हस्तेन गृहीत्वा सरभसं सत्वरम् अभिपतितुं मनो यस्याः सा। अपगन्तुम् उद्युक्ताः इत्यर्थः। तथापि ससाध्वसा इव न तु वस्तुतः ससाध्वसा किन्तु च्युतेन गलितेन रशनागुणेन सन्दिता बद्धा सती अवतस्थे स्थिता। "बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम्" इत्यमरः। कर्म्मणि क्तः। "द्यतिस्यतिमास्थाम्" इत्याकारः ॥ ५४

काचिद् युग्मेनाह—यदीत्यादि। तव मनसि शमः शान्तिः यदि अस्तीति शेषः। अङ्ग! भोः! चापं किं, किमर्थमित्यर्थः। किन्तु हे

इति विषमितचक्षुषाभिधाय
स्फुरदधरोष्ठमसूयया कयाचित्।
अगणितगुरुमानलज्जयासौ
स्वयमुरसि श्रवणोत्पलेन जघ्ने ॥५६॥

सविनयमपराभिसृत्य साचि
स्मितसुभगैकलसत्कपोललक्ष्मीः।
श्रवणनियमितेन तं निदध्यौ
सकलमिवासकलेन लोचनेन ॥५७॥

करुणमभिहितं त्रपा निरस्ता
तदभिमुखञ्च किमुक्तमश्रु ताभिः।

शठ ! हे वञ्चक ! तव विषयाः शब्दादयः वल्लभाः प्रियाः, न तु मुक्तिः। तदेव द्रढयितुमाह—भवतु को दोष इति शेषः। यद्यहं रागी तर्हि किमिति भवतीः न गणयामि इति शङ्कां निवारयति। तव हृदये मनसि हृदयेश्वरा काचित् तव प्रेयसी अन्यकामिनीभ्यः स्वान्तरेभ्यः अवकाशं न दिशति न प्रयच्छति। स्वान्तरासक्त्या न अस्मान् गणयसि न तु वैराग्यात् तदर्थमेव अयं ते सकलः प्रयासः इत्यर्थः॥ ५५॥

इतीति। इति इत्थम् असूयया मत्सरेण स्फुरन् अधरोष्ठो यस्मिन् कर्म्मणि तथा अभिधाय उक्त्वा विषमितचक्षुषा कुटिलीकृतदृष्ट्या अगणिताः गुरवः आचार्य्यादयः मानः अभिमानः लज्जा च यया तया कयाचिदसौ मुनिरुरसि स्वयं स्वहस्तेनैव श्रवणोत्पलेन जघ्ने हतः॥ ५६॥

सविनयमिति। अपरा सविनयम् अनौद्धत्येन साचि तिर्य्यगभिसृत्य समीपं गत्वा स्मितेन मन्दहासेन सुभगैकस्य लसतः कपोलस्य लक्ष्मीः यस्याः सा इति। बहुवचनपदान्तरो बहुव्रीहिः। अन्यथा कप्रत्ययः स्यादित्युक्तं प्राक्। श्रवणनियमितेन कर्णान्तप्रापितेन रूढप्रसारणं तावदायतेनेत्यर्थः। असकलेन असम्पूर्णेन कटाक्षेणेति यावत्, लोचनेन तं मुनिं धनञ्जयम्। सकलमिव समग्रप्रायं यथा तथा निदध्यौ पश्यति स्म। कटाक्षेणैव गाढम् अद्राक्षीदित्यर्थः। एषु श्लोकेषु भावाभासनिबन्धनत्वात् ऊर्जस्वलालङ्कारः। औत्सुक्यमत्र भावः। आभासत्वञ्च अस्य विरक्तमुनौ अनौचित्यादित्युक्तं प्रागेवेति॥ ५७॥

प्रकुपितमभिसारणेऽनुनेतुं
प्रियमियती ह्यबलाजनस्य भूमिः॥५८॥

असकलनयनेक्षितानि लज्जा
गतमलसं परिपाण्डुता विषादः।
इति विविधमियाय तासु भूषां
प्रभवति मण्डयितुं वधूरनङ्गः॥५९॥

अलसपदमनोरमं प्रकृत्या
जितकलहंसवधूगति प्रयातम्।
स्थितमुरुजघनस्थलातिभारा-
दुदितपरिश्रमजिह्मितेक्षणं वा॥ ६० ॥

अथ तासां मुनिविलोभनमुपसंहरति—करणमिति। ताभिः स्त्रीभिः तदभिमुखं मुनिसमक्षं करणं दानम् अभिहितम् उक्तम्। तथा निरस्ता लज्जा त्यक्ता। किं बहुना अस्तु च विसृष्टम्। ततः परं न किञ्चिद् विधेयमासीदिति भावः। कुतः? हि यस्मात् अबलाजनस्य अभिसारणे समागमविषये प्रकुपितम् अननुकूलं प्रियम् अनुनेतुम् अनुकूलयितुम् इयती भूमिरिति एतावती सीमा साधनानां परमावधिरिति भावः। अर्थान्तरन्यासोऽलङ्कारः॥ ५८॥

अथासामनुरागदार्ढ्यं निगमयति—असकलेति। असकलनयनेक्षितानि नयनार्धविलोकितानि लज्जालसं गतं मन्दगमनं परिपाण्डुता पाण्डुवर्णत्वं विषादः इष्टानवाप्तिनिमित्तश्चेतोभङ्गः इत्येवंप्रकारं विविधं नानाविचेष्टितम्। "नपुंसकमनपुंसकेन" इत्यादिना नपुंसकैकशेषत्वम्। तासु भूषाम् इयायेति भावप्राधान्येन योज्यम्। तथाहि—अनङ्गो मदनः वधूः मण्डयितुं प्रभवति सर्वावस्थासु इति भावः। अतः तासाम् अनङ्गभूषितानाम् अखिलं भूषणमेवेति भावः॥ ५९॥

इदानीम् एतासां त्रिभिर्मुनिविलोभने प्रयासवैफल्यमाह—अलसेति। वधूनां सम्बन्धि प्रकृत्या अलसैः पदैः मनोरमं मनोज्ञम् अत एव जिता कलहंसवधूनां गतिर्येन तत् प्रयातं गमनम्। भावे क्तः। तथा ऊरुणः अतिविपुलस्य जघनस्थलस्य अतिभारादतिगौरवात् उदितपरिश्रमेण उद्गत-

भृशकुसुमशरेषुपातमोहा-
दनवसितार्थपदाकुलोऽभिलापः।
अधिकविततलोचनं वधूना-
मयुगपदुन्नमितभ्रु वीक्षितञ्च ॥६१॥

रुचिकरमपि नार्थवद् बभूव
स्तिमितसमाधिशुचौ पृथातनूजे।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ॥६२॥

विशेषकम्।

स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते

श्रमेण जिह्मितं ग्लपितं ईक्षणं यस्मिन् तत् स्थितं वा स्थितिश्च। सर्वत्र वाशब्दः समुच्चये। "वा समुच्चय एवार्थे उपमानविकल्पयोः" इति हैमः ॥ ६० ॥

भृशेति। तथा भृशेन गाढ़ेन कुसुमशरस्य कामस्य इषोर्निपातेन यो मोहः मूर्च्छा तस्मात् हेतोः अनवसितार्थैः अस्फुटोच्चारणात् अनवधारिताभिधेयैः पदैः सुप्तिङन्तादिभिः क्षुभितशब्दैः आकुलः सङ्कीर्णः अभिलापः वाक्यप्रयोगश्च अधिकं विततं विस्तृतं लोचनं यस्मिन् तत् अयुगपत् पर्य्यायेण उन्नमिते भ्रुवौ यस्मिन् तत् तथोक्तम्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः। वीक्षितं वीक्षणञ्च ॥ ६१ ॥

रुचिकरमिति। पूर्वोक्तं रुचिकरं स्पृहाजनकमपि। "रुचिः कान्त्यर्च्चिषोर्भासि स्त्रियां शोभास्पृहार्थयोः" इति वैजयन्ती। स्तिमितेन स्थिरेण समाधिना तपोयोगेन शुचौ शुद्धे निर्विकारे चेतसीत्यर्थः। पृथातनूजे अर्जुने विषये अर्थवत् सप्रयोजनं न बभूव। तथाहि—महतां धीराणां मनांसि अमर्षे क्रोधे ज्वलयति सति सुखाभिलाषः अवसरम् अवकाशं न लभते रौद्रस्य शृङ्गारविरोधित्वादिति भावः। अत्र विशेषके अर्थान्तरन्यासोऽलङ्कारः ॥ ६२ ॥

मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिता स्वं प्रति ययुः ॥ ६३ ॥

इति * * * अर्ज्जुनविलोभनप्रत्याख्यानो
नाम दशमः सर्गः ॥ १० ॥

---

स्वयमिति। एवं हरिसुते अर्ज्जुने स्वयम् अखण्डेन अविलुप्तेन तपसा शतमखम् इन्द्रं संराध्य प्रीणयित्वा परोच्छित्त्या शत्रुवधेन लभ्यां साध्यां लक्ष्मीं राजलक्ष्मीमभिलषति सति सोद्वेगैः कार्य्यसिद्ध्यभावात् सनिर्वेदैर्मनोभिः उपलक्षिताः। किञ्च, प्रणयविहत्या प्रार्थनाभङ्गेन ध्वस्तरुचयो नष्टकान्तयः सगन्धर्वाः गन्धर्वसहिताः त्रिदशवनिताः स्वं धाम स्वस्थानं प्रतिययुः। शिखरिणीवृत्तमेतत्। "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ६३ ॥

इति किरातार्ज्जुनीयमहाकाव्यस्य दशमसर्गव्याख्या समाप्ता ॥ १० ॥

---

# एकादशः सर्गः ।

—:०:—

अथामर्षान्निसर्गाच्च जितेन्द्रियतया तया ।
आजगामाश्रमं जिष्णोः प्रतीतः पाकशासनः ॥ १ ॥

मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः ।
द्राघीयसा वयोऽतीतः परिक्लान्तः किलाध्वना ॥ २ ॥

अन्वयः । अथ पाकशासनः तया अमर्षात् निसर्गात् च जितेन्द्रियतया प्रतीतः सन् जिष्णोः आश्रमम् आजगाम । वाच्यः—पाकशासनेन प्रतीतेन सता आश्रमः आजग्मे ॥ १ ॥

अन्वयः । अनुरूपेण सूनुना वयोऽतीतः मुनिरूपः सः द्राघीयसा अध्वना परिक्लान्तः किल पुरः ददृशे वाच्यः—अनुरूपः सूनुः वयोऽतीतं परिक्लान्तं मुनिरूपं तं ददर्श ॥ २ ॥

अथेति । अथ अप्सरसां प्रतिप्रयाणानन्तरम् । पाको नाम कश्चित् राक्षसः तस्य शासन इन्द्रः । नन्द्यादित्वात् ल्युप्रत्ययः । तया अप्सरोमुखात् श्रुतया अमर्षात् द्विषद्द्वेषात् निसर्गाच्च या जितेन्द्रियता तया आगन्तुकानागन्तुकोभयविधहेतुकया प्रतीतः हृष्टः सन् । "ख्यातो हृष्टे प्रतीते" इत्यमरः । जिष्णोः अर्जुनस्य । "जिष्णुः शक्रे धनञ्जये" इत्यमरः । आश्रममाजगाम । अत्र अमर्षनिसर्गयोः जितेन्द्रियताहेतुकं रुचिकरमपीति काव्यलिङ्गं स्फुटमवगम्यते ॥ १ ॥

किमिन्द्रः मुनिरूपेणैवाजगाम इत्याह—मुनिरूपेति । मुनेः रूपमिव रूपं यस्य सः मुनिरूपः मुनिवेशधारीत्यर्थः । सः इन्द्रः अनुरूपेण दर्शनप्रदानयोग्येनेत्यर्थः । सूनुना पुत्रेण अर्जुनेन पुरः अग्रे ददृशे दृष्टः । कथम्भूतः ? वयो यौवनादिकम् अतीतः वृद्धः । "द्वितीयाश्रित" इत्यादिना द्वितीयासमासः । द्राघीयसा अतिदीर्घेण । "प्रियस्थिर" इत्यादिना दीर्घशब्दस्य द्राघादेशः । अध्वना अध्वगमनेनेत्यर्थः । परिक्लान्तः परिश्रान्तः । किलेत्यलीके । "किल सम्भाव्यवार्तयोः । हेतुरुच्योरलीके च" इति हेमचन्द्रः । वृद्धः इव दूराध्वश्रान्त इव स्थित इत्यर्थः । "इव" इति पाठे स्पष्टार्थः ॥ २ ॥

১। অনন্তর পাকদানবনিহন্তা ইন্দ্র অপ্সরোগণের মুখে অর্জ্জুনের স্বভাবতঃ ও শত্রুপক্ষের প্রতি বিদ্বেষবশতঃ সমুদ্ভূত সেই জিতেন্দ্রিয়তা শ্রবণে সন্তুষ্ট হইয়া তদীয় আশ্রমে আগমন করিলেন।

जटानां कीर्णया केशैः संहत्या परितः सितैः।
पृक्तयेन्दुकरैरह्नः पर्य्यन्त इव सन्ध्यया॥ ३॥
विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः।
प्रालेयावततिम्लानपलाशाब्ज इव ह्रदः॥ ४॥
आसक्तभरनीकाशैरङ्गैः परिकृशैरपि।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः॥ ५॥

अन्वयः। परितः सितैः केशैः कीर्णया जटानां संहत्या (उपलक्षितः) (सुतरां) इन्दुकरैः पृक्तया सन्ध्यया (उपलक्षितः) अह्नः पर्य्यन्त इव (स्थितः)॥ वाच्य— संहत्या (उपलक्षितेन) …सन्ध्यया (उपलक्षितेन) अह्नः पर्य्यन्तेन इव (स्थितम्)॥ ३॥

अन्वयः। विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः (सः) प्रालेयावततिम्लानपलाशाब्जः ह्रद इव (स्थितः)। वाच्य—वलितापाङ्गलोचनेन (तेन)·· म्लानपलाशाब्जेन ह्रदेन इव (स्थितम्)॥४॥

अन्वयः। परिकृशैरपि आसक्तभरनीकाशैः अङ्गैः (उपलक्षितः) (सुतरां) आद्यूनः सद्गृहिण्या इव प्रायः यष्ट्या अवलम्बितः। वाच्य—…अङ्गैः (उपलक्षितेन)··यष्ट्या अवलम्बितेन (स्थितम्)॥ ५॥

अथ चतुर्भिरिन्द्रं विशिनष्टि—जटानामिति। परितः सितैः केशैः कीर्णया व्याप्तया जटानां संहत्या समूहेन उपलक्षितः। अत एव इन्दुकरैः इन्दुकिरणैः पृक्तया युक्तया सन्ध्यया उपलक्षितः अह्नः पर्य्यन्तः दिनान्त इव स्थितः। तस्यापि परिणतरूपत्वाद् वृद्धोपमानत्वं, जटानां संहत्यं तुरक्तत्वात् सन्ध्यासाम्यम्॥ ३॥

विशदेति। पुनश्च विशदेन पलितपाण्डुरेण भ्रूयुगेन छन्ने वलितापाङ्गे वलिमत्प्रान्ते लोचने यस्य सः तथोक्तः। "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः। पामादित्वात् लोमादिसूत्रेण वलच्प्रत्ययः। प्रालेयावतत्या हिमसंहत्या म्लानपलाशानि क्लान्तदलानि अब्जानि यस्मिन् सः ह्रद इव स्थितः॥ ४॥

आसक्तेति। पुनश्च परिकृशैः परिक्षीणैरपि आसक्तभरनीकाशैः भाराक्रान्तसदृशैः सभारवद्गुरुभवद्भिरित्यर्थः। "इकः काशे" इति दीर्घः।

२। তদীয় অনুরূপ পুত্র অর্জ্জুন দেখিলেন,—এক মুনিবেশধারী বৃদ্ধ যেন দীর্ঘ পথপর্য্যটনে পরিশ্রান্ত হইয়া আসিতেছেন।

৩। তাঁহার জটাপটল চতুর্দ্দিকে শুভ্র কেশে পরিব্যাপ্ত। সুতরাং ইন্দুকিরণসংযুক্ত সন্ধ্যা-রাগশোভিত দিবাবসানের ন্যায় তিনি প্রতিভাত।

৪। তাঁহার বলিতাপাঙ্গ লোচনদ্বয় পলিত পাণ্ডুর ভ্রূযুগলে সমাচ্ছন্ন; সুতরাং হিমস্তোমপরিম্লানদল কমলশোভিত হ্রদের ন্যায় তিনি অবস্থিত।

গূঢ়োঽপি বপুষা রাজন্ ধাম্না লোকাভিভাবিনা।
অংশুমানিব তন্বভ্রপটলচ্ছন্নবিগ্রহঃ ॥ ৬ ॥
জরতীমপি বিভ্রাণস্তনুমপ্রাকৃতাকৃতিঃ।
চকারাক্রান্তলক্ষ্মীকঃ সসাধ্বসমিবাশ্রমম্ ॥ ৭ ॥

অন্বয়ঃ। বপুষা গূঢ়োঽপি তন্বভ্রপটলচ্ছন্নবিগ্রহঃ অংশুমান্ ইব লোকাভিভাবিনা ধাম্না রাজন্ (দদৃশে)। বাচ্য—গূঢ়মপি ছন্নবিগ্রহং অংশুমন্তমিব রাজন্তং (দদর্শ)॥ ৬॥

অন্বয়ঃ। জরতীং তনুং বিভ্রাণোঽপি অপ্রাকৃতাকৃতিঃ সঃ আক্রান্তলক্ষ্মীকঃ সন্ আশ্রমং সসাধ্বসমিব চকার॥ বাচ্য— বিভ্রাণেনাপি অপ্রাকৃতাকৃতিনা তেন আক্রান্তলক্ষ্মীকেণ (সতা) আশ্রমঃ সসাধ্বস ইব চক্রে॥ ৭॥

অঙ্গৈঃ উপলক্ষিতঃ কার্শ্যাৎ লঘূনি অপি স্বাঙ্গানি স্বয়ং বোঢ়ুমসমর্থ ইত্যর্থঃ। অত এব আদূনঃ ঔদরিকঃ। "আদূনঃ স্যাদৌদরিকে বিজিগীষাবিবর্জ্জিতে" ইত্যমরঃ। আঙ্পূর্ব্বাৎ দীব্যতেঃ ক্তঃ। "চ্ছ্বোঃ শূড়নুনাসিকে চ" ইতি ঊড়াদেশঃ। "দিবোঽবিজিগীষায়াম্" ইতি নিষ্ঠানত্বম্। সদ্‌গৃহিণ্যা অনুকূলকলত্রেণেব প্রায়ঃ প্রাচুর্য্যেণ যষ্ট্যা অবলম্বনদণ্ডেন অবলম্বিতঃ ধারিতঃ, ন তু স্বশক্ত্যা ইতি ভাবঃ॥ ৫॥

গূঢ় ইতি। বপুষা গূঢ়োঽপি প্রচ্ছন্নরূপোঽপীত্যর্থঃ। প্রকৃত্যাদিভ্য উপসংখ্যানাৎ তৃতীয়া। তন্বভ্রপটলচ্ছন্নবিগ্রহঃ স্তোকাভ্রবৃন্দান্তরিতমূর্ত্তিঃ অংশুমান্ ইব লোকাভিভাবিনা লোকব্যাপিনা ধাম্না তেজসা "ধাম রশ্মৌ গৃহে দেহে স্থানে জন্মপ্রভাবয়োঃ" ইতি হেমচন্দ্রঃ। রাজন্ দীপ্যমানঃ দদৃশে ইতি পূর্ব্বেণ সম্বন্ধঃ॥ ৬॥

জরতীমিতি। জরতীং জীর্ণাম্। "জীনো জীর্ণো জরন্নপি" ইত্যমরঃ। জীর্য্যতেরতীতার্থে শতৃপ্রত্যয়ঃ। "উগিতশ্চ" ইতি ঙীপ্। তনুং শরীরং বিভ্রাণঃ দধৎ অপি অপ্রাকৃতা অলোকসামান্যা আকৃতির্মূর্ত্তির্যস্য সঃ ইন্দ্রঃ আক্রান্তা অভিভূতা লক্ষ্মীঃ আশ্রমশোভা যেন স আক্রান্তলক্ষ্মীকঃ। অত্র "উরঃপ্রভৃতিভ্যঃ কপ্" ইতি নিত্যকবাশ্রয়ণাৎ। একবচনোত্তরপদস্যৈব লক্ষ্মীশব্দস্যোরঃপ্রভৃতিষু পাঠাৎ "শেষাদ্বিভাষা" ইতি বিকল্পাশ্রয়ণে তু

৫। তাঁহার সর্ব্বাঙ্গ অত্যন্ত ক্ষীণ হইলেও ভারাক্রান্তবৎ প্রতীত হইতেছিল। ঔদরিক ব্যক্তি যেমন সুশীলা পত্নীকে অবলম্বন করিয়া চলিয়া থাকে, তেমনি তিনি যষ্টির উপর সম্পূর্ণ ভর করিয়া আসিতেছেন।

৬। তিনি প্রচ্ছন্নমূর্ত্তি হইলেও অল্প অল্প মেঘখণ্ডে সমাবৃতমূর্ত্তি সূর্য্যের ন্যায় লোকব্যাপী তেজঃপুঞ্জে দীপ্যমান হইতেছিলেন।

अभितस्तं पृथासूनुः स्नेहेन परितस्तरे ।
अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मनः ॥८॥
आतिथेयीमथासाद्य सुतादपचितिं हरिः ।
विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥९॥
त्वया साधु समारम्भि नवे वयसि यत्तपः ।
ह्रियते विषयैः प्रायो वर्षीयानपि मादृशः ॥ १० ॥

अन्वयः । पृथासूनुः तम् अभितः स्नेहेन परितस्तरे, बन्धौ अविज्ञाते हि बलात् मनः प्रह्लादते । वाच्य—पृथासूनुना परितस्तरे मनसा प्रह्लाद्यते ॥ ८ ॥

अन्वयः । अथ हरिः सुतात् आतिथेयीम् अपचितिम् आसाद्य विष्टरे विश्रम्य नाम इति भारतीं व्याजहार । वाच्य—हरिणा इति भारती व्याजह्रे ॥ ९ ॥

बहुवचनोत्तरपद इति विवेकः । आश्रमं समाध्वसमिव चकार । तेजस्विदर्शनात् भयं भवति, तत्तु न दुःखजनकं तस्य अमानुषत्वादिति सूचयितुमिवशब्दः ॥ ७ ॥

अभित इति । पृथासूनुः अर्जुनः तम् इन्द्रम् अभितः तं प्रति स्नेहेन परितस्तरे । तद्गोचरेण प्रेम्णा पर्य्यावृतः । स्तृणातेः कर्म्मणि लिट् । "ऋतश्च संयोगादेर्गुणः" इति गुणः । ननु अज्ञातसम्बन्धविशेषस्य तस्य इन्द्रे कथं स्नेहोदय इत्यत आह—अविज्ञात इति । बन्धौ सुहृदि अविज्ञातेऽपि बन्धुरयमिति अज्ञातेऽपि बलात् बान्धवसत्तावशादेव मनः प्रह्लादते हि, स्निह्यतीत्यर्थः ॥ ८ ॥

आतिथेयीमिति । अथ हरिः इन्द्रः सुतात् अर्जुनात् आतिथेयीम् अतिथिषु साध्वीम् । "पथ्यतिथिवसतिस्वपतेर्ढञ् ।" अपचितिं पूजाम् आसाद्य प्राप्य । "पूजा नमस्यापचितिः" इत्यमरः । विष्टरे आसने । "ऋदोरप्" इति स्तृणातेरप्प्रत्ययः । "वृक्षासनयोर्विष्टरः" इति षत्वम् । विश्रम्य नाम विश्रम्य किल श्रमम् अपनीय इत्यर्थः । इति वक्ष्यमाणप्रकारां भारतीं व्याजहार उक्तवान् । "व्याहार उक्तिर्लपितम्" इत्यमरः ॥ ९ ॥

৭। তিনি জীর্ণতনু ধারণ করিলেও তাঁহার আকৃতি অলোকসামান্য; তিনি আশ্রমশোভা অভিভূত করিয়া আশ্রম-প্রদেশ যেন ভীত চকিত করিয়া তুলিলেন।

৮। অর্জ্জুন সেই প্রচ্ছন্নমূর্ত্তি ইন্দ্রের প্রতি স্নেহপরিপ্লুত হইলেন। বস্তুতঃ বন্ধুজনকে সম্যক্ চিনিতে না পারিলেও বন্ধুত্ববশেই মন প্রহ্লাদিত হইয়া উঠে।

৯। অনন্তর দেবরাজ পুত্রের নিকট অতিথিজনোচিত পূজা পাইয়া আসনে উপবেশনপূর্ব্বক বক্ষ্যমাণ বাক্য বলিতে লাগিলেন।

श्रेयसीं तव सम्प्राप्ता गुणसम्पदमाकृतिः ।
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ॥ ११ ॥

शरदम्बुधरच्छाया-गत्वर्य्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्य्यन्तपरितापिनः ॥ १२ ॥

अन्वयः। त्वया साधु समारम्भि, यत् नवे वयसि तपः ( चर्य्यते ), तथाहि—मादृशः वर्षीयान् अपि प्रायः विषयैः ह्रियते ॥ वाच्य—त्वं साधु समारम्भाः, ( तपश्चरसि ) मादृशं वर्षीयांसं विषयाः हरन्ति ॥ १०

अन्वयः। तव आकृतिः श्रेयसीं गुणसम्पदं सम्प्राप्ता, लोके रम्यता सुलभा, हि, गुणार्ज्जनं दुर्लभम्। वाच्य—आकृत्या श्रेयसी गुणसम्पत् सम्प्राप्ता। रम्यतया सुलभया ( भूयते ), गुणार्ज्जनेन दुर्लभेन ( भूयते ) ॥ ११ ॥

अन्वयः। यौवनश्रियः शरदम्बुधरच्छाया गत्वर्य्यः, विषयाः आपातरम्याः पर्य्यन्तपरितापिनः। वाच्य—यौवनश्रीभिः शरदम्बुधरच्छाया—गत्वरीभिः ( भूयते ) विषयैः आपातरम्यैः—पर्य्यन्तपरितापिभिः ( भूयते ) ॥१२॥

अथ प्रथमं तावत् मुनिवदेन मुमुक्षुं प्रत्याह—त्वयेति। त्वया साधु समारम्भि सम्यक् उपक्रान्तम्। रभेः कर्म्मणि लुङ्। कुतः? यत् यस्मात् नवे वयसि यौवने तपश्चर्य्यते इति शेषः। तथाहि—अहम् इव दृश्यते असौ मादृशो वर्षीयान् अतिवृद्धोऽपि। "प्रियस्थिर" इत्यादिना वृद्धशब्दस्य वर्षादेशः। प्रायो विषयैर्ह्रियते आकृष्यते, किमु भवादृशो युवीयानिति भावः ॥ १० ॥

अथ एवमनारम्भे तव स्वाकारलाभोऽपि विफलः स्यादित्याशयेनाह—श्रेयसीमिति। तव आकृतिः मूर्त्तिः रम्या इति शेषः। श्रेयसीं श्रेष्ठां गुणसम्पदं तपःसमारम्भरूपां सम्प्राप्ता, अतो न निष्फला इति भावः। न च स्वाकाराः गुणाढ्याश्च कियन्तो न सन्तीति वाच्यमित्याह—लोक इति। लोके रम्यता रम्याकारता सुलभा हि, गुणार्जनं गुणसम्पादनं दुर्लभम्। त्वयि तूभयं सम्पद्यत इति हेम्नः परमामोद इति भावः ॥ ११ ॥

यदुक्तं "त्वया साधु समारम्भि" इति तदेवं साधुत्वं संसारनिःसारताख्यापनाय युग्मेन उपपादयति—शरदिति। यौवनश्रियस्तावत् शरदम्बुधरच्छाया इव गत्वर्य्यश्चञ्चलाः। "गत्वरश्च" इति क्वरबन्तो निपातः।

১০। তুমি এই নবীন বয়সেই তপশ্চর্য্যায় নিবিষ্ট হইয়াছ, সুতরাং তোমার এ উদ্যম প্রশংসনীয়। বলিতে কি,—আমাদের ন্যায় অতিবৃদ্ধ ব্যক্তিও প্রায় বিষয়জালে সমাকৃষ্ট হইয়া থাকে।

১১। তোমার রমণীয় আকৃতি উত্তম গুণসম্পদভাজন হইয়াছে ( ইহা অতি আনন্দের বিষয় )। বস্তুতঃ লোকে রম্যতা সুলভ, কিন্তু গুণার্জ্জন সুলভ নহে—দুর্লভ। ফল কথা, তোমাতে রম্যতা ও গুণসম্পত্তি উভয়ই বিদ্যমান। ইহাত' সোণায় সোহাগা।

अन्तकः पर्य्यवस्थाता जन्मिनः सन्ततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ १३ ॥
चित्तवानसि कल्याणी यत्त्वां मतिरुपस्थिता ।
विरुद्धः केवलं वेषः [शः] सन्देहयति मे मनः ॥१४॥

अन्वयः। सन्ततापदः जन्मिनः अन्तकः पर्य्यवस्थाता इति (हेतोः) त्याज्ये भवे भव्यो जनः मुक्तौ उत्तिष्ठते। वाच्य—अन्तकेन पर्य्यवस्थात्रा (भूयते) भव्येन जनेन उत्थीयते ॥ १३ ॥

अन्वयः। (त्वं) चित्तवान् असि, यत् त्वां कल्याणी मतिः उपस्थिता। किन्तु केवलं विरुद्धः वेषः मे मनः सन्देहयति। वाच्य—त्वया चित्तवता भूयते, कल्याण्या मत्या त्वम् उपस्थितः। विरुद्धेन वेशेन मनः सन्दिह्यते ॥ १४ ॥

"टिड्ढाणञ्" इत्यादिना ङीप्। विषयाः शब्दादयस्तु आपातरम्याः तत्कालरमणीयाः। "तदात्वे पात आपातः" इति वैजयन्ती। पर्य्यन्ते अवसाने परितापयन्ति दुःखं कुर्वन्तीति तथोक्ताः ॥ १२ ॥

अन्तक इति। किञ्च सन्तताः अनवच्छिन्ना आपदः क्लेशाः यस्य तस्य जन्मिनः प्राणिनः। "प्राणी तु चेतनो जन्मी" इत्यमरः। व्रीह्यादित्वात् इनिः। अन्तकः मृत्युः। पर्य्यवस्थाता प्रतिरोद्धा। प्रथमं तावत् जन्मिनः जन्मदुःखमेव दुस्तरं ततो जातस्य जीवनमपि सततं दुःखसम्भिन्नतया विषयुक्तान्नप्रायं तदपि मृत्युग्रस्तमिति। सः अयं "काकमांसं शुनोच्छिष्टं [दुर्गन्धं क्रमिसङ्कुलम्। म्लेच्छपक्वं सुरासिक्तं] स्वल्पं तदपि दुर्लभम्" इति न्यायादिति भावः। इत्युक्तहेतोस्त्याज्ये भवे संसारे भवतीति भव्यः योग्यः जनः भवादृश इति शेषः। "भव्यं सुखे शुभे चापि भेद्यवद्योग्यभाविनोः" इति विश्वः। "भव्यगेय" इत्यादिना कर्त्तरि निपातः। मुक्तौ मोक्षे उत्तिष्ठते उद्युक्तो भवति। "उदोऽनूर्द्ध्वकर्म्मणि" इति आत्मनेपदम् ॥ १३ ॥

सम्प्रति प्रशंसापूर्वकं स्वाभिसन्धिं दर्शयति—चित्तवानिति। चित्तवान् प्रशस्तचित्तः असि। प्रशंसायां मतुप्। कुतः? यतः त्वां कल्याणी साध्वी "बह्वादिभ्यश्च" इति ङीप्। मतिः उपस्थिता सङ्गता। किन्तु केवलम् एकं यथा तथा विरुद्धो वेषः मे मनः सन्देहयति संशययुक्तं करोति।

১২। যৌবনশ্রী শারদ জলদশ্রীর ন্যায় চঞ্চল, বিষয়সকল আপাতরম্য—কিন্তু পরিশেষে পরিতাপজনক।

১৩। প্রাণিমাত্রই (সংসারে জন্মাবধি) নিয়ত ক্লেশভোগী, মৃত্যু প্রাণিমাত্রেরই প্রতিরোধকর্ত্তা; তাই এই ত্যাজ্য সংসারে যোগ্য ব্যক্তি মোক্ষবিষয়ে উদ্যম করিয়া থাকেন।

**युयुत्सुनेव कवचं किमामुक्तमिदं त्वया।**
**तपस्विनो हि वसते केवलाजिनवल्कले॥ १५॥**
**प्रपित्सोः किन्तु ते मुक्तिं निस्पृहस्य कलेवरे।**
**महेषुधी धनुर्भीमं भूतानामनभिद्रुहः॥ १६॥**

अन्वयः। युयुत्सुना इव त्वया किम् इदं कवचम् आमुक्तम्? हि तपस्विनः केवलाजिनवल्कले वसते। वाच्य—युयुत्सुरिव त्वं किम् इदं कवचम् आमुक्तवान्? तपस्विभिः केवलाजिनवल्कले वस्येते॥ १५॥

अन्वयः। किञ्च मुक्तिं प्रपित्सोः कलेवरे निःस्पृहस्य भूतानाम् अनभिद्रुहः ते महेषुधी भीमं

यद्वा वेषः केवलं वेष एव इत्यर्थः। "केवलः कृत्स्न एके च" "केवलं चावधारिते" इति चोभयत्रापि शाश्वतः॥ १४॥

वेषविरोधमेवाह—युयुत्सुनेति युयुत्सुना इव योद्धुम् इच्छुना इव त्वया। युधेः सन्नन्तादुप्रत्ययः। किमिदं कवचं चर्म आमुक्तम् अर्पितम्, तत्र को विरोध इत्यत्राह—हि यस्मात् तपस्विनः केवले एके कवचाद्यसहचरिते इति यावत् ते च ते अजिनवल्कले च। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। वसते आच्छादयन्ति। अतस्तपस्विनस्ते कवचधारणं विरुद्धमित्यर्थः॥ १५॥

प्रपित्सोरिति। किञ्च मुक्तिं प्रपित्सोः प्राप्तुमिच्छोः। "सनि मीमा"-इत्यादिना इसादेशः। अत्र "लोपोऽभ्यासस्य" इति अभ्यासलोपः। अतो मुमुक्षुत्वादेव कलेवरे शरीरे निःस्पृहस्य गतस्पृहस्य निःस्पृहस्य अतो न आत्मरक्षार्थं धनुर्धारणं युक्तमित्यर्थः। नापि परहिंसार्थमित्याह—भूतानां जन्तूनाम्। "क्ष्मादौ जन्तौ च भूतानि" इति वैजयन्ती। "क्रुधद्रुहोरुपसृष्टयोः कर्म" इति कर्मसंज्ञायाम्। "कर्त्तृकर्मणोः कृति" इति कर्त्तरि षष्ठी। अनभिद्रुहः अहिंसकस्य। "सत्सूद्विष" इत्यादिना क्विप्। ते तव महेषुधी महानिषङ्गौ भीमं त्रासजनकं धनुश्च न समर्थयते शममित्युत्तरेणान्वयः। समर्थयते इति वचनविपरिणामः कार्य्यः॥ १६॥

১৪। তুমি প্রশস্তচিত্ত; যে হেতু তোমার কল্যাণদায়িনী মতি জন্মিয়াছে। কিন্তু কেবল এই বিরুদ্ধ বেশ আমার মনে সন্দেহ সঞ্চার করিতেছে।

১৫। যুযুৎসু ব্যক্তির ন্যায় তুমি গাত্রে কি এ চর্ম্ম লইয়াছ? দেখ,—তপস্বী জনেরা কেবল অজিন ও বল্কলই ধারণ করিয়া থাকেন।

১৬।১৭। আরও এক কথা,—তুমি মুমুক্ষু, সুতরাং কলেবরে তোমার স্পৃহা নাই; প্রাণিহিংসায়ও তোমার প্রবৃত্তি থাকিতে পারে না। এ অবস্থায় তোমার ঐ দুই মহেষুধি, ভয়ঙ্কর ধনু

भयङ्करः प्राणभृतां मृत्योर्भुज इवापरः।
असिस्तव तपस्थस्य न समर्थयते शमम्॥ १७॥

युग्मम्।

अयमत्रभवान्नूनमरातिष्वभिलाषुकः।
क्रोधलक्ष्म क्षमावन्तः क्वायुधं क्व तपोधनाः॥ १८॥

धनुश्च तथा मृत्योः अपरः भुज इव प्राणभृतां भयङ्करः असिः तपस्थस्य तव शमं न समर्थयते। वाच्य—महेषुधिभ्यां भीमेन तथा भयङ्करेण असिना शमो न समर्थ्यते॥ १६—१७॥

अन्वयः। अत्रभवान् अरातिषु जयम् अभिलाषुकः नूनं, क्रोधलक्ष्म आयुधं क्व, क्षमावन्तः तपोधनाः क्व? वाच्य—अत्रभवता जयमभिलाषुकेण (भूयते) क्रोधलक्ष्मणा आयुधेन (भूयते) क्षमावद्भिः तपोधनैः (भूयते)॥ १८॥

भयङ्कर इति। तथा मृत्योरपरो भुज इव प्राणभृतां प्राणिनां भयङ्करः। "मेघर्त्तिभयेषु कृञः" इति खच्प्रत्ययः। "अरुर्द्विष" इत्यादिना मुमागमः। असिः खड्गः, तपसि तिष्ठति इति तपस्थः तपश्चरन् इत्यर्थः। "सुपि स्थः" इति कप्रत्ययः। तस्य तव शमं शान्तिं न समर्थयते न सम्भावयति। किं शान्तस्य शस्त्रेणेति भावः॥ १७॥

ननु अशान्तस्य किं तपसा इत्याशङ्क्य जयार्थमित्याह—जयमिति। अत्रभवान् पूज्य इत्यर्थः। "इतराभ्योऽपि दृश्यन्ते" इति प्रथमार्थे प्राग्दिशीयस्त्रल्प्रत्ययः। सुप्सुपा इति समासः। "त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि" इति यादवः। अरातिषु शत्रुषु विषये जयमभिलाषुकः जयमिच्छुः। "लषपत" इत्यादिना उकञ्प्रत्ययः। "न लोक" इत्यादिना षष्ठीप्रतिषेधः। नूनमिति निश्चयः। "नूनं तर्केऽपि निश्चये" इत्यमरः। क्रोधस्य लक्ष्म कोपस्य लिङ्गम् आयुधं क्व? क्षमावन्तः शान्ता तपोधनाः क्व? क्रोधशान्त्योर्विरोधात् तत्कार्य्ययोः शस्त्रतपसोरपि एकत्र असङ्गतिश्च शस्त्रिणः ते तपो जयार्थं न तु मोक्षार्थमिति निश्चय इत्यर्थः॥ १८॥

এবং মৃত্যুর দ্বিতীয় ভুজের ন্যায় প্রাণিগণের ভয়ঙ্কর খড়্গ—তপোনিরত তোমার শান্তি সমর্থন করিতেছে না।

১৮। তুমি নিশ্চয়ই শত্রুজয়ে অভিলাষী; (অন্যথা) কোথায় বা কোপচিহ্ন আয়ুধ। আর কোথায়ই বা ক্ষমাশীল তপোধনগণ। ফল কথা, তুমি শস্ত্রধারী, তোমার এ তপস্যা শত্রুজয়ার্থ—মোক্ষার্থ নহে।

यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढ़ः पङ्कयत्यपः ॥१९॥
मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ २० ॥

अन्वयः। यः निःश्रेयसकरीः क्रियाः वधोदर्काः करोति मूढ़ः सः ग्लानिदोषच्छिदः स्वच्छाः अपः पङ्कयति। वाच्य—येन निःश्रेयसकर्य्यः क्रियाः वधोदर्काः क्रियन्ते मूढ़ेन तेन—आपः पङ्क्यन्ते ॥ १९ ॥

अन्वयः। (त्वं) हिंसादेः दोषस्य मूलम् अर्थकामौ मा स्म पुषः। हि तौ तत्त्वावबोधस्य दुरुच्छेदौ उपप्लवौ। वाच्य—(त्वया) मूलम् अर्थकामौ मा स्म पुष्यातां, ताभ्यां दुरुच्छेदाभ्याम् उपप्लवाभ्यां (भूयते) ॥ २० ॥

तपसो जयार्थत्वे दोषमाह—य इति। यः पुमान् निश्चितं श्रेयः निःश्रेयसं मुक्तिः। "अचतुर" इत्यादिना समासान्तो निपातः। "मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्रेयसामृतम्।" इत्यमरः। निःश्रेयसं कुर्वन्तीति निःश्रेयसकरोः निःश्रेयसहेतूनित्यर्थः। "कृञो हेतुताच्छील्यानुलोम्येषु" इति हेत्वर्थे टप्रत्ययः। टित्वात् ङोप्। क्रियाः तपोदानादिकर्माणि वधोदर्काः हिंसाफलकाः करोति। "उदर्कः फलमुत्तरम्" इत्यमरः। अत एव मूढ़ः सः पुमान् ग्लानिरेव दोषः तं छिन्दन्तीति ग्लानिदोषच्छिदः पिपासाहारिणीः। क्विप्। स्वच्छाः निर्मलाः अपः पङ्कयति पङ्कवतीः करोति। "णाविष्ठवद्भावे विन्मतोर्लुक्" इति मतुपो लुक्। महाफलसाधनस्य तपसः तुच्छफलैः विनियोगः स्वच्छाम्बुनः पङ्कसङ्करवत् प्रेक्षावद्भिर्गर्हित इत्यर्थः। अत्र "यत्तपसो वधोदर्कीकरणं तन्निर्मलस्य पयसः पङ्कसङ्करीकरणम्" इति वाक्यार्थान्तरमारोप्य प्रतिबिम्बकरणाक्षेपात् असम्भववस्तुसम्बन्धात् वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥ १९ ॥

ननु अर्थकामयोरपि मोक्षवत् पुरुषार्थत्वात् तपसस्तदर्थत्वे को दोषः तत्राह—मूलमिति। हिंसादेरिति। तद्गुणसंविज्ञानो बहुव्रीहिः। आदिशब्दात् अनृतस्तेयादीनां संग्रहः। दोषस्य अवगुणस्य मूलं कारणभूतौ। "स्त्रीकामा धनकामाश्च किं न कुर्वन्ति पातकम्" इति भावः। अर्थकामौ मा स्म पुषः नोपचिनुष्व। "स्मोत्तरे लुङ् च" इति लुङ्। "पुषादि" इत्यादिना च्लेरङादेशः। हि यस्मात् तौ अर्थकामौ तत्त्वावबोधस्य तत्त्व-

১৯। যে মুক্তিকরী ক্রিয়াকে হিংসাফলের উৎপাদিকা করিয়া তুলে, সেই মূঢ় ব্যক্তি গ্লানিরূপ দোষনাশক নির্ম্মল জলকে পঙ্কযুক্ত করিয়া থাকে।

अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ २१ ॥
या गम्याः सत्सहायानां यासु खेदो भयं यतः।
तासां किं यन्न दुःखाय विपदामिव सम्पदाम् ॥ २२ ॥

अन्वयः। भूतानाम् अभिद्रोहेण गत्वरीः श्रियः अर्ज्जयन् (जनः) उदन्वान् सिन्धूनाम् इव आपदां पात्रताम् एति। वाच्य—गत्वरीः श्रियः अर्ज्जयता (जनेन) उदन्वता इव पात्रता ईयते ॥ २१ ॥

अन्वयः। याः सत्सहायानां गम्याः यासु खेदः यतः भयं विपदाम् इव तासां सम्पदां न किं (अस्ति) यत् न दुःखाय (भवति)। वाच्य—...येन दुःखाय न (भूयते) ॥ २१ ॥

ज्ञानस्य मोक्षसाधनस्येति शेषः। दुरुच्छेदौ दुर्वारौ उपप्लवौ हिंसादिप्रवर्त्तकत्वात् अन्तकौ, अतः पुरुषार्थपरिपन्थिनौ एतौ न पुरुषार्थौ इत्यर्थः ॥ २० ॥

मुक्तिप्रतिबन्धकत्वात् अपुरुषार्थौ अर्थकामौ इत्युक्तं, तत्र अर्थस्य दुःखैकनिदानत्वादपि अपुरुषार्थत्वमिति पञ्चभिः प्रपञ्चयति—अभिद्रोहेणेत्यादि। भूतानाम् अभिद्रोहेण हिंसया गत्वरीः अस्थिराः श्रियः सम्पदः अर्जयन् जनः। उदकम् अस्तीति उदन्वान् उदधिः। "उदन्वानुदधौ च" इति निपातनात् साधुः। सिन्धूनां नदीनामिव आपदां विपदां पात्रतां मूलत्वम् एति ॥ २१ ॥

आपत्पात्रतामेव व्यनक्ति—या इति। याः सम्पदः सत्सहायानां विद्यमानसाधनानामेव पुंसां गम्याः साध्याः, विपदोऽपि सत्सहायानामेव गम्याः निस्तीर्य्या इत्यर्थः। "कृत्यानां कर्त्तरि वा" इति षष्ठी। यासु सतीषु खेदः रक्षणादिक्लेशः विपत्सु स्वत एवेति विशेषः। यतो याभ्यः सम्पद्भ्यः भयम् अनेकार्थमूलत्वादिति भावः। विपद्भ्यस्तु स्वरूपत एवेति भावः। किं बहुना, विपदामिव तासां सम्पदां सम्बन्धि न किम् अस्तीति शेषः। यत् दुःखाय न भवति सर्वं दुःखावहमेवेति भावः। यदाहुः—"अर्थानामर्जने दुःखमर्ज्जितानाञ्च रक्षणे। नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥" इति। अतो हेया इति भावः। अत्र यत् न दुःखाय इत्युत्तरवाक्यस्य यच्छब्दसामर्थ्यात् तासां किमिति पूर्ववाक्ये तच्छब्दोपादानं न अपेक्षते तदेतत् काव्यप्रकाशे स्पष्टम् ॥ २२ ॥

२०। তুমি হিংসাদি দোষের মূলীভূত অর্থ ও কাম পোষণ করিও না। কারণ ঐ দুইটীই তত্ত্বজ্ঞানোদয়ের দুরন্ত প্রতিবন্ধক।

২১। যে প্রাণী প্রাণিহিংসা দ্বারা চঞ্চল সম্পদ্ অর্জ্জন করে, উদধি যেমন নদীদিগের আশ্রয় হয়, তেমনি সে আপদ্রাশির পাত্র হইয়া থাকে।

दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः।
भोगान् भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ २३ ॥
नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ २४ ॥

अन्वयः। दुरासदान् विश्वासजन्मनः धृतेः उग्रान् अरीन् भोगान् आहेयान् भोगान् इव अध्यास्य आपत् न दुर्लभा। वाच्य—आपदा दुर्लभया न ( भूयते )॥ २३॥

अन्वयः। श्रियः जातु अन्तरज्ञाः न ( अतः ) आसां प्रियैः न भूयते। तासु मूढाः अमी आसक्ताः जन्तवः वामशीलाः हि। वाच्य—श्रीभिः अन्तरज्ञाभिः न ( भूयते ) प्रियाः न भवन्ति। अमीभिः मूढैः आसक्तैः जन्तुभिः वामशीलैः ( भूयते )॥ २४॥

दुरासदानिति। किञ्च दुरासदान् दुष्प्रापान् विश्वासात् जन्म यस्याः तस्याः। जन्मोत्तरपदत्वात् व्यधिकरणो बहुव्रीहिः। धृतेः सन्तोषस्य उग्रान् अरीन् धनिकस्य सर्वत्र अनाश्वाससम्भवाद्विस्रम्भसुखभञ्जकानित्यर्थः। भुजयन्ते इति भोगान् धनानि आहेयान् अहिषु भवान्। "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" इति ढञ्। भोगान् फणान् इव। "भोगः सुखे धने चाहेः शरीरफणयोरपि" इति उभयत्रापि विश्वः। अध्यास्य अधिष्ठाय आपत् विपत् न दुर्लभा। आशीविषमुखमिव नैष्कृन्तमिव भोगिनं पुमांसं बलात् आपदवस्कन्दतीत्यर्थः॥ २३॥

इतोऽपि श्रियो हेया इत्याह—नेति। श्रियः सम्पदः जातु कदाचित् अन्तरज्ञाः नीचानीचविशेषाभिज्ञा न भवन्ति। अतएव आसां श्रियां प्रियैर्न भूयते। न ताः कुत्रापि अनुरज्यन्तीत्यर्थः। नन्वयं स्त्रीदोषः पुरुषदोषो वा इति चेत्, तत्राह—मूढाः अमी जनाः तासु अननुरक्तासु अपि स्त्रीषु आसक्ताः स्त्रीषु इव स्त्रीषु अननुरक्तासु अनुरागः पुंसामेवायं दोष इत्यर्थः। किमर्थं तर्हि तासु एव सर्वेषामासक्तिरित्यर्थान्तरं न्यस्यति—वामेति। जन्तवो वामशीला वक्रस्वभावा हि। स्वभावस्य दुर्वारत्वादिति भावः॥ २४॥

२२। যাহারা সৎসহায়সম্পন্ন পুরুষগণের প্রাপ্য ( পক্ষে নিস্তার্য ) যাহাদের বিদ্যমানতায় খেদ (রক্ষণাদি ক্লেশ, পক্ষে অর্থাৎ অবিদ্যমানতায় স্বতই দুঃখ ) উপস্থিত হয়। এবং যাহাদের হইতে ভয় ( নানা অনর্থের মূল বলিয়া ) জন্মিয়া থাকে, তাদৃশ বিপদ্‌রাশির ন্যায় সম্পদ্‌রাশির এমন কি না আছে, যাহা না দুঃখের নিমিত্ত হয় ?

২৩। যাহা দুষ্প্রাপ্য এবং যাহা বিশ্বাসজনিত সন্তোষের প্রধান অরি অর্থাৎ বিশ্রম্ভ-সুখের মহান্ প্রতিবন্ধক, ফণিফণার ন্যায় সেই ভোগ উপভোগ করিলে বিপৎপ্রাপ্তি সহজেই হইয়া থাকে।

कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः॥ २५॥
कृतवानन्यदेहेषु कर्त्ता च विधुरं मनः।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह॥ २६॥
शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे॥ २७॥

अन्वयः। यत् सम्पदः अशीलेषु चञ्चला (अतः) स्तुतिपदे कः अपवादः? किन्तु क्षुद्राः साधुवृत्तान् अपि विक्षिपन्ति। वाच्य—सम्पद्भिः चञ्चलाभिः (भूयते) क्षुद्राभिः साधुवृत्ता अपि विक्षिप्यन्ते॥ २५॥

अन्वयः। अप्रियैः संयोगः इव प्रियैः सह विप्रयोगः, अन्यदेहेषु मनः विधुरं कृतवान् कर्त्ता च। वाच्य—संयोगेन विप्रयोगेन मनः विधुरं कृतं कर्त्तव्यञ्च॥ २६॥

यदुक्तम् "नान्तरज्ञाः श्रियः" इति तदेव भङ्ग्यन्तरेणाह—क इति। यत् सम्पदः अशीलेषु दुःशीलेषु विषये न तद्विरुद्धमुच्यते यच्चञ्चला इति। अतः स्तुतिपदे स्तुतिविषये तत्र कः अपवादः का निन्दा? किन्तु क्षुद्राः सम्पदः साधुवृत्तानपि विक्षिपन्ति एव जहति एव। तदेव तासां निन्दास्पदमित्यर्थः। तस्मात् अर्थो न पुरुषार्थ इति सन्दर्भार्थः॥ २५॥

ननु नार्थमहमर्थये किन्तु वीरधर्ममनुपालयन् वैरनिर्यातनमिच्छामीति आशङ्क्य तदपि परपीड़ात्मकत्वादयुक्तमिति श्लोकचतुष्टयेनाचष्टे—कृतवानिति। तत्र आत्मदृष्टान्तेनैव परपीड़ातो निवर्त्तितव्यमित्याशयेनाह—अप्रियैः अनिष्टवस्तुभिः संयोग इव प्रियैः इष्टवस्तुभिः सह विप्रयोगः विरहः अन्यदेहेषु स्वस्य एव देहान्तरेषु अतीतानागतेषु इति शेषः। मनो विधुरं दुःखितं कृतवान् कर्त्ता करिष्यति च। भविष्ये लुट्। तद्वर्त्तमाने च अनुभूयत इति शेषः। इष्टनाशो दुःखहेतुरिति सर्वत्रापि त्रैकालिकसिद्धमिति श्लोकार्थः॥ २६॥

২৪। লক্ষ্মী (সম্পদ্) কদাচ উত্তম অধম বিবেচনা করে না; কেহই লক্ষ্মীর প্রিয় হইবার নহে; তথাচ এই মূঢ় লোকেরা সেই অননুরক্ত লক্ষ্মীতেই অনুরক্ত, বস্তুতঃ জনগণ কুটিলস্বভাবই বটে।

২৫। সম্পদ্‌রাশি দুঃশীল জনে যে চঞ্চল হইয়া থাকে, এ চাঞ্চল্য বিরুদ্ধ নহে; কেন না, তাহারা তো চঞ্চলই; অতএব সম্পদের প্রশংসাব্যাপারে নিন্দার বিষয় কি? কিন্তু ক্ষুদ্র সম্পদ্‌রাশি যে সাধুশীল ব্যক্তিদিগকেও পরিত্যাগ করিয়া যায়, ইহাই তাহাদের নিন্দার বিষয়

২৬। অপ্রিয়সমাগমের ন্যায় প্রিয়বিরহ নিজের দেহান্তরেও মনকে দুঃখিত করিয়া থাকে এবং ভবিষ্যতেও করে।

तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा॥ २८॥
युक्तः प्रमाद्यसि हितादपेतः परितप्यसे।
यदि नेष्टात्मनः पीड़ा मा सञ्जि भवता जने॥२९॥

अन्वयः। प्रियसमागमे सति शून्यम् आकीर्णताम् एति, व्यसनम् उत्सवैः तुल्यं, विप्रलम्भः अपि लाभाय (भवति)। वाच्य—शून्येन आकीर्णता ईयते,—व्यसनेन...तुल्येन तथा विप्रलम्भेन (भूयते)॥२७।

अन्वयः। यदा इष्टेन रहितः, तदा रम्याणि अपि अरम्याणि, प्रियाः असवः अपि शल्यम्, (किञ्च तदा) सबन्धुः सन् अपि एकाकी। वाच्य—इष्टेन रहितेन (भूयते) रम्यैः अपि अरम्यैः (भूयते) सबन्धुना अपि एकाकिना (भूयते)॥ २८॥

अन्वयः। युक्तः सन् प्रमाद्यसि, हितात् अपेतः परितप्यसे, आत्मनः पीड़ा न इष्टा यदि तर्हि भवता जने (अपि) मा सञ्जि। वाच्य—युक्तेन प्रमाद्यते, अपेतेन परितप्यते, भवान् तां पीड़ां मा सञ्जत्॥ २९॥

सम्प्रति इष्टसमागमस्य सुखहेतुत्वमाह—शून्यमिति। प्रियसमागमे इष्टजनसंयोगे सति शून्यं रिक्तमपि आकीर्णतां सम्पूर्णतामिति सम्पद्ग्रम् इव प्रतीयते इत्यर्थः। व्यसनं विपत् अपि उत्सवैस्तुल्यम् "व्यसनं विपदि भ्रंशे" इत्यमरः। विप्रलम्भो वञ्चना प्रतारणमिति यावत्, सः अपि लाभाय। किं बहुना, प्रियसङ्गतस्य सर्वावस्थासु अपि सुखमेवेत्यर्थः॥ २७॥

पुनः प्रकारान्तरेण प्रियवियोगस्य दुःखहेतुत्वमाह—तदेति। तदा रम्याणि अपि अरम्याणि अमनोहराणि भवन्ति। किं बहुना, प्रिया असवः प्राणा अपि शल्यं शल्यवदसह्याः भवन्तीत्यर्थः। किञ्च तदा सबन्धुः सन् अपि एकाकी असहाय एव। "एकादाकिनिच्चासहाये" इति आकिनिच्प्रत्ययः। कदा इत्याकाङ्क्षायामाह—यदा इष्टेन रहितो भवति तदा सर्वमसह्यमिति॥ २८॥

युक्त इति। किञ्च युक्तः हितेनेति शेषः। हितेन इष्टेन युक्तः सन् प्रमाद्यसि प्रकर्षेण माद्यसि हृष्यसि। हितात् अपेतः परितप्यसे परितप्तो भवसि। तपेर्दैवादिकात् कर्त्तरि लट्। सत्यमेवं ततः किमतः आह—यदीति। पीड़ा आत्मनः स्वस्य च न इष्टा यदि तर्हि भवता जने

२७। ইষ্টজনের সমাগমে শূন্য—সম্পূর্ণতা প্রাপ্ত হয়, বিপদ্—উৎসবের সমান হইয়া থাকে এবং বিপ্রলম্ভও লাভনিমিত্তক হইয়া দাঁড়ায়।

২৮। যখন ইষ্টজনের সহিত বিযুক্ত হওয়া যায়, তখন রম্যও অরম্য হয় এবং বন্ধুযুক্ত থাকিলেও একাকী থাকার ন্যায় বোধ হইয়া থাকে।

जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम्।
भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः॥३०

विजहीहि रणोत्साहं मा तपः साधु नीनशः।
उच्छेदं जन्मनः कर्त्तुमेधि शान्तस्तपोधन॥ ३१॥

अन्वयः। अस्य जन्मिनः स्थितिं लक्ष्मीम् इव चलाचलां विद्वान् भवान् न्याय्यं मास्म वधीत्, हि साधवः न्यायाधाराः ( भवन्ति )। वाच्य—स्थितिं लक्ष्मीमिव चलाचलां विदुषा भवता न्याय्यं मा घानि साधुभिः न्यायाधारैः ( भूयते ) ॥ ३० ॥

अन्वयः। हे तपोधन! त्वं रणोत्साहं विजहीहि, साधु तपः मा नीनशः ( किन्तु ) जन्मनः उच्छेदं कर्त्तुं शान्तः एधि। वाच्य—त्वया रणोत्साहः हीयतां, साधु तपः मा नाशि" शान्तेन भूयताम् ॥ ३१ ॥

परस्मिन्नपि मा सञ्जि न सञ्जयताम्। सञ्जतेर्णयन्तात् कर्म्मणि लुङ्। आत्म-दृष्टान्तेन परपीड़ातो निवर्त्तितव्यमित्यर्थः, पीड़ायाः परात्मनोः समत्वात्॥२९

अथ देहास्थैर्य्यश्रद्धया च परपीड़ा न कार्य्या इत्याह—जन्मिन इति। अस्य जन्मिनः उत्पत्तिधर्म्मिकस्य शरीरिणः। व्रीह्यादित्वादिनिः। स्थितिं लक्ष्मीमिव चलाचलां चञ्चलां जन्मिधर्म्मत्वादेव चञ्चलाम् अनित्यामित्यर्थः। चलतेः पचाद्यच् "चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्" इति द्विर्भावः अभ्यासस्य अगागमश्च। विद्वान् जानन् इत्यर्थः। "विदेः शतुर्वसु" इति वैकल्पिको वसुरादेशः। भवान् न्यायादनपेतं न्याय्यम्। "धर्म्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः। मा स्म वधीत्, मा नाशयेत्यर्थः। "स्मोत्तरे लुङ् च" इति लुङ्। "लुङि च" इति हनो वधादेशः। "शेषे प्रथमः" इति प्रथमपुरुषः। हि यस्मात् साधवः न्यायाधाराः न्यायावलम्बाः। बहुव्रीहिः तत्पुरुषो वा। न्यायत्यागे वा। साधुत्वमेव न स्यादिति भावः। "न्यायाचाराः" इति पाठे न्यायमाचरन्तीति तथोक्ताः। कर्म्मणि अण्॥ ३०॥

तर्हि किं मे कर्त्तव्यम्, तत्राह—विजहीहीति। हे तपोधन! रणोत्साहं रणोद्योगम्। लोकोत्तरेषु कार्य्येषु स्थेयान् प्रयत्नः उत्साहः तं विजहीहि त्यज। "आ च हौ" इतीकारः। साधु समीचीनं निःश्रेयस्करत्वा

২৯। নিজে যখন প্রিয় জনের সহিত মিলিত হও তখন হৃষ্ট হইয়া থাক, আর যখন প্রিয়বিরহিত হও, তখন পরিতাপ ভোগ কর; সুতরাং যে পীড়া নিজের ঈপ্সিত নয়, তাহা তুমি পরের প্রতি প্রয়োগ করিও না।

৩০। এই উৎপত্তিধর্ম্মিক দেহধারীমাত্রেরই স্থিতি লক্ষ্মীর ন্যায় চঞ্চল জানিয়া তুমি ন্যায্য পথ হইতে বিচলিত হইও না; কেন না সাধুগণ ন্যায়াবলম্বনেই অবস্থিত।

जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः।
जितेषु ननु लोकोऽयं तेषु कृत्स्नस्त्वया जितः ॥३२॥
परवानर्थसंसिद्धौ नीचवृत्तिरपत्रपः।
अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम्॥ ३३ ॥

अन्वयः। (त्वया) दुर्जयाः चक्षुरादयः देहे (वर्त्तमानाः) रिपवः जीयन्तां, तेषु जितेषु (सत्सु) अयं कृत्स्नः लोकः जितः। वाच्य—(त्वं) दुर्जयान् चक्षुरादीन् रिपून् जय। अनेन कृत्स्नेन लोकेन जितेन (भूयते) ॥ ३२ ॥

अन्वयः। अर्थसंसिद्धौ परवान् नीचवृत्तिः अपत्रपः अविधेयेन्द्रियः पुमान् गौरिव पुंसां विधेयताम् एति। वाच्य—परवता नीचवृत्तिना अपत्रपेण अविधेयेन्द्रियेण पुंसा गवा इव विधेयता ईयते ॥ ३३ ॥

दिति भावः। तपः मा नीनशः न नाशय। नश्यतेर्ण्यन्तान्माङ्योगादाशिषि लुङ् अड़ागमनिषेधश्च। किन्तु जन्मनः उच्छेदं कर्त्तुं मोक्षं साधयितुमित्यर्थः। शान्तः एधि, विजिगीषानिवृत्तो भवेत्यर्थः। "हुझल्भ्यो हेर्धिः" इति धिः, "ध्वसोरेद्धावभ्यासलोपश्च" इतीत्वकार इति ॥ ३१ ॥

अथ सर्वथा मे विजयकण्डूतिर्न निवर्त्तते इत्याशङ्का तर्हि अन्तःशत्रुविजयेन विधीयतां तदपनोद इत्याह—जीयन्तामिति। दुर्जया अजय्याः चक्षुरादयः देहे वर्त्तमानाः रिपवः जीयन्तां, यस्मात् तेषु अन्तःशत्रुषु जितेषु सत्सु त्वया अयं कृत्स्नो लोको जितः। ननु किमुत अन्ये शत्रवः तदन्तर्गता इत्यर्थः। जितेन्द्रियस्य इन्द्रियार्थनिष्पृहस्य निर्भरवैरानुदयात् विजयव्यपदेशः ॥ ३२ ॥

अजितेन्द्रियस्य अनिष्टमाचष्टे—परवानिति। अर्थसंसिद्धौ अव्यवहारादिस्वार्थसाधने परवान् पराधीनः। "परतन्त्रः पराधीनः परवान्" इत्यमरः। नीचवृत्तिः कर्षणवहनादिनिकृष्टकर्मा, अपत्रपः निर्लज्जः, अविधेयेन्द्रियः अजितेन्द्रियः। पुमान् गौः बलीवर्द इव पुंसां विधेयतां यथोक्तकारितां प्रेष्यतामिति यावत्। "विधेयो विनयग्राही वचने स्थित आश्रवः" इत्यमरः। एति प्राप्नोति उपमालङ्कारोऽयम्। प्रकृताप्रकृतयोरर्थसाधर्म्यात् श्लेषे तु शब्दमात्रसाधर्म्यम् इति ॥ ३३ ॥

৩১। হে তপোধন! যুদ্ধোদ্যম পরিত্যাগ কর, এই মহতী তপস্যা নষ্ট করিও না; পরন্তু পুনর্জন্ম নাশের জন্য বিজিগীষাবিমুখ হইয়া থাক।

৩২। (যদি একান্তই জয়েচ্ছা হইয়া থাকে) তবে দেহস্থ দুর্জ্জয় চক্ষুরাদি ইন্দ্রিয় রিপুদিগকে জয় কর, তাহাদিগকে জয় করিলেই এই সমগ্র লোক জয় করা হইবে।

৩৩। যে পুরুষ স্বার্থসাধনে পরাধীন, নীচবৃত্তি, নির্লজ্জ ও অজিতেন্দ্রিয়, তাহাকে (উল্লিখিত সকল বিশেষণবিশিষ্ট) বলীবর্দ্দের ন্যায় সমস্ত পুরুষের অধীন হইতে হয়।

श्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी ।
इति स्वप्नोपमान्मत्वा कामान्मागास्तदङ्गताम् ॥ ३४ ॥
श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥३५॥
विविक्तेऽस्मिन्नगे भूयः प्लाविते जह्नुकन्यया ।
प्रत्यासीदति मुक्तिस्त्वां पुरा मा भूरुदायुधः ॥ ३६ ॥

अन्वयः । अधुनातनी सुखसंवित्तिः श्वः त्वया स्मरणीया इति कामान् स्वप्नोपमान् मत्वा तदङ्गतां मा गाः । वाच्य—"सुखसंवित्तिं त्वं स्मरिष्यसि, तदङ्गता मा गायि ॥ ३४ ॥

अन्वयः । श्रद्धेयाः तथा विप्रलब्धारः तथा प्रियाः अपि विप्रियकारिणः त्यजन्तोऽपि सुदुस्त्यजाः कामाः कष्टाः शत्रवः हि । वाच्य—श्रद्धेयैः विप्रलब्धृभिः प्रियैः विप्रियकारिभिः त्यजद्भिः सुदुस्त्यजैः कामैः कष्टैः शत्रुभिः (भूयते) ॥ ३५ ॥

अन्वयः । विविक्ते जह्नुकन्यया भूयः प्लाविते अस्मिन् नगे त्वां मुक्तिः पुरा प्रत्यासीदति, उदायुधः मा भूः । वाच्य—मुक्त्या प्रत्यासीद्यते । उदायुधेन ( त्वया ) मा भावि ॥ ३६ ॥

न केवलं हिंसादिदोषमूलत्वात् विषयाणां हेयत्वं किन्तु अपारमार्थिकत्वादपीत्याह—श्व इति । अधुना भवा अधुनातनी इदानीन्तनी । "सायं चिरम्" इत्यादिना ट्यु प्रत्ययः । सुखसंवित्तिः सुखानुभवः श्वः परेऽहनि त्वया स्मरणीया न तु अनुभवनीया इति हेतोः । काम्यन्त इति कामाः विषयाः तान् स्वप्नोपमान् स्वप्नतुल्यान् मत्वा तात्त्विका निश्चित्य तदङ्गतां तच्छेषत्वं कामपरतन्त्रतां मा गा न गच्छ । "इणो गा लुङि" इति गादेशः ॥ ३४ ॥

इतोऽपि हेयाः कामा इत्याह—श्रद्धेया इति । श्रद्धातुमर्हाः श्रद्धेयाः विश्वसनीयाः तथा विप्रलब्धारः प्रतारकाः । विश्वासघातका इत्यर्थः । तथा प्रीणयन्तीति प्रियाः प्रीतिजनकाः । "इगुपध" इत्यादिना कप्रत्ययः । तथापि विप्रियकारिणः दुःखजननशीलाः । किञ्च त्यजन्तः अपि पुरुषं विहाय गच्छन्तोऽपि सुदुस्त्यजाः स्वयं तेन त्यक्तुमशक्याः कामाः विषयाः कष्टाः कुत्सिताः शत्रवो हि प्रसिद्धशत्रुः वैधर्म्यादिति भावः । अत्र श्रद्धेयत्वादीनां विप्रलम्भकत्वादीनाञ्च एकत्र विरोधः विषयस्वाभाव्येन समाधीयते इति विरोधाभासोऽलङ्कारः । तेन च कामानां प्रसिद्धशत्रुवैधर्म्यं व्यतिरेकेण व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३५ ॥

৩৪। পূর্ব্ব দিন তুমি যে সুখানুভব কর, পর দিন তাহা তোমার স্মরণীয় হইয়া থাকে ; ( অনুভব করিতে পার না ) অতএব বিষয়সমূহকে স্বপ্নোপম মনে করিয়া তুমি তাহার অধীন হইও না।

৩৫। বিষয়সকল বিশ্বাসের পাত্র হইলেও প্রতারক, প্রীতিজনক হইলেও দুঃখজনক; উহারা পরিত্যাগ করিয়া গেলেও উহাদিগকে অতি যত্নেও ত্যাগ করা যায় না। এ হেন বিষয়রাশি কুৎসিৎ শত্রুমধ্যেই গ্রহণীয়।

व्याहृत्य मरुतां पत्याविति वाचमवस्थिते।
वचः प्रश्रयगम्भीरमथोवाच कपिध्वजः॥ ३७॥

प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।
साकाङ्क्षमनुपस्कारं विष्वग्गतिनिराकुलम्॥ ३८॥

अन्वयः। मरुतां पत्यौ इति वाचं व्याहृत्य अवस्थिते अथ कपिध्वजः प्रश्रयगम्भीरं वचः उवाच।
वाच्य—कपिध्वजेन ऊचे॥ ३७॥

अन्वयः—प्रसादरम्यम् ओजस्वि गरीयः लाघवान्वितं साकाङ्क्षम् अनुपस्कारं विष्वग्गतिनिराकुलं
न्यायनिर्णीतसारत्वात् आगमे निरपेक्षम् इव अन्येषाम् अप्रकम्प्यतया आम्नायवचनोपमम् अन्यैः

तर्हि किं कर्त्तव्यमित्याशङ्क्य उपसंहरन्नाह—विविक्त इति। विविक्ते विजने। "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः। जह्नु-कन्यया गङ्गया भूयो भूयिष्ठं पुनःपुनर्वा। "भूयःपुनः पुनः स्यात् भूतार्थे पुनरव्ययम्" इति विश्वः। प्राविते सिक्ते, "पाविते" इति पाठे पवित्रीकृते इत्यर्थः। अस्मिन् नगे इन्द्रकीले त्वां मुक्तिः पुरा निकटे प्रत्यासीदति सन्निकृष्टा भविष्यतीत्यर्थः। "पुरा पुराणे निकटे प्रबन्धातीतभाविषु" इति विश्वः। उदायुधः गृहीतशस्त्रः मा भूः शस्त्रं विमुञ्चेत्यर्थः॥ ३६॥

व्याहृत्येति। मरुतां पत्यौ देवेन्द्रे इति वाचं व्याहृत्य उक्त्वा अवस्थिते सति तूष्णीं स्थिते सति। अथ कपिध्वजः अर्जुनः प्रश्रयगम्भीरं विनयमधुरम्। "विनयप्रश्रयौ समौ" इति यादवः। वच उवाच उक्तवान्॥ ३७॥

किमुवाच इत्यपेक्षायां आदौ चतुर्भिः इन्द्रवाक्यमुपश्लोकयन् आह—प्रसादेति। प्रसादः अत्र प्रसिद्धार्थपदत्वं तेन रम्यम्। "प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते" इति लक्षणात्। ओजस्वि समासभूयिष्ठम्। "ओजः समासभूयस्त्वम्" इति शासनात्। गरीयः अर्थभूयस्त्वपरिगतं न तु शब्दाडम्बरमात्रमित्यर्थः। लाघवान्वितं विस्तरदोषरहितम्। साकाङ्क्षमाकाङ्क्षावत्पदकदम्बात्मकं न तु दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः। अनुपस्कारम् अध्याहारदोषरहितम्। विष्वग्गतिकृत् स्वार्थप्रतिपादकं न तु सावशेषार्थम्, अत एव निराकुलम् असङ्कीर्णार्थम्॥ ३८॥

৩৬। তপোধন! এই পুনঃপুনঃ স্বর্গগঙ্গাপয়ঃপ্লাবিত বিজন ইন্দ্রকীলপর্ব্বত-প্রদেশে অচিরেই মুক্তি তোমার নিকটস্থ হইবে, তুমি নিরস্ত্র হও।

৩৭। দেবরাজ এই কথা বলিয়া অবস্থান করিলে অর্জ্জুন বিনয় মধুরবচন বলিতে লাগিলেন।

৩৮—৪১। যে বক্তা এরূপ আশ্রয়সম্পন্ন নহেন, তাদৃশ কোন্ ব্যক্তি ঈদৃশ গুণসম্পন্ন প্রিয়বাক্য বলিতে পারেন? আপনার এ বাক্য—প্রসিদ্ধ পদ ও অর্থসম্পন্ন, সমাসবহুল, অর্থগৌরব-শালি, বিস্তৃতিদোষরহিত আকাঙ্ক্ষাযুক্ত পদকদম্বাত্মক, অধ্যাহারদোষবর্জ্জিত, সম্পূর্ণ অর্থপ্রতি-

न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥ ३९ ॥
अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्य्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ॥ ४० ॥
इदमीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्य्यात् कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ४१ ॥

अलङ्घ्यत्वात् क्षुभितोदन्वदूर्ज्जितम् औदार्य्यात् अर्थसम्पत्तेः ऋषेः चित्तम् इव शान्तम्, इदम् ईदृग्गुणोपेतं लब्धावसरसाधनं प्रियं वाक्यं कः व्याकुर्य्यात् यः वक्ता ईदृगाशयः न । वाच्य—...वाक्यं येन व्याक्रियेत ॥ ३८—४१ ॥

न्यायेति । पुनः न्यायेन युक्त्या निर्णीतसारत्वात् निश्चितार्थत्वात् हेतोः आगमे शास्त्रे विषये निरपेक्षं स्वतन्त्रमिव युक्तिदार्ढ्यात् एवं प्रतीयते । वस्तुतस्तु शास्त्रसिद्धार्थमिवेति इवशब्दार्थः । किञ्च अन्येषां प्रतिवादिनाम् अप्रकम्प्यतया अनुमानादिभिः अबाध्यत्वात् अप्रत्याख्येयतया आम्नायवचनोपमं वेदवाक्यतुल्यम् इत्यर्थः ॥३९॥

अलङ्घ्यत्वादिति । अन्यैः जनैः अलङ्घ्यत्वात् अनुल्लङ्घनीयत्वात् क्षुभितोदन्वदूर्जितम् उद्वेलाम्भोधिगम्भीरम् औदार्य्यात् उक्तिविशेषत्वात् श्लाघ्यविशेषणत्वात् वा । तदुक्तं दण्डिना—"उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते । तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः । श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ॥" इति । "अग्राम्यार्थत्वात्" इति केचित्, अन्यत्र त्यागित्वात् इत्यर्थः । अर्थसम्पत्तेः प्रयोजनसम्पत्तेः अन्यत्र अणिमादिसमृद्धेः ऋषेः मुनेः । चित्तम् इव शान्तं सौम्यम् ॥४०॥

इदमिति । इदम् ईदृग्गुणोपेतं यथोक्तगुणयुक्तम् । इदम् उपपदात् दृशेः क्विप् । "इदंकिमोरीशकी" इति ईशादेशः । लब्धे प्राप्ते अवसरसाधने कालोपायौ येन तत् प्रियं प्रीतिकरं वाक्यं कः वक्ता व्याकुर्य्यात् व्याहरेत्, यः वक्ता न ईदृगाशयः ईदृग्विवक्षावान् न भवति ईदृग्बुद्धिशाली न भवति इति शेषः । तस्य अर्थस्य वक्तुम् अशक्यत्वात् इति भावः ॥ ४१ ॥

পাদক ও সঙ্কীর্ণার্থ হীন, যুক্তি দ্বারা অর্থ নিশ্চয় করা হইয়াছে বলিয়া উহা শাস্ত্র বিষয়ে যেন স্বতন্ত্রবৎ প্রতীয়মান হইয়াছে; (বাস্তবিক কিন্তু উহার অর্থ শাস্ত্রসিদ্ধ) অপিচ কোন প্রতিবাদী অনুমানাদি দ্বারা বাধিত করিতে পারে না বলিয়া উহা যেন বেদবাক্য তুল্য অন্যের অলঙ্ঘ্য, তাই ঐ বাক্য ক্ষুভিত জলধিবৎ গম্ভীর, এবং ঔদার্য্য ও অর্থসম্পদে (ঋষিপক্ষে অণিমাদি সমৃদ্ধিহেতু) ঋষিচিত্তের ন্যায় শান্ত, উহা অবসরমতই পরিব্যক্ত ও উপায় প্রাপ্ত হইয়াছে।

न ज्ञातं तात यत्नस्य पौर्वापर्य्यममुष्य ते।
शासितुं येन मां धर्मं मुनिभिस्तुल्यमिच्छसि॥ ४२ ॥
अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि।
व्रजत्यफलतामेव नयद्रुह इवेहितम्॥ ४३ ॥
श्रेयसोऽप्यस्य ते तात वचसो नास्मि भाजनम्।
नभसः स्फुटतारस्य रात्रेरिव विपर्य्ययः॥ ४४ ॥

अन्वयः। हे तात! अमुष्य यत्नस्य पौर्वापर्य्यं ते न ज्ञातं, येन मां मुनिभिः तुल्यं धर्मं शासितुं इच्छसि। वाच्य—पौर्वापर्य्यं त्वं न ज्ञातवान्, त्वया इष्यते॥ ४२॥

अन्वयः। अविज्ञातप्रबन्धस्य वाचस्पतेः अपि वचः नयद्रुहः ईहितम् इव अफलतां व्रजति। वाच्य—···वचसा···ईहितेन इव अफलता व्रज्यते॥ ४३॥

अन्वयः। हे तात! श्रेयसः अपि अस्य ते वचसः रात्रेः विपर्य्ययः स्फुटतारस्य नभसः इव भाजनं न अस्मि। वाच्य—··मया विपर्य्ययेण इव भाजनेन न भूयते॥ ४४॥

एवमिन्द्रवाक्यम् उपश्लोक्य नाहमस्य उपदेशस्य अधिकारी इति परिहरति—नेति। हे तात! अमुष्य यत्नस्य तपोरूपस्य अस्य मदीययोगस्य पूर्वं च अपरञ्च पूर्वापरे एव पौर्वापर्य्यं कारणं फलञ्च। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् प्रत्ययः। ते तव न ज्ञातं त्वया न ज्ञायते इत्यर्थः। "मतिबुद्धि" इत्यादिना वर्त्तमाने क्तः। तद्योगात् एव षष्ठी। कुतः? येन कारणेन मां मुनिभिः तुल्यं सदृशं धर्मं मोक्षधर्मं शासितुम् उपदेष्टुम् इच्छसि। शासिरयं दुहादित्वात् द्विकर्मको ज्ञेयः॥ ४२॥

अथ पौर्वापर्य्यम् अज्ञात्वा अपि उपदेशे दोषमाह—अविज्ञातेति। अविज्ञातः प्रबन्धः पूर्वापरसङ्गतिर्येन तस्य वाचस्पतेः बृहस्पतेः अपि। कस्कादित्वात् सः, अथवा "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" इति सकारः, एतस्मात् एव ज्ञापकात् "अलुक्" इति केचित्। वच उपदेशो नयद्रुहो नीतिविरुद्धकारिणः पुरुषस्य ईहितम् उद्योगः इव अफलतां निष्फलत्वं व्रजति एव गच्छति एव॥ ४३॥

ननु सदुपदेशस्य कुतः वैफल्यम् इति आशङ्क्य सः अपि अस्थाने प्रयुक्तश्चेत् ऊषरक्षेत्रे शालिबीजवत् विफल एव इत्याशयेनाह—

৪২। হে তাত। আপনি আমার এই প্রযত্নের পৌর্ব্বাপর্য্য জানেন না, তাই আমাকে মুনিজনোচিত মোক্ষধর্ম্ম উপদেশ করিতে অভিলাষী হইয়াছেন।

৪৩। কার্য্যের পূর্ব্বাপরসঙ্গতি জানা না থাকিলে বৃহস্পতির বাক্যও নীতিবিরোধী পুরুষের চেষ্টার ন্যায় বিফল হইয়া থাকে।

क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥ ४५ ॥

अन्वयः। अहं क्षत्रियः पाण्डोस्तनयः पार्थः धनञ्जयः दायादैः प्रास्तस्य ज्येष्ठस्य भ्रातुः शासने स्थितः।
वाच्य—मया · धनञ्जयेन स्थितम् ॥ ४५ ॥

श्रेयस इति। हे तात! "पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति। श्रेयसोऽपि हितार्थयोगात् प्रशस्ततरस्यापि अस्य ते तव वचसः हितोपदेशरूपस्य रात्रेः विपर्य्ययः दिवसः स्फुटतारस्य व्यक्ततारकस्य नभसः इव भाजनं पात्रं न अस्मि। अनधिकारित्वात् इति भावः। अत्र अह्नः नभोमात्रसम्बन्धसम्भवे अपि तारासम्बन्धासम्भवात् तद्विशिष्टनभःसम्बन्धविरोधात् युक्तं तारकितस्य नभसः न पात्रम् अहरिति ॥ ४४ ॥

कुतस्ते मोक्षोपदेशानधिकारित्वम्? किञ्च ते तपसः पौर्वापर्य्यं कथं न जाने इति आशङ्क्य तत् सर्वं स्वजात्यादिकथनपूर्वकं निरूपयति—क्षत्रिय इति। अहं क्षत्रियः क्षत्रियकुले जातः। तत्र अपि महाकुले प्रसूतः वीरसन्तानश्च इत्याह—पाण्डोस्तनय इति। तत्रापि कौन्तेयः अस्मि न माद्रेय इत्याह—पार्थ इति। पृथा कुन्ती तत्सुतः पार्थः। "तस्यापत्यम्" इत्यण्। अर्जुनः अहं महावीरश्च इत्याह। धनञ्जय इति। उत्तरकुरून् विजित्य धनाहरणात् धनञ्जयः अस्मि इत्यर्थः। धनञ्जय इति उक्ते शरीरस्थः वायुः सर्पविशेषो वा स्यात् तदर्थं पार्थः। गन्धर्वः अपि कश्चित् पृथासुतः अस्ति, तदर्थं पाण्डोः सुतः नैमिषारण्ये पाण्डुः विप्रः तत्पत्नी पृथा नाम काचित् ब्राह्मणी तत्पुत्रः अपि स्यात् तदर्थं क्षत्रिय इति। अथ एवं चेत् किमर्थं तर्हि तपस्यसि मोक्षार्थं वा किं न तपस्यसि? तत्राह—स्थित इति। दायं पैतृकं धनम् आददते इति दायादाः ज्ञातयः। "दायादौ ज्ञातिपुत्रयोः" इति। "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इति च विश्वः। 'स्वामीश्वरा'दिसूत्रेण सोपसर्गात् अपि दायादेति कप्रत्ययान्तः निपातनात् साधुः। तैः प्रास्तस्य राज्यात् निरस्तस्य वैरिनिर्यातनार्थिन इत्यर्थः। ज्येष्ठस्य भ्रातुः युधिष्ठिरस्य। वृद्धशब्दात् इष्ठन्प्रत्ययः वृद्धस्य च ज्यादेशः। शासने निदेशे स्थितः तदाज्ञया तपस्यामि इत्यर्थः। अन्यथा मानहानिः सौभ्रात्रभङ्गः पूज्यपूजाव्यतिक्रमदोषश्च स्यात् इति भावः। अतएव हिंसे-

৪৪। হে তাত! আপনার বাক্য শ্রেয়স্কর হইলেও দিবস যেমন নক্ষত্ররাজিপরিপূরিত নভোমণ্ডলের ভাজন হইতে পারে না, তেমনি আমিও তাহার পাত্র হইতে পারিতেছি না। ( কারণ আমি ওরূপ উপদেশ বাক্যের অনধিকারী )।

कृष्णद्वैपायनादेशात् बिभर्मि व्रतमीदृशम् ।
भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः ॥ ४६ ॥
दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥ ४७ ॥

अन्वयः। (अहं) कृष्णद्वैपायनादेशात् ईदृशं व्रतं बिभर्मि, स्वाराध्यस्य मरुत्वतः भृशम् आराधने यत्तः। वाच्य—(मया) व्रतं भ्रियते···यत्तम् ॥ ४६ ॥

अन्वयः। दुरक्षान् दीव्यता राज्ञा (युधिष्ठिरेण) राज्यम् आत्मा वयं वधूः पणतां नीतानि। भवितव्यता ईदृशी नूनम्। वाच्य—दुरक्षान् दीव्यन् राजा राज्यम् आत्मानम् वधूम् अस्मान् पणतां नीतवान् ॥ ४७ ॥

केरसस्य रागद्वेषकषायितचेतसः कुतो मे मोक्षाधिकार इति तात्पर्य्यार्थः। साभिप्रायविशेषणत्वात् परिकरालङ्कारः ॥ ४५ ॥

यदुक्तम् "विरुद्धः केवलं वेषः" इति तत्र उत्तरमाह—कृष्णेति। (द्वीपः अयनं जन्मभूमिः यस्य सः द्वीपायनः स एव द्वैपायनः व्यासः।) प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः। स एव (कृष्णवर्णत्वात् कृष्णद्वैपायनः।) तस्य आदेशात् उपदेशात् ईदृशं विरुद्धवेशमित्यर्थः। व्रतं तपोनियमं बिभर्मि धारयामि न तु स्वेच्छया इति भावः। अथ उपास्यां देवतामाह—भृशमिति। स्वाराध्यस्य सुखम् आराध्यस्य। प्रादिसमासः। "स्वाराधस्य" इति पाठे उपसृष्टात् खल्प्रत्ययः। मरुत्वतः इन्द्रस्य। भृशं सम्यक् आराधने यत्तः प्रयत्नवान् इत्यर्थः। तस्य क्षत्रियदैवतत्वात् इति भावः ॥ ४६ ॥

(ननु भवादृशभ्रातृसहायस्य महावीरस्य युधिष्ठिरस्य कथम् अरिपरिभवप्राप्तिः?) इत्यत आह—दुरक्षानिति। दुरक्षान् कपटपाशकैरित्यर्थः। "दिवः कर्म च" इति करणे कर्मसंज्ञा। दीव्यता। "आहूतो न निवर्त्तेत द्यूतादपि रणादपि" इति शास्त्रात्। न तु व्यसनितया इति भावः। राज्ञा युधिष्ठिरेण राज्यं राष्ट्रम् आत्मा स्वयं वयं चत्वारः अनुजाः वधूः जाया द्रौपदी च पणतां ग्लहत्वम्। "पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते"

৪৫। আমি—ক্ষত্রিয়, পাণ্ডুনন্দন, কুন্তীগর্ভজাত, ধনঞ্জয়। অরিগণ-নির্বাসিত জ্যেষ্ঠ ভ্রাতা যুধিষ্ঠিরের নিদেশে অবস্থান করিতেছি ; অর্থাৎ তাঁহারই আজ্ঞায় তপস্যা করিতেছি।

৪৬। আমি কৃষ্ণদ্বৈপায়নের আদেশ অনুসারে এইরূপ ব্রত ধারণ করিতেছি :—সুখসমারাধ্য ইন্দ্রেরই সম্যক্ আরাধনা করিতে যত্নবান্ হইয়াছি।

**तेनानुजसहायेन द्रौपद्या च मया विना।**
**भृशमायामियामासु यामिनीष्वभितप्यते॥ ४८॥**
**हृतोत्तरीयान् प्रसभं सभायामागतह्रियः।**
**मर्मच्छिदा नो वचसा निरतक्षन्नरातयः॥ ४९॥**

अन्वयः। अनुजसहायेन तेन द्रौपद्या च मया विना आयामियामासु यामिनीषु भृशम् अभितप्यते। वाच्य—अनुजसहायः सः द्रौपदी अभितप्यते॥ ४८॥

अन्वयः। अरातयः सभायां प्रसभं हृतोत्तरीयान् (अतः) आगतह्रियः नः मर्मच्छिदा वचसा निरतक्षन्। वाच्य—अरातिभिः हृतोत्तरीया आगतह्रियः वयं निरतक्ष्यामहि॥ ४९॥

इत्यमरः। नीतानि सर्वं द्यूते राज्ञा हारितम् इत्यर्थः। नीतानि इति नपुंसकैकशेषः। नयतेः द्विकर्मकत्वात् प्रधाने कर्मणि क्तः। ननु सर्वज्ञस्य राज्ञः कथमियमविमृश्यकारिता तत्राह—भवितव्यता अनर्थानाम् अवश्यम्भाविता ईदृशी नूनं निश्चितं नात्र संशय इत्यर्थः। बुद्धिरपि भवितव्यतानुसारिण्येव न स्वतन्त्रा इत्यर्थः॥ ४७॥

ननु तथापि तवैव तेषु आसङ्गः न तेषां त्वयि तत्राह—तेनेति। अनुजाः पश्चाज्जाताः सहायाः यस्य तेन अनुजयुक्तेन इत्यर्थः। तुल्ययोगः सहायार्थः। तेन युधिष्ठिरेण द्रौपद्या च मया विना मद्विरहादित्यर्थः। आयामिनः दीर्घाः यामाः प्रहराः यासां ताः तासु। दुःखितस्य तथा भावादिति भावः। यामिनीषु अभितप्यते। भावे लट्। तेषु सद्वत् तेषाम् मयि अपि आसङ्गात् न वैराग्यावकाश इत्यर्थः॥ ४८॥

अथ वैरनिर्यातनस्य अवश्यम्भावद्योतनाय चतुर्भिः परापकृतिं दर्शयन् परनिकारान् वर्णयति—हृतेत्यादि। अरातयः शत्रवः सभायां प्रसभं बलात्कारेण हृतोत्तरीयान् अत एव आगतह्रियः सम्प्राप्तलज्जान्। नः अस्मान् मर्मच्छिदा मर्मच्छेदिना वचसा निरतक्षन् अशातयन्। वस्त्राद्यपहारवाक्पारुष्याभ्यां तथा व्यथयामासुरित्यर्थः। तक्षणशब्दसामर्थ्यात् वचसां वास्या औपम्यं गम्यते इति वस्तुना अलङ्कारध्वनिः॥ ४९॥

৪৭। রাজা যুধিষ্ঠির কপট অক্ষক্রীড়ায় আসক্ত হইয়া নিজ রাজ্য, নিজেকে, আমাদিগকে এবং সহধর্ম্মিণী দ্রৌপদীকে পণস্থানীয় করিয়াছিলেন, (ফলে দ্যূতে তিনি সকলই হারিয়াছেন) ভবিতব্যতা এইরূপই ছিল।

৪৮। অন্যান্য অনুজগণসহ আমার জ্যেষ্ঠ ভ্রাতা যুধিষ্ঠির এবং সহধর্ম্মিণী দ্রৌপদী আমার বিরহে এই দীর্ঘযামা যামিনীসমূহে অত্যন্ত দুঃখ পাইতেছেন।

उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ।
भावमानयने सत्याः सत्यङ्कारमिवान्तकः ॥ ५० ॥
तामैचन्त चणं सभ्या दुःशासनपुरःसराम्।
अभिसायार्कमावृत्तां छायामिव महातरोः ॥ ५१ ॥

अन्वयः। अन्तकः गुरुसन्निधौ सत्याः कृष्णायाः आनयने भावं सत्यङ्कारमिव सपत्नेषु उपाधत्त। वाच्य—अन्तकेन भावः सत्यङ्कार इव उपाधीयत ॥ ५० ॥

अन्वयः। दुःशासनपुरःसरां तां सभ्याः अभिसायार्कं (स्थितस्य) महातरोः आवृत्तां छायामिव चणम् ऐचन्त। वाच्य—सा सभ्यैः ऐच्यत ॥ ५१ ॥

अथ अतिदुःसहनिकारान्तरम् आह—उपाधत्तेति। अन्तकः मृत्युः गुरुसन्निधौ भीष्मद्रोणादिसमचम् एव सत्याः पतिव्रतायाः कृष्णाया द्रौपद्या आनयने केशाम्बरादिकर्षणे भावं चित्ताभिप्रायम् इतः परम् अनेन पाण्डवाभिभवेन एतान् स्वनगरं नेष्यामि इति एवम्भूतं सत्यङ्कारम् इव। क्रियते अनेन इति कारः। करणे घञ्। सत्यस्य कारः सत्यङ्कारः सत्यापनं चिकीर्षितस्य कार्य्यस्य अवश्यं क्रियास्थापनार्थं परहस्ते यत् दीयते सः सत्यङ्कारः क्रियार्थी सत्यदार्थ्याय प्राग् दीयमानो मूल्यैकदेशश्च। "क्लीबे सात्यपनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्" इत्यमरः। "कारे सत्यागदस्य" इति मुमागमः। तमिव सपत्नेषु उपाधत्त निहितवान्। तेषां विनाशकाले विपरीतबुद्धिमुत्पादितवानित्यर्थः ॥ ५० ॥

केनेयमाकृष्टा सभ्यैः वा किं कृतम्? तत्राह—तामिति। दुःशासनः पुरःसरः यस्याः तां तथोक्तां दुःशासनेन सभां प्रति आकृष्यमाणाम् इत्यर्थः। "अनुपसर्ज्जनात्" इति न ङीप्। तां कृष्णाम्। सभायां साधवः सभ्याः। "सभाया यः" इति यप्रत्ययः। अभिसायार्कं दिनान्तसूर्य्याभिमुखं स्थितस्य इति शेषः। "सायो नाशदिनान्तयोः" इति विश्वः। लक्षणेनाभिप्रती चाभिमुखे"ति अव्ययीभावः। महातरोः सम्बन्धिनीम् आवृत्तां छायामिव तां कृष्णां चणम् ऐचन्त न चिरं जुगुप्सितत्वात्। नापि किञ्चित् व्याप्रियन्त माध्यस्थ्यभङ्गभयात्, ते तु अकिंवत एव साक्षित्वमात्रम्

৪৯। শত্রুগণ সভাক্ষেত্রে সবলে আমাদের উত্তরীয় বস্ত্র হরণ করিয়াছিল, তাহাতে লজ্জায় আমরা অবনত হইয়াছিলাম, তাহারা মর্ম্মচ্ছেদিবাক্যে আমাদিগকে ব্যথিত করিয়াছিল।

৫০। শত্রুগণ পতিব্রতা দ্রৌপদীকে ভীষ্ম দ্রোণাদি গুরুজনসন্নিধানে আনয়ন করিলে মৃত্যু যেন তাহাদের প্রতি সত্যঙ্কারবৎ মনোভাব ধারণ করিয়াছিল। অর্থাৎ ইহার পর আমিও ইহাদিগকে (কৌরবদিগকে) স্বনগরে আনয়ন করিব, মৃত্যু যেন তখন এইরূপই বাসনা গ্রহণ করিল।

अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः।
अरुध्येतामितीवास्या नयने बाष्पवारिणा ॥ ५२ ॥

सोढ़वान् नो दशामन्त्यां ज्यायानेव गुणप्रियः।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥ ५३ ॥

अन्वयः। अयथार्थक्रियारम्भैः पतिभिः ईक्षितैः तव किम्? इति इव बाष्पवारिणा अस्या नयने अरुध्येताम्। वाच्य—बाष्पवारि नयने अरुणत ॥ ५२ ॥

अन्वयः। गुणप्रियः ज्यायान् युधिष्ठिरः एव नः अन्त्यां दशां सोढ़वान्, द्विषां भङ्गः सुलभः, सत्सु अवाच्यता दुर्लभा। वाच्य—गुणप्रियेण ज्यायसा युधिष्ठिरेण अन्त्या दशा सोढ़ा ॥ ५३ ॥

आस्थिता इत्यर्थः। अत्र आकृष्यमाणायाः कृष्णायाः आक्रष्टारं प्रति पराङ्मुखत्वात् आवृत्तच्छायौपम्यम्। तथापि तां न मुञ्चति इति दुःशासनस्य तरुसाम्यम् ॥ ५१ ॥

अथास्याः तादात्मिकमयाथार्थ्यं वर्णयति—अयथार्थेति। अयथार्थाः मिथ्याभूताः क्रियारम्भाः पतिशब्दप्रवृत्तिनिमित्तभूतकर्मोद्योगाः येषां तैः ताम् अरक्षद्भिः इत्यर्थः तव सम्बन्धिभिः। पान्ति रक्षन्ति इति पतयः भर्त्तारः। "पातेर्डतिः" इति औणादिको डतिप्रत्ययः। तैः ईक्षितैः अवेक्षितैः किम्? न किञ्चित् फलम् अस्ति इत्यर्थः। इतीव इत्थं विचार्येव इत्युत्प्रेक्षा। बाष्पवारिणा अस्याः कृष्णायाः नयने अरुध्यताम् आवृत्ते। रुधेः कर्मणि लङ्। अशरणा रुरोदेत्यर्थः ॥ ५२ ॥

ननु भवद्भिः किमर्थमसमर्थैः इवोपेक्षितम् तत्राह—सोढ़वानिति। गुणाः प्रिया यस्य सः गुणप्रियः। "वा प्रियस्येति" परनिपातः। ज्यायान् अग्रजः युधिष्ठिरः एव, वृद्धशब्दात् ईयसुनि "ज्यादादीयसेति" आकारादेशः। नः अस्माकमन्ते भवामन्त्यां निकृष्टां दशामवस्थां सोढ़वान् न तु वयम्। किन्तु तदवरुद्धा इति भावः। ननु शत्रूपेक्षा महती अनर्थकारिणीत्याशङ्क्याह—सुलभेति। द्विषां विद्विषां भङ्गः सुलभः कालान्तरेऽपीति शेषः। सत्सु सज्जनेषु अवाच्यता अनिन्द्यता दुर्लभा, न तु शत्रूपेक्षा। हि प्रसिद्धौ। शत्रूपेक्षातः लोकापवाद एव बलवान् तस्योत्पन्नस्य पुनरप्रतिविधेयत्वात् स च समयोल्लङ्घने स्यादेवेति भावः ॥ ५३ ॥

৫১। সভ্যগণ দুঃশাসনের করাকৃষ্টা পশ্চাদ্‌গামিনী দ্রৌপদীকে দিনশেষে সূর্য্যাভিমুখস্থিত মহাতরুর আবর্ত্তিত ছায়ার ন্যায় ক্ষণকাল অবলোকন করিয়াছিল।

৫২। অনর্থক পতিনামধারী পতিগণকে নিরীক্ষণ করিয়া তোমার কি হইবে? ইহা আলোচনা করিয়াই যেন দ্রৌপদীর অশ্রুজল তদীয় নয়নদ্বয়কে আবৃত করিয়াছিল।

**स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।**
**तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ५४**

**धार्त्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत ।**
**असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥ ५५ ॥**

अन्वयः । तोयराशीनां तोयानि मनस्विनां मनांसि च स्थित्यतिक्रान्तिभीरूणि आकुलितानि अपि स्वच्छानि (भवन्ति) । वाच्य— + तोयैः + मनोभिश्च + भीरुभिः आकुलितैः स्वच्छैः (भूयते) ॥ ५४ ॥

अन्वयः । धार्त्तराष्ट्रैः सह प्रीतिः अस्मासु वैरम् असूयत । (यतः) असन्मैत्री कूलच्छाया इव सेविता दोषाय (भवति) । वाच्य—प्रीत्या वैरम् असूयत । असन्मैत्र्या सेवितया (भूयते) ॥ ५५ ॥

ननु शत्रुवधे राज्ञां कः नामापवादः प्रत्युत कीर्त्तिरेव इत्याशङ्क्य सत्यं स एव समयोल्लङ्घनकलङ्कितकीर्त्त्या महानिन्दानिदानम् इत्याशयेनाह—स्थितेति । तोयराशीनां समुद्राणां तोयानि मनस्विनां मनांसि च समानि भवन्ति । उभयं विशिनष्टि—स्थित्यतिक्रान्तेर्मर्य्यादोल्लङ्घनात् हेतोः भीरूणि अत एवाकुलितानि सङ्क्षोभितान्यपि स्वच्छानि अकलुषाणि न त्यजन्ते इत्यर्थः । मनस्वी अयं युधिष्ठिर इति भावः । अत्र तोयानां सामान्यतो मनस्विनां चाप्यकृतानामिव गुणतौल्यात् औपम्यस्य गम्यतया तुल्ययोगितालङ्कारः । गुणश्चात्र भीरुत्वं स्वच्छता च ॥ ५४ ॥

ननु अजातशत्रोः स्वजनवैरे किं कारणमिति ? आशङ्क्य असत्सौहार्दमेवेत्याह— धार्त्तराष्ट्रैरिति । धार्त्तराष्ट्रैः धृतराष्ट्रपुत्रैः सह प्रीतिः सौहार्दम् एव अस्मासु विषये वैरम् असूयत सूतवती । सूयतेः दैवादिकात् कर्त्तरि लङ् । ननु सौहार्दं वैरजनकं चेत् विप्रतिषिद्धम् तत्राह - असदिति । हि यस्मात् असन्मैत्री दुर्जनेन सङ्गतिः कूलस्य आसन्नपातस्य नदीतटस्य छाया इव सेविता श्रिता सती दोषाय अनर्थाय भवति न खलु दुर्जनः सुजनवत् मित्रद्रोहपातकं पश्यतीति भावः । उपमानुप्राणितः अयमर्थान्तरन्यासनामालङ्कारः ॥५५॥

৫৩। গুণপ্রিয় জ্যেষ্ঠ যুধিষ্ঠিরই আমাদের এই চরম দশা সহ্য করিয়াছিলেন। ফলে শত্রু দমন সুলভ অর্থাৎ কালান্তরেও হইতে পারে; কিন্তু সজ্জনসমাজে প্রতিষ্ঠা দুর্লভ। (অর্থাৎ লোকাপবাদ একবার হইলে আর তাহা অপনোদন করা যায় না।

৫৪। জলধিসমূহের জল আর মনস্বিগণের মন উভয়ই মর্য্যাদালঙ্ঘনে ভীরু, সুতরাং সঙ্ক্ষোভিত হইয়াও স্বচ্ছই থাকে।

৫৫। ধৃতরাষ্ট্রপুত্রদিগের সহিত সৌহার্দ্দই আমাদের প্রতি শত্রুতা উৎপাদন করিয়াছে। কেন না, আসন্নপতন নদীতটের ছায়ায় আশ্রয় লওয়ার ন্যায় দুর্জ্জনসঙ্গ গ্রহণ করিয়াও দোষনিমিত্ত হইয়া থাকে।

अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्‌वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥ ५६ ॥
ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः ।
यद्यमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् ॥ ५७ ॥
अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।
अन्योऽन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम् ॥ ५८

अन्वयः । अपवादात् अभीतस्य गुणदोषयोः समस्य असद्‌वृत्तेः वृत्तं विधेः वृत्तम् इव दुर्विभावम् (भवति)। वाच्य—वृत्तेन दुर्विभावेन (भूयते) ॥ ५६ ॥

अन्वयः । परैः परिभूतस्य मे हृदयं सद्यः ध्वंसेत, यदि अमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् । वाच्य—हृदयेन ध्वस्यते, अमर्षेण प्रतीकारः भुजालम्बः लम्भ्येत ॥ ५७ ॥

अन्वयः । अरिभिः अवधूय हरिणैः तुल्यवृत्तिता नीताः (वयं) अन्योऽन्यस्य अपि जिह्रीमः सहवासिनां किं पुनः ? वाच्य—तुल्यवृत्तितां नीतैः (अस्माभिः) ह्रीयते ॥ ५८ ॥

ननु आदावेव तेषां वृत्तम् अविज्ञाय कथं मैत्री कृता इति आशङ्क्य किं कुर्मः दुर्जनवृत्तं दुर्विज्ञेयमित्याह,—अपवादादिति । अपवादात् जनाक्रोशात् अभीतस्य अजुगुप्समानस्येत्यर्थः । गुणदोषयोः समस्य तुल्यबुद्धेः, निग्रहानुग्रहौ गुणदोषयोरननुरूपौ इत्यर्थः । विधौ अप्येतद्विशेषणं योज्यम् । असद्‌वृत्तेर्दुराचारस्य धूर्तस्य वृत्तम् इङ्गितं विधेः दैवस्य वृत्तमिव दुर्विभावं विभावयितुमशक्यम् । किन्तु कार्य्यैकसमधिगम्यमित्यर्थः । भवतेर्ण्यन्तात् कृच्छ्रार्थे खल्प्रत्ययः ॥ ५६ ॥

ननु एवं मानी कथं परिभूतो जीवसि तत्राह—ध्वंसेतेति । परैः शत्रुभिः परिभूतस्य मे हृदयं सद्यो ध्वंसेत भ्रश्येदित्यर्थः । अमर्षः कर्त्ता प्रतीकारं प्रतिक्रियारूपं भुजालम्बं हस्तावलम्बनं न लम्भयेत् न ग्राहयेत् यदि हृदयेन इति शेषः । सत्यं जीवामि प्रतिविधित्सया न तु निर्लज्जतया इति भावः ॥ ५७ ॥

ननु तवैव कोऽयमभिमानः ? तत्राह—अवधूयेति । अरिभिः अवधूय परिभूय हरिणैः मृगैः तुल्यवृत्तितां तुल्यजीवनत्वं वन्याहारता-

৫৬। যাহার লোকাপবাদে ভয় নাই, দোষগুণে যাহার তুল্যবুদ্ধি, এ হেন ধূর্ত্ত জনের কার্য্য বিধাতার কার্য্যের ন্যায় অভাবনীয়।

৫৭। পরপরিভূত মদীয় হৃদয় সদ্যই ধ্বংস হইয়া যাইত; যদি অমর্ষ তাহাকে প্রতীকার স্বরূপ ভুজাবলম্বন গ্রহণ না করাইত।

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥५९॥

अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् ।
प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥६०॥

अन्वयः। शक्तिवैकल्यनम्रस्य निःसारत्वात् लघीयसः मानहीनस्य जन्मिनः तृणस्य च गतिः समा (भवति)। वाच्य—समया गत्या (भूयते) ॥ ५९ ॥

अन्वयः। महीभृतां यत् उच्चैः तत् तत् अलङ्घ्यं उद्वीक्ष्य महतां तुङ्गता ज्यायसीं प्रियतां केन मा गात्? वाच्य—तुङ्गतया ज्यायसी प्रियता मा गायि ॥ ६० ॥

मित्यर्थः। नीताः प्रापिताः वयं पश्चापीति शेषः। अन्योऽन्यस्यापि जिह्नीमः लज्जामहे। सहवासिनां सहचारिणां किं पुनः? प्रागेव जिह्नीम इति किमु वक्तव्यमित्यर्थः? क्रियायोगे सम्बन्धसामान्ये षष्ठी। तत्र वयं पश्चापि तुल्याभिमाना एव इदं तु मदेकसाध्यं कर्मेति मुनिशासनात् मयानुष्ठीयत इति भावः ॥ ५८ ॥

ननु तर्हि दुःखैकनिदानमन्तःशल्यमान एव त्यज्यतामित्याशङ्क्य तत्त्यागे दोषमाह—शक्तीति। शक्तिवैकल्येन उत्साहादिशक्तिवैधुर्येण अवष्टम्भ-सामर्थ्यविरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च निःसारत्वात् दुर्बलत्वात् स्थिरांशरहितत्वाच्च "सारो बले स्थिरांशे च" इत्यमरः। लघीयसः गौरवहीनस्य नीरसस्येत्यर्थः। मानहीनस्य जन्मिनः जन्तोः। व्रीह्या-दित्वादिनिः। तृणस्य च गतिः अवस्था समेति मानहीनस्य तृणादपि निकृष्टत्वात् न त्याज्यो मान इति भावः। श्लेषालङ्कारोऽयं तदनुप्राणिता इयमुपमेति अनेकार्थदीपिकेति व्यज्यते ॥ ५९ ॥

मानत्यागे दोषमुक्त्वा तत्सद्भावे षड्भिर्गुणमाह—अलङ्घ्यमिति। महीभृतां पर्वतानां सम्बन्धि यद् यत् शृङ्गादिकम् उच्चैः उन्नतं तत् तत् अलङ्घ्यम् उद्वीक्ष्योत्प्रेक्ष्य तर्कयित्वा इति यावत्। महतां महात्मनां तुङ्गता मानोन्नत्यं ज्यायसीं प्रियतां प्रियत्वं केन हेतुना मा गात्? न केनापि प्रियत्वं गच्छत्येवेत्यर्थः। किन्तु तुङ्गत्वेनेत्यर्थः। आशिषि माङि लङ्।

৫৮। শত্রুগণ আমাদিগকে পরাস্ত করিয়া মৃগের সমান আমাদের জীবিকা বিধান করাইয়াছে। এ অবস্থায় আমরা যে নিজেরাই পরস্পর সহধর্মীদিগের নিকট লজ্জিত হইব, সে পক্ষে আর কথা কি?

৫৯। যে মানহীন পুরুষ উৎসাহাদি শক্তি নাই বলিয়া নম্র এবং দৌর্বল্য হেতু গৌরবহীন, তাহাদের এবং সামর্থ্যবিরহে অবনত অসার নীরস তৃণের অবস্থা সমান।

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः।
पुरुषस्तावदेवासौ यावन्मानात् न हीयते ॥६१॥

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते।
नान्यामङ्गुलिमभ्येति सङ्ख्यायामुद्यताङ्गुलिः ॥६२॥

अन्वयः। तावत् एव लक्ष्म्या आश्रीयते, तावत् अस्य यशः स्थिरं (भवति) तावत् एव असौ पुरुषः यावत् मानात् न हीयते। वाच्य—लक्ष्मीः आश्रयति, यशसा स्थिरेण (भूयते), अमुना पुरुषेण (भूयते) ॥ ६१ ॥

अन्वयः। सः पुमान् अर्थवज्जन्मा, यस्य नाम्नि पुरःस्थिते (सति) सङ्ख्यायां उद्यता अङ्गुलिः अन्याम् अङ्गुलिं न अभ्येति। वाच्य—तेन पुंसा अर्थवज्जन्मना (भूयते) उद्यतया अङ्गुल्या अन्या अङ्गुलिः न अभीयते ॥ ६२ ॥

अटोऽपवादः। दैवादनिच्छतोऽपीच्छाम् उत्पादयति औषधवदित्यर्थः। आशंसनार्थं माशीःप्रयोगः। उद्दीच्येति समानकर्तृकत्वनिर्देशः क्वचित् प्रयोगदर्शनात् सोढ़व्यः। केचित् उद्दीच्यमिति पठन्ति। तत्र यत् यत् उच्चैः तत्तत् अलङ्घ्यम् अवलोकनीयं न च उल्लङ्घनीयमिति। अतो महताम् इत्यादि योजयन्ति ॥ ६० ॥

तावदिति। किञ्च तावदेवासौ लक्ष्म्या आश्रीयते। तावदस्य पुंसः यशः स्थिरम्। तावदेवासौ पुरुषः। पुरुषत्वेन गण्यत इत्यर्थः। यावत् मानात् अभिमानात् न हीयते न भ्रश्यति। मानहीनस्य न किञ्चित् शुभमस्ति इत्यर्थः ॥ ६१ ॥

स इति। स पुमान् अर्थवज्जन्मा सार्थकजन्मा यस्य पुंसो नाम्नि पुरः अग्रे स्थिते सति संख्यायां पुरुषगणनाप्रस्तावे उद्यता गुणमधिकृत्य उन्नमिताङ्गुलिः अन्यां द्वितीयाम् अङ्गुलिम् उद्यतामिति शेषः। न अभ्येति न प्राप्नोति। अद्वितीयत्वात् अस्येत्यर्थः। एतन्मानरहितस्य न सम्भवतीति भावः ॥ ६२ ॥

৬০। পর্ব্বতসমূহের যাহা যাহা (শৃঙ্গাদি) উচ্চ, তৎসমুদায়ই অলঙ্ঘ্য; ইহা বুঝিয়া মহাত্মগণের মানৌন্নত্য কেন না অতি প্রিয় বস্তু হইবে ?

৬১। লক্ষ্মী ততদিনই পুরুষকে আশ্রয় করিয়া থাকেন, ততদিনই পুরুষের যশ স্থির থাকে, ততদিনই লোক পুরুষ পদবাচ্য হয়; যতদিন সে মানহীন না হয়।

৬২। যাহার নাম অগ্রে থাকিলে পুরুষগণনার সমুদ্যত অঙ্গুলি দ্বিতীয় অঙ্গুলিকে প্রাপ্ত না হয়, সেই পুরুষেরই জন্ম সার্থক।

दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥६३॥
गुरून् कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥६४॥
उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥६५॥

अन्वयः। दुरासदवनज्यायान् तुङ्गः अपि भूधरः गम्यः. महौजस्कं मानप्रांशुं (पुरुषं) अलङ्घ्यता न जहाति। वाच्य—+ + +ज्यायसा तुङ्गेन भूधरेण गम्येन (भूयते) महौजस्कः मानप्रांशुः अलङ्घ्यतया न हीयते ॥ ६३ ॥

अन्वयः। ते (नराः) वंश्यान् गुरून् कुर्वन्ति, तैः वसुन्धरा अन्वर्था (भवति), येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति। वाच्य—तैः नरैः वंश्या गुरवः क्रियन्ते, वसुन्धरया अन्वर्थया (भूयते) शुभ्रैः यशोभिः इन्दुमण्डलं ह्रेप्यते ॥ ६४ ॥

दुरासदेति। दुरासदैर्वनैः ज्यायान् प्रवृद्धः तथापि तुङ्गोऽपि भूधरः गम्यः गन्तुं शक्य एव। प्रसिद्धं च एतदिति भावः। महौजस्कं प्रतापसम्पन्नं मानप्रांशुं मानोन्नतं पुरुषमिति शेषः। अलङ्घ्यता न जहाति। कदाचित् मानी लङ्घयितुं शक्यते इत्यर्थः। गिरेरपि गरीयान् मानाधिक इति भावः। अत्रोपमानात् भूधरात् उपमेयस्य मानिनो धर्म्मान्तरसाम्ये लङ्घ्यत्वेन आधिक्यकथनाद् व्यतिरेकालङ्कारः ॥ ६३ ॥

गुरूनिति। ते नराः वंश्यान् अन्वये भवान् गुरून् कुर्वन्ति प्रथयन्ति। स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवदित्यर्थः। तैर्नरैः वसूनि धनानि धरतीति वसुन्धरा। "संज्ञायां भृतॄवृजि" इत्यादिना खच्प्रत्यये "खचि ह्रस्वः" इति ह्रस्वात् नुमागमश्च। अन्वर्था अनुगतार्था तेषां वसुभूतानां धारणादिति भावः। येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्जयन्ति यशसो निष्कलङ्कत्वादिति भावः। ईदृशं हि यशः मानमहत एव सम्भवतीति तात्पर्य्यार्थः। ह्रीधातोर्ण्यन्तात् लट्। "अर्त्तिह्री" इत्यादिना पुगागमः। अत्र ह्रेपणस्य सादृश्यपर्य्यवसानादुपमालङ्कारः ॥ ६४ ॥

৬৩। দুর্গম অরণ্যে পরিবৃদ্ধ উন্নত ভূধরও লোকের গম্য হইয়া থাকে; কিন্তু যে প্রতাপশালী মানোন্নত পুরুষ, তাহাকে অলঙ্ঘ্যতা কখনও ত্যাগ করে না। অর্থাৎ মানী ব্যক্তিকে লঙ্ঘন করিতে কেহই সমর্থ নহে।

৬৪। যাহাদের শুভ্রযশোরাশি চন্দ্রমণ্ডলকে লজ্জা দেয়, সেই সকল নরই স্বীয় বংশধরদিগকে মহাপুরুষ করিয়া তুলে; এবং তাহাদের দ্বারাই বসুন্ধরা সার্থকনামা হয়।

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ॥६६॥
प्रमार्ष्टुमयशःपङ्कमिच्छेयं छद्मना कृतम्।
वैधव्यतापितारातिवनितालोचनाम्बुभिः ॥६७॥

अन्वयः। ये: अमर्षः शुष्के अशनिः इव अरातिषु पात्यते मनस्विनां प्रथमे ते आशीःषु उदाहरणम्। वाच्य—ये अमर्षम् अशनिमिव पातयन्ति प्रथमैः तैः उदाहरणेन (भूयते) ॥ ६५ ॥

अन्वयः। उदन्वद्वीचिचञ्चलं सुखं न प्रार्थये, अर्थञ्च न प्रार्थये। (किञ्च) अनित्यताशनेः त्रस्यन् विविक्तं ब्रह्मणः पदं न प्रार्थये। वाच्य—मया सुखं न प्रार्थ्यते, अर्थश्च न प्रार्थ्यते, त्रस्यता विविक्तं पदं न प्रार्थ्यते ॥ ६६ ॥

अन्वयः। छद्मना कृतम् अयशःपङ्कं वैधव्यतापितारातिवनितालोचनाम्बुभिः प्रमार्ष्टुम् इच्छेयम्। वाच्य—मया इष्येत ॥ ६७ ॥

उदाहरणमिति। यैरमर्षः क्रोधः शुष्के नीरसे अशनिरिव अरातिषु विषये पात्यते प्रक्षिप्यते। मनस्विनां मानिनां प्रथमे अग्रेसराः ते आशीःषु पुरुषैरेवं भवितव्यमेवंरूपासु उदाहरणं भवतीति शेषः। रामादिवदुपमानं भवतीत्यर्थः। अतो न त्याज्यो मान इति सन्दर्भार्थः ॥६५॥

तदुक्तम् "अभिद्रोहेण भूतानाम्" इत्यादि तत्र युग्मेनोत्तरमाह— नेत्यादि। उदन्वद्वीचिरिव चञ्चलं समुद्रतरङ्गवदस्थिरं सुखं कामं न प्रार्थये न इच्छामि। तथा चञ्चलम् अर्थञ्च न प्रार्थये। किञ्च अनित्यता विनाशिता सैव अशनिः तस्मात् त्रस्यन् बिभ्यत्। "वा भ्राश" इत्यादिना श्यन्प्रत्ययः। विविक्तं निर्बाधं ब्रह्मणः वेधसः आत्मनः पद्यते इति पदं स्थानम् ऐक्यलक्षणं मुक्तिञ्च न प्रार्थये। एतेन यदुक्तम् "उच्छेदं जन्मनः कर्त्तुम्" इत्यादिना तत् समाहितम् ॥ ६६ ॥

प्रमार्ष्टुमिति। किन्तु छद्मना कपटेन कृतं शत्रुभिरिति शेषः। अयशः एव पङ्कमिति रूपकालङ्कारः। वैधव्येन तापितानां दुःखीकृतानामरातिवनितानां लोचनाम्बुभिः प्रमार्ष्टुं क्षालयितुमिच्छेयम् अभिलषेयम्। इषिधातोर्लिङि रूपम्॥ वैरिनिर्य्यातनातिरिक्तं न किञ्चिदिच्छामीत्यर्थः ॥ ६७ ॥

৬৫। যাহারা নীরস পদার্থে অশনিপাতনের ন্যায় অরাতিজনে অমর্ষক্ষেপ করে, তাহারাই মনস্বিগণের অগ্রণী এবং তাহারাই পুরুষকার বর্ণনার উদাহরণ স্থল।

৬৬। আমি জলধিজল-চঞ্চল সুখ চাহি না, অর্থ চাহি না, অপিচ অনিত্যতারূপ অশনি হইতে ভীত হইয়া অবাধ ব্রহ্মপদও চাহি না।

৬৭। আমি শত্রুকর্ত্তৃক কপটকৃত অযশোরূপ পঙ্ক—বৈধব্যতাপিত আরাতিবনিতাগণের নয়নাম্বু দ্বারা প্রক্ষালন করিতে ইচ্ছা করি।

अपहस्येऽथवा सद्भिः प्रमादो वास्तु मे धियः।
अस्थानविहितायासः कामं जिह्रेतु वा भवान् ॥६८॥
वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम्।
निर्व्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥६९॥
अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥७०॥

अन्वयः। अथवा सद्भिः (अहं) अपहस्ये, मे धियः प्रमादो वा अस्तु, भवान् अपि अस्थानविहितायासः (सन्) कामं जिह्रेतु। वाच्य—सन्तः (मां) अपहसन्ति, प्रमादेन भूयतां भवता विहितायासेन ह्रीयताम् ॥ ६८ ॥

अन्वयः। अहं विद्विषां समुच्छेदेन वंशलक्ष्मीम् अनुद्धृत्य निर्वाणम् अपि जयश्रियः अन्तरायं मन्ये। वाच्य—मया निर्वाणं अपि अन्तरायः मन्यते ॥ ६९ ॥

अन्वयः। पुरुषः यावत् अरिभिः विलुप्तं यशः इषुभिः न आदत्ते तावत् अजन्मा; गतासुः तृणमेव वा। वाच्य—पुरुषेण आदीयते, अजन्मना, गतासुना तृणेन वा (भूयते) ॥ ७० ॥

एवं तर्हि "यः करोति वधोदर्कां" इत्युक्तदोषः स्यात् इत्याशङ्कामङ्गीकृत्य ग्लानिर्न दोषायेति न्यायमाश्रित्य युक्त्यन्तरेणोत्तरमाह—अपहस्य इत्यादि। अथवा सद्भिः पण्डितैः अपहस्ये अपहसिष्ये इत्यर्थः। "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति भविष्यदर्थे लट्। ण्यन्तस्तु भ्रान्तः पाठः। मे धियः प्रमादोऽनवधानत्वं वा अस्तु। भवानपि अस्थाने अयोग्यविषये विहितः आयासः हितोपदेशप्रयासो येन सः तथोक्तः विफलप्रयत्नः सन् इत्यर्थः। कामं जिह्रेतु लज्जताम् ॥ ६८ ॥

वंशेति। अहं तु विद्विषां शत्रूणां समुच्छेदेन विनाशेन करणेन वंशलक्ष्मीम् अनुद्धृत्य अपुनरावर्त्तिं निर्वाणं मोक्षमपि जयश्रियः अन्तरायं विघ्नं मन्ये। न तु पुरुषार्थमित्यर्थः। किमुत अन्योत्सवादिकमिति भावः ॥ ६९ ॥

नन्वयं ते दुराग्रह इत्यत आह—अजन्मेति। पुरुषः यावत् अरिभिर्विलुप्तं संहृतं यशः इषुभिः न आदत्ते परिवर्धेन न प्रत्याहरति इत्यर्थः। तावदजन्मा अजातप्राय इत्यर्थः। ननु अजातोऽपि जननानन्तरमुपयुज्यते एवेति अरुच्या पक्षान्तरमाह—गतासुः मृत मृततुल्य

৬৮। সাধুগণ আমায় উপহাসই করুন, কিম্বা আমার বুদ্ধিমোহই উপস্থিত হইয়া থাকুক, অথবা অস্থানে প্রয়াস স্বীকার করিয়া আপনিই লজ্জিত হউন।

৬৯। আমি শত্রুবিনাশদ্বারা বংশলক্ষ্মীর উদ্ধার সাধন না করিয়া নির্ব্বাণকেও জয়শ্রীর অন্তরায় বলিয়া মনে করি।

**अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति ।**
**पुरुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन ॥७१॥**

**कृतं पुरुषशब्देन जातिमात्रावलम्बिना ।**
**योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥७२॥**

अन्वयः । यस्य अमर्षः द्विषताम् अनिर्जयेन प्रशाम्यति, तस्मिन् पुरुषोक्तिः कथम् ? ( हे तपोधन । ) त्वं हि ब्रूहि । वाच्य—अमर्षेण प्रशम्यते, पुरुषोक्त्या ( भूयते ), त्वया उच्यताम ॥ ७१ ॥

अन्वयः । जातिमात्रावलम्बिना पुरुषशब्देन कृतम्, अङ्गीकृतगुणैः यः श्लाघ्यः ( सन् ) सविस्मयम् उदाहृतः ( भवति ) । वाच्य—+ + श्लाघ्येन उदाहृतेन ( भूयते ) ॥ ७२ ॥

इत्यर्थः । मृतोऽपि प्राक् उपयुक्तवान् इति अरुच्याह—तृणमिवेति । तृणतुल्य इत्यर्थः । अकिञ्चित्करस्तु त्रैकाल्यानुपयोगात् जीवन्मृत इत्यर्थः । अतो नाहमाग्रहात् ब्रवीमि किन्तु वीरधर्ममनुपालयामीति भावः ॥ ७० ॥

सर्वथा वैरनिर्यातनं कर्त्तव्यमित्युक्तं तदकरणे पुरुषगुणानां हानिदोषमाह—अनिर्जयेनेति । यस्य अमर्षः क्रोधः द्विषतां शत्रूणामनिर्जयेन निर्जयं विना एव प्रशाम्यति । उपलक्षणे तृतीया । तस्मिन् पुरुषः इत्युक्तिः पुरुषशब्दः कथम् ? न कथञ्चिदित्यर्थः । प्रवर्त्तत इति शेषः । प्रवृत्तिनिमित्तस्य पुरुषकारस्याभावादिति भावः । हे तपोधन ! त्वं हि त्वमेव ब्रूहि कथय । न च ते किञ्चित् अविदितमस्तीति भावः । "हि हेताववधारणे" इत्यमरः ॥ ७१ ॥

ननु पुरुषत्वजात्यैव पुरुषोक्तिप्रवृत्तेः किं पुरुषकारेण तत्राह—कृतमित्यादिद्वयेन । जातिमात्रावलम्बिना जातिमात्राभिधायिना पुरुषशब्देन कृतम् अलम् । न तेन किञ्चित् साध्यत इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया इत्युक्तं प्राक् । कृतमिति निषेधार्थमव्ययं चादिषु पठ्यते । सत्यं जातिमात्रेऽपि पुरुषशब्दः प्रवर्त्तते, परन्तु न असौ पुंसाम् आशास्यः । पश्वादिसाधारण्यादिति तात्पर्य्यार्थः । तर्हि कीदृक् श्लाघ्य इत्याशङ्क्याह—य इत्यादिना अर्धद्वयेन । अङ्गीकृतगुणैः गुणपक्षपातिभिः यः पुमान् श्लाघ्यः स्तुत्यः सन् सविस्मयं ससम्भ्रमम् उदाहृतः कथितः । पुंसा ईदृशेन भवितव्यमिति निदर्शितः ॥ ७२ ॥

৭০। পুরুষ যে পর্য্যন্ত শত্রুজনবিলুপ্ত যশ অস্ত্র দ্বারা প্রত্যানয়ন না করে, সে পর্য্যন্ত তাহাকে অজাতপ্রায়, মৃততুল্য এমন কি তৃণতুল্যই বলা যায়।

৭১। শত্রু জয় না করিয়া যাহার অমর্ষ প্রশমিত হয়, তাহাকে পুরুষ বলা যায় কিরূপে? হে তপোধন! আপনিই এ কথা বলুন।

**ग्रसमानमिवौजांसि सदसा गौरवेरितम्।**
**नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥৭৩॥**

युग्मकम्।

**यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया।**
**ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलेः ॥৭৪॥**

अन्वयः। सदसा गौरवेरितं (सत्) ओजांसि ग्रसमानम् इव (स्थितं) यस्य पुनः नाम द्विषोऽपि अभिनन्दन्ति स पुमान् पुमान्। वाच्य—यत् नाम द्विषद्भिः अभिनन्द्यते, तेन पुंसा पुंसा (भूयते)॥ ৭৩॥

अन्वयः। नृपतिः यथाप्रतिज्ञं युधि द्विषतां प्रतिचिकीर्षया तृष्यन् जलाञ्जलेः एव मम इव अध्येति। वाच्य—नृपतिना तृष्यता अहमेव अधीये॥ ৭৪॥

ग्रसमानमिति। किञ्च सदसा सभया गौरवेण ईरितं कथाप्रसङ्गेषु गौरवपूर्वकमुच्चारितं सत् ओजांसि शृण्वतां तेजांसि ग्रसमानं गिलत् इव स्थितं यस्य पुंसः नाम द्विषोऽपि अभिनन्दन्ति अनुमोदन्ते। किमुत सुहृद इति भावः। स पुमान् पुमान् पुरुषत्वेन गण्यते इत्यर्थः। प्रथमः पुरुषशब्दः जातिवचनः, द्वितीयो गुणवचनः स एव श्लाघ्यः। अत्र पुमान् पुमान् इति तात्पर्य्यमात्रभेदभिन्नशब्दार्थपौनरुक्त्यलक्षणो लाटानुप्रासोऽलङ्कारः। तथाच सूत्रम्—"तात्पर्य्यभेदयुक्तो लाटानुप्रासः" इति॥ ৭৩॥

ननु सन्तु भीमादिषु तवैव अयं कोऽभिनिवेशः इत्यत आह—तथेति। नृपतिः युधिष्ठिरः यथाप्रतिज्ञं युधि द्विषतां प्रतिचिकीर्षया द्विषतः प्रतिकर्त्तुम् इच्छया प्रतिज्ञानुसारेणैव जिघांसयेत्यर्थः। तृष्यन् पिपासुः जलाञ्जलेरिव अध्येति इच्छति कार्य्यसिद्धेः मदायत्तत्वात् मामेव स्मरति अतः अयं मम अभिनिवेश इत्यर्थः। "अधीगर्थ" इत्यादिना कर्म्मणि षष्ठी॥ ৭৪॥

৭২। জাতিমাত্রপ্রকাশক পুরুষ শব্দের প্রয়োগ অনর্থক, (পরন্তু) যে পুরুষ গুণগ্রাহী ব্যক্তিগণের মুখে প্রশংসিত হইয়া সসম্ভ্রমে অভিহিত হন, (তিনিই প্রকৃত পুরুষ)।

৭৩। যাঁহার নাম সভ্যসমাজে গৌরবের সহিত উচ্চারিত হইয়া শ্রোতৃবর্গের তেজোরাশি অধঃকরণ করিয়া থাকে এবং শত্রুগণও যাহার নামখ্যাতির অনুমোদন করিয়া থাকে, সেই পুরুষই পুরুষ।

৭৪। তৃষিত ব্যক্তি যেমন জলাঞ্জলি ইচ্ছা করে, তেমনই নরপতি যুধিষ্ঠির প্রতিজ্ঞানুসারে সমরে শত্রু সংহারেচ্ছায় আমাকেই কেবল স্মরণ করিতেছেন।

**स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम् ।**
**कृच्छ्रेषु व्यर्थया यत्र भूयते भर्त्तुराज्ञया ॥७५ ॥**
**कथं वादीयतामर्वाङ् मुनिता धर्मरोधिनी ।**
**आश्रमानुक्रमः पूर्वैः स्मर्य्यते न व्यतिक्रमः ॥७६ ॥**

अन्वयः । सः अवदातस्य वंशस्य शशाङ्कस्य इव लाञ्छनं यत्र कृच्छ्रेषु भर्त्तुः आज्ञया व्यर्थया भूयते । वाच्य—आज्ञा व्यर्था भवति ॥ ७५ ॥

अन्वयः । धर्मरोधिनी, अर्व्वाक् मुनिता कथं वा आदीयताम्, पूर्वैः आश्रमानुक्रमः स्मर्य्यते न व्यतिक्रमः ( स्मर्य्यते )। वाच्य—···रोधिनीं मुनिताम् आददे । पूर्व्वे आश्रमानुक्रमं स्मरन्ति ॥ ७६ ॥

ननु युधिष्ठिरः स्वार्थं साधयति, त्वया च स्वार्थमात्रमनुसन्धीयतामित्यत आह—स इति । स नरोऽवदातस्य स्वच्छस्य वंशस्य शशाङ्कस्येव लाञ्छनं कलङ्कः । यत्र यस्मिन् पुरुषे कृच्छ्रेषु व्यसनेषु भर्त्तुः स्वामिनः आज्ञया व्यर्थया भूयते । भावे लट् । आपदि स्वार्थसाधकः कुलघातकः, तत् कथं स्वार्थनिष्ठकार्य्यता युक्तेत्यर्थः ॥ ७५ ॥

यदुक्तम् 'विजहीहि रणोत्साहम्" इत्यादि, तत्रोत्तरमाह—कथमिति । धर्मरोधिनी धर्मविरोधिनी अर्वाक् गार्हस्थ्यात् प्रागेव मुनिता वानप्रस्थत्वं चतुर्थाश्रमता वा, वर्णप्रक्रमेण तस्य विधानात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनाच्च क्षत्रियस्यापि कैश्चिदिष्टत्वात् । तदेतत् सम्यक् विवेचितमस्माभिः रघुवंशसञ्जीवन्यां "स किलाश्रममन्त्यमाश्रितः" इत्यत्र । कथं वा आदीयतां मया कथं वा अङ्गीक्रियताम् ? सम्प्रश्ने लोट् । तथाहि—पूर्वैर्मन्वादिभिराश्रमानुक्रमः स्मर्य्यते, न तु व्यतिक्रमः । "ब्रह्मचारी भूत्वा गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्" इति श्रुत्यनुसारादित्यर्थः । एतदपि 'चत्वार आश्रमाः" इत्येतत् पक्षमाश्रित्य उक्तम् । यदि चेत् वैराग्यं, तदा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वनाद्वेति व्युत्क्रमपक्षस्यापि श्रवणात् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७६ ॥

৭৫। বিপদে প্রভুর আজ্ঞা যে পুরুষে ব্যর্থ হইয়া যায়, সেই পুরুষ শশাঙ্কের কলঙ্কের ন্যায় বিমল বংশের কলঙ্কস্বরূপ।

৭৬। আমি গার্হস্থ্যধর্ম্মের পূর্ব্বে ধর্ম্মবিরোধী চতুর্থাশ্রম অঙ্গীকার কিরূপে করিব? মন্বাদি পূর্ব্বাচার্য্যগণ আশ্রমানুক্রমেরই উপদেশ করিয়া থাকেন; আশ্রম ব্যতিক্রমের নহে।

आसक्ता धूरियं रूढ़ा जननी दूरगा च मे ।
तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान् नृपः ॥७७॥
स्वधर्ममनुरुन्धन्ते नातिक्रममरातिभिः ।
पलायन्ते कृतध्वंसा नाहवान्मानशालिनः ॥७८॥

अन्वयः । आसक्ता रूढ़ा इयं धूः दूरगा जननी च तथा नृपः अपि आचारवान् ज्यायान् मे स्वातन्त्र्यं तिरस्करोति । वाच्य—"अनया धुरा, दूरगया जनन्या नृपेण आचारवता ज्यायसा स्वातन्त्र्यं तिरस्क्रियते ॥ ७७ ॥

अन्वयः । मानशालिनः स्वधर्मं अनुरुन्धन्ते, अतिक्रमं न, (अनुरुन्धन्ते) अरातिभिः कृतध्वंसाः (सन्तः) आहवात् न पलायन्ते । वाच्य—मानशालिभिः स्वधर्मः अनुरुध्यते । कृतध्वंसैः न पलाय्यते ॥ ७८ ॥

"ननु भवान् गृहस्थ एव, तत्कथमर्वाङ्मुनित्वविरोधः ?" इत्याशङ्क्य, सत्यं गृहस्थोऽस्मि तथापि कृतनिखिलगृहस्थकर्त्तव्यस्यैव वानप्रस्थाधिकारो न गृहस्थमात्रस्य । न चाहमद्यापि कृतकृत्य इत्युत्तरमाह—आसक्तेति । आसक्ता लग्ना अवश्यं कर्त्तव्या इत्यर्थः । रूढ़ा प्रसिद्धा महती इत्यर्थः । इयं पूर्वोक्ता धूः वैरिनिर्य्यातनरूपा । दूरगा दूरवर्त्तिनी जननी च माता अपि । तथा नृपोऽपि आचारवान्, तपोधिक इत्यर्थः । तत्रापि ज्यायान् ज्येष्ठः नृपः युधिष्ठिरश्च मे मम स्वातन्त्र्यं स्वाच्छन्द्यं तिरस्करोति दूरीकरोति, आश्रमान्तरं प्रतिबध्नाति इत्यर्थः । तिरस्करोतीति प्रत्येकमभिसम्बध्यते, अन्यथा बहुवचनप्रसङ्गात् ॥ ७७ ॥

उक्तमर्थमुपसंहरति—स्वधर्ममिति । मानशालिनः स्वधर्मं क्षात्रधर्मम् अनुरुन्धन्ते अनुवर्त्तन्ते अतिक्रमं स्वधर्मातिक्रमं अनुरुन्धन्ते । ततः किमत आह—अरातिभिरिति । अरातिभिः कृतध्वंसाः कृतापकाराः सन्तः आहवात् न पलायन्ते, अयमेव स्वधर्मानुरोध इत्यर्थः । "उपसर्गस्यायतौ" इति रेफस्य लत्वम् । अत्र मनुः—"न निवर्त्तेत संग्रामात् क्षात्रधर्ममनुस्मरन्" इति । अत्र उत्तरवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७८ ॥

৭৭। আমি এখনও কৃতকার্য্য হই নাই, এই অবশ্যকর্ত্তব্য শত্রুনির্য্যাতনের গুরুভার, আমার দূরবর্ত্তিনী জননী এবং আচারনিষ্ঠ ভ্রাতা রাজা যুধিষ্ঠির ইঁহারাই আমার স্বচ্ছন্দচারিতা দূরীকৃত করিয়াছেন।

৭৮। মানশালী ব্যক্তিগণ স্বধর্ম্মের অনুবর্ত্তন করেন; (কিন্তু) স্বধর্ম্মাতিক্রম করেন না। তাঁহারা অরাতিগণকর্ত্তৃক অপকৃত হইয়াও সমর হইতে পলায়ন করেন না।

विच्छिन्नाभ्रविलायं वा विलीये नगमूर्द्धनि ।
आराध्य वा सहस्राक्षमयश:शल्यमुद्धरे ॥৭৯॥

इत्युक्तवन्तं परिरभ्य दोर्भ्यां
तनूजमाविष्कृतदिव्यमूर्त्ति: ।
अघोपघातं मघवा विभूत्यै
भवोद्भवाराधनमादिदेश ॥ ৮০ ॥

प्रीते पिनाकिनि मया सह लोकपालै-
र्लोकत्रयेऽपि विहिताप्रतिवार्य्यवीर्य्य: ।

अन्वय: । (अहं) विच्छिन्नाभ्रविलायं नगमूर्द्धनि विलीये वा, वा सहस्राक्षम् आराध्य अयश:-शल्यम् उद्धरे । वाच्य— + + । मया अयश:शल्यम् उद्ध्रियते ॥ ৭৯ ॥

अन्वय: । मघवा इत्युक्तवन्तं तनूजम् आविष्कृतदिव्यमूर्त्ति: सन् दोर्भ्यां परिरभ्य विभूत्यै अघोपघातं भवोद्भवाराधनम् आदिदेश । वाच्य—मघोना आविष्कृतदिव्यमूर्त्तिना । + भवोद्भवाराधनम् आदिदिशे ॥ ৮০ ॥

किं बहुना ममायं निश्चय: श्रूयतामित्याह—विच्छिन्नेति । विच्छिन्नं वाताहतं यत् अभ्रं तदिव विलीय इति विच्छिन्नाभ्रविलायं यथा तथा, "उपमाने कर्म्मणि च" इति कर्त्तरि उपपदे णमुल् । नगमूर्द्धनि अस्मिन् गिरिशृङ्गे विलीये विशीर्य्ये वा, कषादिषु यथाविध्यनुप्रयोग: । यद्वा सहस्राक्षमिन्द्रमाराध्य अयश: एव शल्यं तत् उद्धरे उद्धरिष्यामि । न तु गत्यन्तरशङ्का इत्यर्थ: । वाशब्दो विकल्पे ॥ ৭৯ ॥

इतीति । मघवा इन्द्र: इतुयक्तवन्तं पुत्त्रमर्जुनम् आविष्कृता प्रकटिता दिव्यमूर्त्ति: निजरूपं येन स: तथोक्त: सन् दोर्भ्यां बाहुभ्यां परिरभ्य विभूत्यै श्रेयसे । उपहन्यते अनेनेत्युपघातं, करणे घञ् प्रत्यय:, अघानां दु:खानामुपघातं अघोपघातं, भव: संसार: तस्य उद्भव: कारणमिति भवोद्भव: शिव:, तस्य आराधनम् उपासनम् आदिदेश । शिवमुद्दिश्य तपश्चर इति आज्ञापयामास इत्यर्थ: ॥ ৮০ ॥

৭৯। হয় আমি ছিন্ন ভিন্ন অভ্রখণ্ডের ন্যায় শৈলশিখরে বিলয় পাইয়া যাইব, না হয় ইন্দ্রের আরাধনা করিয়া অকীর্ত্তিরূপ শল্য উৎপাটন করিব।

৮০। অর্জ্জুন এই কথা কহিলে, ইন্দ্র স্বীয় দিব্য মূর্ত্তি প্রকাশ করত তাঁহাকে আলিঙ্গন করিয়া স্বীয় শ্রেয়োনিমিত্ত দুঃখনাশক জগৎকারণ মহাদেবের আরাধনার আদেশ দিলেন।

लक्ष्मीं समुत्सुकयितासि भृशं परेषा-
मुच्चार्य्य वाचमिति तेन तिरोबभूवे ॥८१॥

इति इन्द्रसमागमो नामैकादशः सर्गः ॥११॥

---

## द्वादशः सर्गः ।

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं
विधिवत् तपांसि विदधे धनञ्जयः ॥१॥

अन्वयः। पिनाकिनि प्रीते लोकपालैः सह मया लोकत्रये अपि विहितापतिवार्य्यवीर्य्यः (सन्) परेषां लक्ष्मीं भृशं समुत्सुकयिता असि, इति वाचं उच्चार्य्य तेन तिरोबभूवे। वाच्य—+ + + विहितापतिवार्य्यवीर्य्येण त्वया लक्ष्मीः समुत्सुकयितासि। सः तिरोबभूव ॥ ८१ ॥

अन्वयः। अथ रुचिरवदनः धनञ्जयः वासवस्य वचनेन त्रिलोचनं क्लान्तिरहितं (यथा तथा) अभिराधयितुं तपांसि विधिवत् विदधे। वाच्य···रुचिरवदनेन धनञ्जयेन तपांसि विदधिरे ॥ १ ॥

प्रीत इति। पिनाकिनि शिवे प्रीते सति लोकपालैः सह मया लोकत्रयेऽपि विहितं दत्तम् अप्रतिवार्य्यम् अनिवार्य्यं वीर्य्यं यस्य सः तथोक्तः सन् परेषां शत्रूणां लक्ष्मीं भृशं समुत्सुकयितासि समुत्सुकां त्वयि अनुरक्तां कर्त्तासि, पुनराहरिष्यसि इत्यर्थः। वीरभोग्याः सम्पद इति भावः। उत्सुक-शब्दात् "तत्करोति" इति ण्यन्तात् कर्त्तरि लुट्। इति वाचम् उच्चार्य्य तेन इन्द्रेण तिरोबभूवे अन्तर्दधे। भावे लिट् ॥ ८१ ॥

इति किरातार्जुनीये एकादशसर्गव्याख्या समाप्ता ॥ ११ ॥

---

अथेति। अथ इन्द्रतिरोधानानन्तरं रुचिरवदनः इन्द्रसाक्षात्कारसन्तोषात् प्रसन्नमुखः धनञ्जयः अर्जुनः वासवस्य वचनेन उपदेशेन त्रिलोचनं शिवं क्लान्तिरहितं यथा तथा अभिराधयितुं प्रसादयितुं तपांसि विधिवत् विध्युक्तं

৮১। পিনাকী প্রীত হইলে লোকপালগণসহ আমি তোমার এমন বীর্য্য বিধান করিয়া দিব, যাহা এই ত্রিলোকেও অপ্রতিহত হইবে, তুমি তদবস্থায় শত্রুলক্ষ্মীকে তোমার প্রতি একান্ত সমুৎসুক করিয়া তুলিবে, ইন্দ্র এই বলিয়া অন্তর্হিত হইলেন।

अभिरश्मिमालि विमलस्य
धृतजयधृतेरनाशुषः ।
तस्य भुवि बहुतिथास्तिथयः
प्रतिजग्मुरेकचरणं निषीदतः ॥२॥
वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्य्यमविभाव्यवैभवम् ॥३॥

अन्वयः । अभिरश्मिमालि भुवि एकचरणं निषीदतः विमलस्य धृतजयधृतेः अनाशुषः तस्य बहुतिथाः तिथयः प्रतिजग्मुः । वाच्य—बहुतिथाभिः तिथिभिः प्रतिजग्मे ॥ २ ॥

अन्वयः । पाण्डवः सततं वपुरिन्द्रियोपतपनेषु असुखेषु नगपतिः इव स्थिरतां व्याप, ( तथाहि ) महतां धैर्य्यम् अविभाव्यवैभम् । वाच्य—पाण्डवेन नगपतिना इव स्थिरता व्यापे । धैर्य्येण अविभाव्यवैभवेन ( भूयते ) ॥ ३ ॥

यथाशास्त्रमित्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । विदधे चक्रे । अस्मिन् सर्गे उद्गताछन्दः, "सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता । त्र्यङ्घ्रिगतभनजला गयुताः सजसाजगौ चरणमेकतः पठेत् ॥" इति लक्षणात् ॥ १ ॥

अभिरश्मीति । अभिरश्मिमालि अभिसूर्य्यं सूर्य्याभिमुखं भुवि एकचरणं निषीदतः एकचरणेन तिष्ठतः विमलस्य बाह्यान्तरशुद्धिमतः । धृता जयधृतिर्जयेच्छा येन तस्य अनाशुषः अनश्नतः, "उपेयिवाननाश्वानननूचानश्च" इति निपातः । तस्य अर्ज्जुनस्य बहूनां पूरणाः बहुतिथाः, बहुसंख्यकाः इत्यर्थः । "तस्य पूरणे डट्" । "बहुपूगगणसङ्घस्य तिथुक्" इति तिथुगागमः । तिथयः दिनानि प्रतिजग्मुः । अत्र तिथिशब्दः पुंलिङ्गः, "तदाद्यास्तिथयो द्वयोः" इत्यभिधानात् । अन्यथा बहुतिथा इत्यत्र टित्वात् ङीप् स्यात् ॥ २ ॥

वपुरिति । पाण्डवः अर्ज्जुनः सततं वपुषः इन्द्रियाणाञ्च उपतपनेषु सन्तापकरेषु । करणे ल्युट् । असुखेषु अनशनादिदुःखेष्वपि नगपतिर्गिरीन्द्र इव स्थिरतां दार्ढ्यं व्याप प्राप । तथाहि—महतां धैर्य्यम् अविभाव्यं दुर्बोधं वैभवं सामर्थ्यं यस्य तत् तथोक्तम् । धीराणामकिञ्चित्करं दुःखमिति भावः ॥ ३ ॥

১। অনন্তর প্রসন্নবদন ধনঞ্জয় বাসবের উপদেশে ত্রিলোচনকে অক্লান্তভাবে আরাধনা করিবার নিমিত্ত যথাবিধি তপস্যা করিতে লাগিলেন।

न पपात सन्निहितपक्ति-
सुरभिषु फलेषु मानसम्।
तस्य शुचिनि शिशिरे च पय-
स्यमृतायते हि सुतपः सुकर्मणाम् ॥४॥

न विसिस्मिये न विषसाद
मुहुरलसतां न चाददे।
सत्त्वमुरुधृति रजस्तमसी
न हतः स्म तस्य हतशक्तिपेलवे ॥५॥

अन्वयः। तस्य मानसं सन्निहितपक्तिसुरभिषु फलेषु तथा शुचिनि शिशिरे च पयसि न पपात। हि (तथाहि) सुकर्मणां सुतपः अमृतायते। वाच्य—मानसेन न पेते, सुतपसा अमृतायते ॥ ४ ॥

अन्वयः। सः न विसिस्मिये, न विषसाद, मुहुः अलसतां न च आददे, हतशक्तिपेलवे रजस्तमसी तस्य उरुधृति सत्त्वं न हतः स्म। वाच्य—तेन न विसिस्मिये, विषेदे, आददे। हतशक्तिपेलवाभ्यां रजस्तमोभ्यां सत्त्वं न हन्यते ॥ ५ ॥

नेति। तस्य अर्ज्जुनस्य मानसं मनः सन्निहितानि समीपस्थानि यानि पक्तिसुरभीणि पाकसुगन्धीनि तेषु फलेषु। तथा शुचिनि स्वच्छे शिशिरे शीतले पयसि च न पपात, न किञ्चित् आचकाङ्क्ष इति भावः। प्राणधारणं तु तस्य तप एवेत्याह—तथाहि,—सुकर्मणां सुकृतिनां शोभनं तपः सुतप एव अमृतायते अमृतवत् आचरति। किं तपस्विनां तर्पणान्तरैरिति भावः। "लोहितादिडाज्भ्यः क्यष्"। "वा क्यषः" इति आत्मनेपदम्। लोहितादिराकृतिगणः ॥ ४ ॥

नेति। सः अर्ज्जुनो न विसिस्मिये अहो महत् तपः तप्तमिति न विस्मयं जगाम।—"तपः क्षरति विस्मयात्" इति स्मृतेरिति भावः। न विषसाद फलविलम्बाद्गतोत्साहो न बभूव।—"विषादश्चेतसो भङ्गः" इति लक्षणात्। "सदिरप्रतेः" इति षत्वम्। मुहुरलसतां तपसि मन्दोद्यमत्वञ्च न अगमत्। किञ्च हतशक्तिनी हतसारे अतएव पेलवे भङ्गुरे ते हतशक्ति-

২। অর্জ্জুন সূর্য্যাভিমুখে ভূতলে একপদে অবস্থান করিলেন, তাঁহার বাহ্যাভ্যন্তর বিশুদ্ধ হইয়াছিল, তিনি জয়াভিলাষ পোষণ করিয়া অনাহারে রহিলেন। এই অবস্থায় তাঁহার বহুদিন অতীত হইল।

৪। অর্জ্জুনের নিকটে অনেক পক্ব সুগন্ধ ফল ও স্বচ্ছ শীতল জল ছিল; কিন্তু সে সকলে তাঁহার চিত্ত আকৃষ্ট হইত না। বস্তুতঃ সুকৃতিগণের সুতপস্যাই অমৃতবৎ হইয়া থাকে।

तपसा कृशं वपुरुवाह
स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां
किमिवास्ति यन्न सुकरं मनस्विभिः ॥६॥
ज्वलतोऽनलादनुनिशीथ-
मधिकरुचिरम्भसां निधिः ।
धैर्य्यगुणमवजयन् विजयी
ददृशे समुन्नततरः स शैलतः ॥ ७ ॥

अन्वयः । स तपसा कृशं (तथापि) विजितजगत्त्रयोदयं तत्त्वविदाम् अपि त्रासजननं वपुः उवाह । यत् मनस्विभिः न सुकरं तत् किम् इव न अस्ति । वाच्य—तेन + + + वपुः ऊहे । येन सुकरेण (भूयते) तेन केन भूयते ॥ ६॥

अन्वयः । विजयी सः अनुनिशीथं ज्वलतः अनलात् अधिकरुचिः तथा अम्भसां निधिं धैर्य्यगुणम् अवजयन् शैलतः समुन्नततरः ददृशे (जनैः) । वाच्य—विजयिनं तं अधिकरुचिं + + अवजयन्तं समुन्नततरं ददृशुः (जनाः) ॥ ७ ॥

पेलवे रजस्तमसी गुणौ उरूधृति महासारं तस्य अर्जुनस्य सत्त्वं सत्त्वगुणं न हतवती । हतौ: । "लट् स्मे" इति भूतार्थे लट् ॥ ५ ॥

तपसेति । सः अर्जुनः तपसा कृशं तथापि विजितः जगत्त्रयस्य भुवनत्रयस्य उदयः उत्कर्षः येन तत् तथोक्तम् । किञ्च तत्त्वविदामपि लोकहितार्थं तत्त्वं जानतामपि त्रासजननं भयङ्करं वपुरुवाह वहति स्म । न च एतत् चित्रमित्याह—किमिति । यत् मनस्विभिर्न सुकरं तत् किमिवास्ति ? न किमपीत्यर्थः । इवशब्दो वाक्यालङ्कारे । "मनस्विनाम्" इति पाठेऽपि शेषे षष्ठी स्यादेव, कृद्योगलक्षणायाः "न लोक" इत्यादिना निषेधात् ॥ ६ ॥

ज्वलत इति । विजयी सः अर्जुनः अनुनिशीथमर्द्धरात्रे, विभक्त्यर्थे अव्ययीभावः । "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः । ज्वलतो दीप्यमानात्

৫। 'অহো আমি মহাতপস্যা করিলাম' এই বলিয়া অর্জ্জুন বিস্ময়াপন্ন হন নাই, ফল পাইতে বিলম্ব হইতেছে বলিয়াও বিষণ্ণ হন নাই; এবং তপস্যাব্যাপারে শিথিলযত্নও হন নাই। তদীয় নিজের ভঙ্গুর তমঃ এবং রজোগুণ তাঁহার প্রবল সত্ত্বগুণকে নষ্ট করে নাই।

৬। অর্জ্জুনের দেহ তপস্যায় কৃশ হইয়াছিল; তথাপি উহা যেন ত্রিভুবনের উৎকর্ষ জয় করিয়াছিল; অপিচ ঐ দেহ তত্ত্বজ্ঞগণেরও ত্রাসজনক হইয়াছিল। ফলে এমন কি আছে, যাহা মনস্বিগণের অসাধ্য।

जपत: सदा जपमुपांशु
वदनमभितो विसारिभि:।
तस्य दशनकिरणै: शुशुभे
परिवेषभीषणमिवार्कमण्डलम्॥ ८॥

कवचं स बिभ्रदुपवीत-
पदनिहितसज्यकार्मुक:।
शैलपतिरिव महेन्द्रधनु:-
परिवीतभीमगहनो विदिद्युते॥ ९॥

अन्वय:। सदा उपांशु जपं जपत: तस्य वदनम् अभित: विसारिभि: दशनकिरणै: परिवेषभीषणम् अर्कमण्डलम् इव शुशुभे। वाच्य—वदनेन + + भीषणेन अर्कमण्डलेन इव शुशुभे॥ ८॥

अन्वय:। कवचं बिभ्रत् उपवीतपदनिहितसज्यकार्मुक: स: महेन्द्रधनु:परिवीतभीमगहन: शैलपति: इव विदिद्युते। वाच्य— + बिभ्रता + सज्यकार्मुकेण तेन + गहनेन शैलपतिना इव विदिद्युते॥ ९॥

अनलादग्नेरधिकरुचि: दीप्यमान: तथा अम्भसां निधे: धैर्यं गाम्भीर्यं तदेव गुण: तम् अवजयन्। किञ्च शैलादपि समुन्नततरो ददृशे दृष्ट:। अत्र रुच्यादिभिरनलाद्याधिक्यासम्बन्धे सम्बन्धाभिधानात् अतिशयोक्तिरलङ्कार:॥७

जपत इति। सदा उपांशु रहो गूढ़मित्यर्थ:। "रहस्योपांशु चालिङ्गे" इत्यमर:। "करणवदनशब्दमनुप्रयोग उपांशु" इति कौमारलक्षणम्। जप्यते इति जप: तं जपं मन्त्रमित्यर्थ:। जपत: पठतस्तस्यार्जुनस्य वदनं कर्त्तृ अभित: विसारिभि: प्रसरणशीलैर्दशनकिरणै: हेतुभि: परिवेषभीषणम् अर्कमण्डलमिव शुशुभे। "परिवेषस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमर:॥८

कवचमिति। कवचं वर्म बिभ्रदुपवीतपदे यज्ञोपवीतस्थाने निहितम् आरोपितं सज्यं कार्मुकं येन स: तथोक्त: स: अर्जुन: महेन्द्रधनुषा परिवीतं परिवेष्टितं भीमं गहनं वनं यस्य स: शैलपतिरिव विदिद्युते शुशुभे॥९॥

৭। দেখা যাইতে লাগিল, সেই বিজয়ী অর্জ্জুন যেন নিশীথকালে জ্বলিত অনল হইতেও অধিক কান্তি ধারণ করিয়াছেন; এবং সমুদ্রের ধৈর্য্যগুণ জয় করিয়া যেন শৈল হইতেও অধিক সমুন্নত হইয়াছেন।

৮। অর্জ্জুন সর্ব্বদা গূঢ় মন্ত্র জপ করিতেন; জপকালে তাঁহার বদনের চতুর্দ্দিকে দশনকিরণরাজী বিকীর্ণ হইত; তাহাতে ঐ বদন পরিবেষ্টিত ভীষণ সৌরমণ্ডলবৎ শোভা পাইত।

৯। অর্জ্জুন বর্ম্ম ধারণ করিয়াছিলেন, তাঁহার যজ্ঞোপবীতস্থানে জ্যাযুক্ত কার্ম্মুক নিহিত ছিল; সুতরাং তিনি ইন্দ্রচাপবেষ্টিত-ভীষণারণ্যশোভিত শৈলরাজের ন্যায় প্রতিভাত হইতেছিলেন।

प्रविवेश गामिव कृशस्य
नियमसवनाय गच्छतः।
तस्य पदविनमितो हिमवान्
गुरुतां नयन्ति हि गुणा न संहतिः ॥१०॥

परिकीर्णमुद्यतभुजस्य
भुवनविवरे दुरासदम्।
ज्योतिरुपरि शिरसो विततं
जगृहे निजान् मुनिदिवौकसां पथः ॥११॥

अन्वयः। नियमसवनाय गच्छतः कृशस्य तस्य पदविनमितः हिमवान् गां प्रविवेश इव। गुणाः गुरुतां नयन्ति, संहतिः न (नयति)। वाच्य—नमितेन हिमवता गौः प्रविविशे। गुणैः गुरुता नीयते, संहत्या न ॥ १० ॥

अन्वयः। उद्यतभुजस्य (तस्य) शिरसः उपरि विततं भुवनविवरे परिकीर्णं दुरासदं ज्योतिः मुनिदिवौकसां निजान् पथः जगृहे। वाच्य—विततेन परिकीर्णेन दुरासदेन ज्योतिषा निजाः पन्थानः जगृहिरे ॥ ११ ॥

प्रविवेशेति। नियमसवनाय नियमस्नानाय कृशस्य तपःकर्षितस्य तथा, "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति विश्वः। गच्छतस्तस्य अर्जुनस्य पदैः पादन्यासैः विनमितः हिमवान् गां भुवं प्रविवेश इवेत्युत्प्रेक्षा। ननु कृशस्य कथमियत् गौरवम्? तत्राह—गुणाः सारादयः गुरुतां नयन्ति प्रापयन्ति हि। संहतिः सङ्घातः मूर्त्तिरिति यावत्, न नयति। अन्तःसारात् हि गौरवं भवति न तु बाह्यात् स्थौल्यात्। तत्र च हेमपिण्डतूलपिण्डाविव निदर्शनमिति भावः ॥ १० ॥

परिकीर्णमिति। उद्यतभुजस्य ऊर्द्ध्वबाहोः तस्य शिरस उपरि। "षष्ठ्यतसर्थप्रत्ययेन" इति षष्ठी। विततं विस्तृतं भुवनयोः विवरे द्यावापृथिव्योरन्तराले परिकीर्णं व्याप्तम्।—दुरासदं दुर्धर्षं ज्योतिस्तेजः मुनीनां दिवौकसाञ्च निजान् नियतान् पथो मार्गान् जगृहे प्रतिबबन्ध इत्यर्थः ॥११॥

१०। তপঃকৃশ অর্জ্জুন যখন ব্রতবিহিত স্নানার্থ গমন করিতেন, তখন তাঁহার পদন্যাসভরে হিমালয় যেন বিনমিত হইয়া ভূতলে প্রবেশ করিত। বস্তুতঃ অন্তঃসারাদি গুণরাশিই গুরুত্বপ্রাপ্তির কারণ, আকৃতি নহে।

১১। ঊর্দ্ধবাহু অর্জ্জুনের মস্তকোপরি (তখন) একটা দুর্দ্ধর্ষ জ্যোতিঃ বিকীর্ণ হইল। ঐ জ্যোতিঃ অন্তরীক্ষ ও ভূতলের অন্তরালে পরিব্যাপ্ত হইয়া দেব ও মুনিগণের স্ব স্ব পথ রুদ্ধ করিল।

रजनीषु राजतनयस्य
बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे
शशिरश्मिसङ्गमयुजा नभः श्रिया ॥१२॥

महता मयूखनिचयेन
शमितरुचि जिष्णुजन्मना ।
ह्रीतमिव नभसि वीतमले
न विराजते स्म वपुरंशुमालिनः ॥ १३ ॥

तमुदीरितारुणजटांशु-
मधिगुणशरासनं जनाः ।

अन्वयः । बहुलसमये अपि रजनीषु राजतनयस्य धामभिः भिन्नतिमिरनिकरं नभः शशिरश्मि-सङ्गमयुजा श्रिया न जहे । वाच्य—… सङ्गमयुजा श्रीः नभः न जहौ ॥ १२ ॥

अन्वयः । जिष्णुजन्मना महता मयूखनिचयेन शमितरुचि अंशुमालिनः वपुः ह्रीतमिव नभसि न विराजते स्म । वाच्य—शमितरुचिना वपुषा ह्रीतेन इव न विराज्यते स्म ॥ १३ ॥

रजनीष्विति । बहुलसमये कृष्णपक्षेऽपि रजनीषु रात्रिषु राजतनयस्य अर्जुनस्य धामभिः तेजोभिः भिन्नः तिमिरनिकरो यस्य तत् नभः शशि-रश्मीनां सङ्गमेन हेतुना युजा सङ्गतया श्रिया, तत्कृतितुल्यया श्रिया इत्यर्थः । अतएव निदर्शनालङ्कारः । न जहे न त्यक्तम् । जहातेः कर्मणि लिट् । ज्योत्स्नातुल्यज्योतिर्जातमित्यर्थः ॥ १२ ॥

महतेति । जिष्णोः अर्जुनात् जन्म यस्य तेन । जन्मोत्तरपदव्यधिकरणो बहुव्रीहिः । महता मयूखनिचयेन किरणसमूहेन शमितरुचि हतप्रभम् अंशुमालिनो वपुरर्कविम्बं ह्रीतं जितत्वाल्लज्जितमिवेत्युत्प्रेक्षा । वीतमले मेघनीहाराद्यावरणरहिते अपीत्यर्थः । नभसि न विराजते स्म ॥ १३ ॥

১২। রাজনন্দন অর্জ্জুনের তেজোরাশি দ্বারা তিমিরনিকর নির্ভিন্ন হওয়ায় কৃষ্ণপক্ষীয় রজনীযোগেও নভোমণ্ডল শশিকর-সঙ্গত শোভা দ্বারা পরিত্যক্ত হয় নাই, অর্থাৎ সর্ব্বদাই সেখানে জ্যোৎস্নাতুল্য জ্যোতিঃ হইয়াছিল।

১৩। আকাশস্থ অর্কবিম্ব (তখন) অর্জ্জুন দেহজাত বিপুল ময়ূখমালায় হতপ্রভ হওয়ায় লজ্জিত হইয়াই যেন আকাশে আর বিরাজ করিল না।

रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ॥ १४ ॥
मरुतां पतिः स्विदहिमांशु-
रुत पृथुशिखः शिखी तपः।
तप्तुमसुकरमुपक्रमते
न जनोऽयमित्यवयये स तापसैः॥ १५ ॥

अन्वयः। उदीरितारुणजटांशुम् अधिगुणशरासनं तं जनाः आसुरीः पुरीः मिमन्थिषुम् अनुदित-ललाटदृशं रुद्रम् इव ददृशुः। वाच्या— + × जटांशुः अधिगुणशरासनः सः जनैः मिमन्थिषुः × × ललाटदृक् रुद्र इव ददृशे ॥ १४ ॥

अन्वय.। मरुतां पतिः स्वित, अहिमांशुः उत, पृथुशिखः शिखी वा, असुकरं तपः तप्तुम् उप-क्रमते, अयं जनः न इति सः तापसैः अवययेे। वाच्य—मरुता पत्या अहिमांशुना, पृथुशिखेन शिखिनः उपक्रम्यते, तं तापसाः अवययुः ॥ १५ ॥

तमिति। उदीरिताः उद्गता अरुणाः जटानाम् अंशवः यस्य तम्। अधिगुणमधिज्यं शरासनं यस्य तम् अर्जुनं जनाः सिद्धगणाः। आसुरीः असुरसम्बन्धिनीः पुरीः मिमन्थिषुं मन्थितुमिच्छुम्। मथेः सन्नन्तादुप्रत्ययः। तथा अनुदिता ललाटे दृक् यस्य तं, साक्षात् त्रिपुरविजयोद्यतम् अभालाक्षं रुद्रमिव ददृशुः। अत्र अभालाक्षस्य रुद्रस्य असम्भवात् स्वतःसिद्धोप-मानासिद्धेर्नेयमुपमा, किन्तु उत्प्रेक्षा। सा च अभालाक्षमिति उपमानात् उपमेयस्य न्यूनत्वकथनार्थे अन्वयव्यतिरेकेण उज्जीवितेति अनयोरङ्गाङ्गिभावेन सङ्करः। उपमा तु व्यज्यते इत्यालङ्कारेण अलङ्कारध्वनिः ॥ १४ ॥

मरुतामिति। मरुतां पतिः स्वित् देवेन्द्रो वा, अहिमांशुः उत सूर्य्यो वा, पृथुशिखः महाज्वालः शिखी पावको वा, असुकरं दुष्करं तपः तप्तुमुप-क्रमते ? अयं जनः पुरुषः कश्चित् प्राकृतो न इति स अर्जुनः तापसैः तप-स्विभिः। "अण् च" इति मत्वर्थीयः अण्प्रत्ययः। अवययेे अवगतः। यातेरवपूर्वात् कर्म्मणि लिट्। अत्र इन्द्रत्वादिकं धर्ममारोप्य जनत्वाप-वादात् साम्यमारोप्य अपह्नवालङ्कारः। सामान्यलक्षणं तु—"निषिद्धविषये साम्यारोपो ह्यपह्नवः" इति ॥ १५ ॥

১৪। অর্জ্জুনের জটাচ্ছটায় অরুণবর্ণ অংশুপুঞ্জ উদ্গত হইয়াছে, তিনি শরাসনে জ্যা রোপণ করিয়া আছেন, এ অবস্থায় সিদ্ধগণ তাঁহাকে অসুরপুরী-মথনেচ্ছু ললাটনেত্রশূন্য রুদ্রের ন্যায় অবলোকন করিতে লাগিলেন।

न ददाह भूरुहवनानि
हरितनयधाम दूरगम् ।
न स्म नयति परिशोषमपः
सुसहं बभूव न च सिद्धतापसैः ॥ १६ ॥
विनयं गुणा इव विवेक-
मपनयभिदं नया इव ।
न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः ॥ १७ ॥

अन्वयः । दूरगं हरितनयधाम भूरुहवनानि न ददाह, तथा अपः परिशोषं न नयति स्म, (तथापि) सिद्धतापसैः सुसहं न च बभूव । वाच्य—दूरगेण धाम्ना···वनानि न देहिरे, आपः परिशोषं न नीयन्ते स्म, सुसहेन न बभूवे ॥ १६ ॥

अन्वयः । अथो अशरणाः महर्षयः विनयं गुणाः इव, अपनयभिदं विवेकं नया इव, न्यायम् अवधयः इव शिवं शरणं ययुः । वाच्य—अशरणैः महर्षिभिः विनयः गुणैः इव, अपनयभित् विवेकः नयैः इव शिवः शरणं ययै ॥ १७ ॥

न ददाहेति । दूरगं व्यापकमित्यर्थः । हरितनयस्य इन्द्रसुतस्य अर्जुनस्य धाम तेजो भूरुहवनानि न ददाह, अग्निवदिति भावः । तथा अपो जलानि परिशोषं न नयति स्म, अर्कवदिति भावः । तथापीति शेषः । सिद्धाश्च तापसाश्च तैः, सुसहं न बभूव । अतोऽस्य अलौकिकं तेज इति भावः । अतएव दुःसहत्वदाहाद्यजनकत्वयोर्विरोधात् विरोधाभासः अलङ्कारः । "आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता" इति लक्षणात् ॥ १६ ॥

विनयमिति । अथो अनन्तरम् अशरणाः महर्षयः मुनयः विनयं शिक्षां गुणाः औदार्य्यादय इव, अशिक्षितस्य तदभावादिति भावः । अपनयभिदं दुर्नीतिवारकं विवेकं सदसज्ज्ञानं नया नीतय इव । अविवेकिनो नीत्यभावादिति भावः । नीतिः षाड़्गुण्यप्रयोगः । नीयते अनेनेति न्यायः नियामकं प्रमाणं तम् अवधयः समया इव । अप्रामाणिकस्य समयो-

১৫। যিনি এই কঠোর তপস্যা করিতে প্রবৃত্ত হইয়াছেন, ইনি কে, দেবেন্দ্র কিংবা সূর্য্য, অথবা সংজ্বালমালী হুতাশন ? তত্রত্য তাপসগণ সেই অর্জ্জুনকে এইরূপে মনুষ্য ভিন্ন কোন তেজোময় পদার্থ বলিয়া বুঝিতেছিলেন।

১৬। অর্জ্জুনের দূরব্যাপী তেজ তথাকার বনাবলী দগ্ধ করে নাই, কিংবা জলরাশি শুষ্ক করে

परिवीतमंशुभिरुदस्त-
दिनकरमयूखमण्डलैः।
शम्भुमुपहतदृशः सहसा
न च ते निचायितुमभिप्रसेहिरे ॥ १८ ॥

अथ भूतभव्यभवदीश-
मभिमुखयितुं कृतस्तवाः।
तव महसि ददृशुः पुरुषं
कमनीयविग्रहमयुग्मलोचनम् ॥ १९ ॥

अन्वयः। उदस्तदिनकरमयूखमण्डलैः अंशुभिः परिवीतं शम्भुम् उपहतदृशः ते महर्षयः सहसा निचायितुं न अभिप्रसेहिरे। वाच्य—उपहतदृग्भिः तैः महर्षिभिः न सेहे ॥ १८ ॥

अन्वयः। अथ भूतभव्यभवदीशम् अभिमुखयितुं कृतस्तवाः (सन्तः) तव महसि कमनीयविग्रहम् अयुग्मलोचनं पुरुषं ददृशुः। वाच्य— + + कृतस्तवैः (सद्भिः) कमनीयविग्रहः अयुग्मलोचनः पुरुषः ददृशे ॥ १९ ॥

स्त्ङ्घितत्वादिति भावः। शिवं त्रिनयनं शरणं रक्षितारम्। "शरणं गृहरक्षित्रो"-रित्यमरः। ययुः शरणत्वेन प्रापुरित्यर्थः। अशरणाः शरणमिति च उपमास्वपि यथायोग्यं योज्यम्। उपमालङ्कारः ॥१७॥

परिवीतमिति। उदस्तं निरस्तं छादितं दिनकरमयूखमण्डलं यैः तैः, सूर्यतेजोविजयिभिरित्यर्थः। अंशुभिः तेजोभिः परिवीं व्याप्तं शम्भुं शिवम्। उपहतदृशः प्रतिहतदृष्टयः ते महर्षयः, सहसा झटिति निचायितुं निशामयितुं द्रष्टुमित्यर्थः। "चायृ पूजानिशामनयोः" इति धातोः "शकधृष—" इत्यादिना तुमुन्। अभिप्रसेहिरे न शेकुः ॥ १८ ॥

अथेति। अथ दृगुपघातानन्तरं भूतभव्यभवतां भूतभविष्यद्वर्त्तमानानामीशं देवम् अभिमुखयितुम् अभिमुखीकर्त्तुं कृतस्तवाः कृतस्तोत्राः सन्तः न तु अन्यथा इति भावः। "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः। तव पूर्वोक्ते महसि तेजसि कमनीयविग्रहं रम्यमूर्त्तिम् अयुग्मानि त्रीणि लोचनानि यस्य तं पुरुषं ददृशुः ॥ १९ ॥

নাই, তথাপি তত্রত্য সিদ্ধ তাপসগণের তাহা অসহ্য হইয়াছিল।

১৭। অনন্তর গুণ যেমন বিনয়কে, নীতি যেমন দুর্নীতিনাশক বিবেককে, এবং অবধি যেমন ন্যায়কে প্রাপ্ত হয়, তেমনি শরণহীন মহর্ষিগণ শিবের শরণ লইলেন।

১৮। শিব সূর্যতেজোবিজয়ী অংশু-পুঞ্জে পরিব্যাপ্ত, তাই প্রতিহত-নেত্র মহর্ষিগণ সহসা

ककुदे वृषस्य कृतबाहु-
मकृशपरिणाहशालिनि।
स्पर्शसुखमनुभवन्तमुमा-
कुचयुग्ममण्डल इवार्द्रचन्दने ॥ २० ॥
स्थितमुन्नते तुहिनशैल-
शिरसि भुवनातिवर्त्तिना।
साद्रिजलधिजलवाहपथं
सदिगश्नुवानमिव विश्वमोजसा ॥ २१ ॥
अनुजानुमध्यमवसक्त-
विततवपुषा महाहिना।

अन्वयः। अकृश-परिणाहशालिनि वृषस्य ककुदे आर्द्रचन्दने उमाकुचयुग्ममण्डले इव कृतबाहुं (अतः) स्पर्शसुखम अनुभवन्तम् उन्नते तुहिनशैलशिरसि स्थितं, (तथापि) भुवनातिवर्त्तिना ओजसा साद्रिजलधिजलवाहपथं विश्वम् अश्नुवानम्, अनुजानुमध्यम अवसक्तविततवपुषा महाहिना अधिवेष्टितं

अथ पञ्चभिः पुरुषं विशिनष्टि—ककुद इत्यादिना। कीदृशं पुरुषम्? अकृशेन महता परिणाहेन विशालतया शालत इति तथोक्ते। "परिणाहो विशालता" इत्यमरः। वृषस्य वृषभस्य ककुदे अंसकूटे आश्रयीकृते इति शेषः। आर्द्रचन्दने उमायाः कुचयुग्ममण्डले इव कृतबाहुं न्यस्तहस्तम् अतएव स्पर्शसुखम् अनुभवन्तं ककुदस्य तथाविधस्पर्शसुखकरत्वादिति भावः। उपमालङ्कारः॥ २० ॥

स्थितमिति। उन्नते तुहिनशैलशिरसि हिमवतः शिखरे स्थितम्, क्वचित् कोणे स्थितमित्यर्थः। तथापि भुवनातिवर्त्तिना सर्वलोकातिशायिना ओजसा तेजसा अद्रिभिः पर्वतैः, जलधिभिः समुद्रैः जलवाहपथेन आकाशेन च सह वर्त्तत इति तथोक्तम्। दिग्भिः सह वर्त्तत इति सदिक्। उभयत्र अपि "तेन सहेति तुल्ययोग" इति बहुव्रीहिः। विश्वम् अश्नुवानं व्याप्नुवन्तम् इव स्थितमिति उत्प्रेक्षा। "अशूङ व्याप्तौ" इति धातोः शानच्॥ २१ ॥

তাঁহার দিকে তাকাইতে পারিলেন না।

১৯। অনন্তর মহর্ষিগণ ভূত, ভাবী ও বর্ত্তমান কালের অধীশ্বর দেবদেবের আভিমুখ্য-সাধনের জন্য স্তব করিতে করিতে সেই তেজঃপুঞ্জ মধ্যে এক কমনীয় মূর্ত্তি অযুগ্ম-নেত্র পুরুষ দর্শন করিলেন।

২০—২৪। (অর্জ্জুন দেখিলেন) সেই পুরুষ উমার চন্দনার্দ্র কুচযুগ্মমণ্ডলের ন্যায় পীনোন্নত বৃষ-ককুদে হস্ত রাখিয়া স্পর্শ সুখ অনুভব করিতেছেন। তিনি উন্নত হিমাচল-শিখরে অবস্থিত, তথাচ যেন

लोकमखिलमिव भूमिभृता
रवितेजसामवधिनाधिवेष्टितम् ॥ २२ ॥
परिणाहिना तुहिनराशि-
विशदमुपवीतसूत्रताम् ।
नीतमुरगमनुरञ्जयता
शितिना गलेन विलसन्मरीचिना ॥ २३ ॥
प्लुतमालतीसितकपाल-
कुमुदमुपरुद्धमूर्द्धजम् ।

(अतः) रवितेजसाम् अवधिना भूमिभृता अधिवेष्टितम् अखिलं लोकम् इव स्थितं, तुहिनराशि-विशदम् उपवीतसूत्रतां नीतम् उरगम् अनुरञ्जयता परिणाहिना विलसन्मरीचिना शितिना गलेन उपलक्षितं, मालतीसितकपालकुमुदम् अवरुद्धमूर्द्धजं (अतः) सुरसरित्पयसां शिवम् इव (स्थितं)

अनुजान्विति । जानुनोर्मध्ये अनुजानुमध्यम् । विभक्त्यर्थे अव्ययीभावः । अवसक्तं लग्नं विततम् आयतं च वपुः यस्य तेन महाहिना । अवसक्तिका-बन्धभूतेन इत्यर्थः । अधिवेष्टितम् अतएव रवितेजसाम् । अवधिना पर्य्यन्तभूतेन, भूमिभृता लोकालोकाचलेन अधिवेष्टितम्, अखिलं लोकमिव स्थितमिति उपमा । "असूर्य्यम्पश्यापरभागो लोकालोकाचलः" इत्यागमः ॥ २२ ॥

परिणाहिनेति । पुनश्च तुहिनराशिवत् विशदं शुभ्रम् उपवीतसूत्रतां यज्ञोपवीतत्वं नीतं प्रापितमुरगं शेषाहिम् अनुरञ्जयता स्वगुणेरक्तं कुर्वता श्यामीकुर्वता इत्यर्थः । परिणाहिना विशालेन, विलसन्मरीचिना प्रसृतकिरणेन शितिना नीलेन गलेन कण्ठेन उपलक्षितम् । "कण्ठो गलोऽथ ग्रीवायाम्" इत्यमरः । अत्रोरगस्य स्वधवलिमत्यागेन अन्यजन्यनीलिम-ग्रहणात् तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः" इति लक्षणात् ॥ १३ ॥

प्लुतेति । पुनश्च मालती जातीकुसुमम् । "सुमना मालती जातिः".

স্বীয় ভুবনাতিগামী তেজঃপুঞ্জে নীলজলধি ও জলধরপথ সহ সমগ্র বিশ্ব পরিব্যাপ্ত করিতেছেন। তিনি জানুমধ্যগত বিপুলকায় মহাসর্প দ্বারা বেষ্টিত, সুতরাং দেখিয়া বোধ হইল—সূর্য্যতেজের পর্য্যন্তভূত লোকালোক-পর্ব্বত-বেষ্টিত নিখিল লোকই যেন অবস্থিত; তাঁহার গলদেশ বিশাল, কিরণবিস্তারী ও নীলবর্ণ; উহার দ্বারা তাঁহার যজ্ঞোপবীতরূপে প্রতিভাত শেষনাগ অনুরঞ্জিত

शेषमिव सुरसरित्पयसां
शिरसा विसारि शशिधाम बिभ्रतम् ॥२४॥

कुलकम् ।

मुनयस्ततोऽभिमुखमेत्य
नयनविनिमेषनोदिताः ।
पाण्डुतनयतपसा जनितं
जगतामशर्म्म भृशमाचचक्षिरे ॥ २५ ॥

विसारि शशिधाम बिभ्रतं (पुरुषं ददृशुः)। वाच्य—कृतबाहुः अनुभवन् (स्थितः) अंशुवानः ओषधिवेष्टितः अखिललोक इव स्थितः + कपालकुमुदः अवरुद्धमूर्द्धजः शेष इव (स्थितः) बिभ्रत् (पुरुषः ददृशे) ॥ २०—२४ ॥ *

अन्वयः। ततः मुनयः अभिमुखम् एत्य नयननिमेषनोदिताः (सन्तः) पाण्डुतनयतपसा जनितं जगताम् अशर्म्म भृशं आचचक्षिरे। वाच्य—मुनिभिः + + नोदितैः आचचक्षे ॥ २५ ॥

इति। "पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले" इति चामरः। तद्वत् सितं यत् कपालमिव कुमुदं तत् प्लुतम् आप्लुतं येन तत् तथोक्तम्। अवरुद्धमूर्द्धजं व्याप्तशिरोरुहम्। अतएव सुरसरित्पयसां शेषमिव निर्य्यातावशिष्टं गाङ्गम् अम्भः इव स्थितमित्यर्थः। उत्प्रेक्षालङ्कारः। विसारि विसत्वरं शशिधाम शिरसा बिभ्रतं पुरुषं ददृशुरिति पूर्व्वेणान्वयः ॥ २४ ॥

मुनय इति। ततो दर्शनानन्तरं मुनयः अभिमुखम् एत्य शिवस्येति शेषः। नयनविनिमेषेण नेत्रसंज्ञया नोदिताः प्रेरिताः सन्तः पाण्डुतनयस्य

হইতেছে। তিনি মস্তকোপরি চন্দ্র-রশ্মি ধারণ করিতেছেন; উহাতে তাঁহার জাতীকুসুমবৎ শুভ্রবর্ণ কপালকুমুদ আপ্লুত হইতেছে—কেশপাশ ব্যাপ্ত করিয়াছে, সুতরাং উহা যেন ক্ষরিতাবশিষ্ট গঙ্গাম্বুর ন্যায়ই প্রতিভাত হইতেছে।

* २४—२५ श्लोकयोर्मध्ये पुस्तकान्तरे क्षेपकोऽयं दृश्यते—

बहुभिश्च बाहुभिरहीनभुजगवलयैर्विराजितम्।
चन्दनतरुभिरिवालघुभिः प्रबलायतैर्मलयमेदिनीभृतम् ॥

बहुभिरिति। अहीनां सर्पाणां मध्ये ये इनाः श्रेष्ठा भुजगास्त एव वलयानि येषां तैः सर्पाभरणैरित्यर्थः। बहुभिरनेकैर्बाहुभिः, सहस्रभुजत्वात्तस्येति भावः। विराजितं शोभितं चन्दनतरुभिरनेकैः मलयमेदिनीभृतमिव स्थितम्। चन्दनतरवोऽप्यहीनां महान्तो भुजगारूपा वलयो वेष्टनं येषां तैरिति। अलघुभिर्महद्भिः प्रबलाश्च त आयताश्च तैरुभयविशेषणम् प्रबलदीर्घैरित्यर्थः। अथवा अमलायतैरमला निर्म्मला आयताश्च ते तैः। उपमालङ्कारः।

तरसैव कोऽपि भुवनैक-
पुरुष पुरुषस्तपस्यति ।
ज्योतिरमलवपुषोऽपि रवे-
रभिभूय वृत्र इव भीमविग्रहः ॥ २६ ॥

स धनुर्महेषुधि बिभर्त्ति
कवचमसिमुत्तमं जटाः ।
वल्कमजिनमिति चित्रमिदं
मुनिताविरोधि न च नास्य राजते ॥ २७ ॥

अन्वयः । (हे) भुवनैकपुरुष ! वृत्र इव भीमविग्रहः कः अपि पुरुषः तरसा अमलवपुषः रवेः अपि ज्योतिः अभिभूय तपस्यति । वाच्य—वृत्रेण इव भीमविग्रहेण केन पुरुषेण तपस्यते ॥ २६ ॥

अन्वयः । सः महेषुधि धनुः कवचम् उत्तमम् असिं जटाः वल्कम् अजिनं बिभर्त्ति, इति इदं मुनिताविरोधि अस्य न राजते (इति) न, चित्रम् । वाच्य—तेन [illegible] बिभर्त्ति । अनेन मुनिताविरोधिना न राज्यते ॥ २७ ॥

अर्जुनस्य तपसा जनितं तत् पूर्व्वोक्तं जगताम् अशर्म असुखं दुःखमित्यर्थः । "शर्मशातसुखानि च" इत्यमरः । भृशं सम्यक् आचचक्षिरे ॥२५॥

तरसेति । हे भुवनैकपुरुष ! पुरुषोत्तम ! वृत्रः वृत्रासुर इव भीमविग्रहः कोऽपि अविज्ञात इत्यर्थः । पुरुषस्तरसा बलात्कारेण एव । "तरसो बलरंहसो" इति विश्वः । अमलवपुषः उज्ज्वलमूर्त्तेः रवेरपि ज्योतिः अभिभूय तपस्यति तपश्चरति । "कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ् ॥ २६ ॥

स इति । किञ्च स पुरुषः महान्तौ इषुधी यस्य तत् महेषुधि धनुः कवचं वर्म उत्तमम् असिं खड्गं जटा वल्कं चीरम् अजिनं चर्म बिभर्त्ति । इत्येवंरूपम् इदं विरुद्धवेशधारणं मुनिताविरोधि मुनित्वप्रतिबन्धकं तथापि अस्य न राजते इति न । किन्तु राजत एव इत्यर्थः । चित्रमाश्चर्य्यम् । "सम्भाव्यनिषेधनिवर्त्तिने द्वौ प्रतिषेधौ" इति वामनः ॥ २७ ॥

২৫। অনন্তর মুনিগণ শিবের অভিমুখে আগমনপূর্ব্বক তাঁহার নয়ননিমেষসঙ্কেত দ্বারা (কথনার্থ) আদিষ্ট হইয়া অর্জ্জুনের তপোজনিত জাগতিক দুঃখ সম্যক্ বর্ণন করিতে লাগিলেন।

২৬। হে পুরুষোত্তম! বৃত্রাসুরের ন্যায় ভীষণকলেবর কোন এক পুরুষ নিজতেজে উজ্জ্বল রবিরও জ্যোতি অভিভূত করিয়া তপস্যা করিতেছে।

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम्।
स्तम्भमनुभवति शान्तमरुद्-
ग्रहतारकागणयुतं नभस्तलम्॥ २८॥

स तदोजसा विजितसार-
ममरदितिजोपसंहितम्।
विश्वमिदमपिदधाति पुरा
किमिवास्ति यन्न सुकरं खलु तेन *॥ २९॥

अन्वयः। तस्य चलने अवनिः चलति, (तथा) करणनियमे (सति) शान्तमरुद्ग्रहतारकागणयुतं नभस्तलं सदिङ्मुखं स्तम्भम् अनुभवति। वाच्य—अवन्या चल्यते — — युतेन नभस्तलेन सदिङ्मुखः स्तम्भः अनुभूयते॥ २८॥

अन्वयः। सः ओजसा विजितसारम् अमरदितिजोपसंहितं तत् इदं विश्वं पुरा अपिदधाति यत् खलु तेन न सुकरं तत् किम् इव अस्ति? वाच्य—तेन — — विश्वम् अपिधीयते। तेन केन इव भूयते॥ २९॥

चलन इति। किञ्च तस्य पुंसश्चलने अवनिः पृथिवी चलति। तथा करणनियमे समाधिना इन्द्रियनिरोधे सति। "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। सदिङ्मुखं दिक्सहितं शान्तैः स्तिमितैः मरुतां वायूनां ग्रहाणां सूर्य्यादीनां तारकाणां नक्षत्रादीनां च गणैः युतं नभस्तलं व्योम स्तम्भं निश्चलताम् अनुभवति इत्यर्थः। अतः विश्वातिशायिनी तस्य शक्तिः उपलभ्यतेति भावः॥ २८॥

न च एतत् उपेक्ष्यम् इत्याशयेन आह—स इति। सः पुमान् ओजसा विजितसारं निरस्तसत्त्वम्। अमरदितिजोपसंहितं सुरासुरसहितं तत् इदं विश्वं पुरा अपिदधाति अपिधास्यति इत्यर्थः। शीघ्रमेव हरिष्यति इति भावः। "निकटागामिके पुरा" इत्यमरः। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। तथाहि यत् कर्म्म तपसामदुष्करं तत्

२५। সেই ব্যক্তি মহৎ ইষুধিদ্বয়, ধনু, কবচ, উত্তম অসি, জটা, বল্কল ও অজিন ধারণ করিতেছে। এই প্রকার বিরুদ্ধ বেশধারণ মুনিত্বপ্রতিবন্ধক, তথাপি ইহা যে তাহাতে শোভমান হইতেছে না, তাহা নহে। ইহা অতি আশ্চর্য্য!

২৮। সেই পুরুষের চলনে অবনি চলিত হয়, তাহার ইন্দ্রিয়-নিরোধ-কালে বায়ু, গ্রহ ও তারকাকুল প্রশান্তভাবে অবস্থান করে; নভস্তল দিক্‌সমূহসহ নিশ্চলভাব অনুভব করিয়া থাকে।

* 'तपसामदुष्करम्' इत्यपि पाठः।

विजिगीषते यदि जगन्ति
युगपदथ सञ्जिहीर्षति ।
प्राप्तुमभवमभिवाञ्छति वा
वयमस्य नो विषहितुं क्षमा रुचः ॥ ३० ॥

किमुपेक्षसे कथय नाथ
न तव विदितं न किञ्चन ।
त्रातुमलमभयदार्हसि न-
स्त्वयि मा स्म शासति भवत् पराभवः ॥३१॥

अन्वयः। सः जगन्ति युगपत् विजिगीषते यदि, अथ युगपत् सञ्जिहीर्षति अभवं प्राप्तुम् अभिवाञ्छति वा, (न विद्मः) किन्तु वयम् अपि अस्य रुचः विषहितुं क्षमाः नो (भवामः)। वाच्य—तेन जगन्ति विजिगीष्यन्ते, सञ्जिहीर्ष्यन्ते, अभिवाञ्छ्यते, अस्माभिः क्षमैः न (भूयते) ॥ ३० ॥

अन्वयः। हे नाथ! किम् उपेक्षसे कथय (त्वम्) किञ्चन तव न विदितं न। हे अभयद! नः अलं त्रातुम् अर्हसि। त्वयि शासति (सति) पराभवः मास्म भवत्। वाच्य—किम् उपेक्ष्यते, कथ्यतां त्वया वयं त्रातुम् अर्ह्यामहे। पराभवेन मास्म भूयत ॥ ३१ ॥

किम् इव अस्ति न किञ्चित् तेन दुष्करम् अस्ति इत्यर्थः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ २९ ॥

न चैतत् अन्यफलकं तप इत्याह—विजिगीषते इति। स पुरुषः जगन्ति भुवनानि युगपद् विजिगीषते यदि विजेतुम् इच्छति वा। "पूर्ववत्सनः" इति आत्मनेपदम्। अथ युगपत् सञ्जिहीर्षति। संहर्त्तुमिच्छति वा। अभवमपवर्गं प्राप्तुमभिवाञ्छति वा। न विद्मो वयमिति शेषः। किन्तु वयमपि अस्य रुचः तेजांसि विषहितुं सोढुम्। "तीषसह-लुभरुषरिषः" इति विकल्पात् इड़ागमः। नो क्षमाः न शक्ताः। केचित् "रुचः कामितानि विषहितुमवधारयितुम्" इति व्याचक्षते। तत्र सहेरवधारणार्थत्वं विचार्य्यम् ॥ ३० ॥

किमिति। हे नाथ! कं किमर्थम् उपेक्षसे कथय त्वमिति शेषः।

২৯। সেই পুরুষ শীঘ্রই নিজ তেজে সুরাসুরগণের সহিত এই বিশ্ব হরণ করিবে, তখন ইহার সমস্ত পদার্থ অসার হইয়া যাইবে, বস্তুতঃ যাহা তপস্যায় সুসাধ্য নহে, এমন কিই বা আছে?

৩০। সে সহসা জগন্মণ্ডল জয় করিতে ইচ্ছা করিয়াছে, অথবা যুগপৎ সংহার করিতে অভিলাষী হইয়াছে, কিংবা অপবর্গ পাইতে বাঞ্ছা করিতেছে, কিছুই বুঝিতেছি না। কিন্তু ইহার তেজ আমাদের অসহ্য হইয়াছে।

इति गां विधाय विरतेषु
मुनिषु वचनं समाददे।
भिन्नजलधिजलनादगुरु
ध्वनयन् दिशां विवरमन्धकान्तकः॥ ३२॥

बदरीतपोवननिवास-
निरतमवगात मान्यथा।
धातुरुदयनिधने जगतां
नरमंशमादिपुरुषस्य गां गतम्॥ ३३॥

अन्वयः। इति गां विधाय मुनिषु विरतेषु अन्धकान्तकः भिन्नजलधिजलनादगुरु (यथा तथा) दिशां विवरं ध्वनयन् वचनं समाददे। वाच्य—अन्धकान्तकेन विवरं ध्वनयता वचनं समाददे॥ ३२॥

अन्वयः। बदरीतपोवननिवासनिरतं गां गतं जगताम् उदयनिधने धातुः आदिपुरुषस्य अंशं नरम् अन्यथा मा अवगात। वाच्य—-।-निवासनिरतः गा गतः अंशः नरः मा अवगाथि॥ ३३॥

तव न विहितं त्वया ज्ञायमानमित्यर्थः। "क्तस्य च वर्त्तमाने" इति षष्ठी। न किञ्चन किमपि न। हे अभयद! नः अस्मान् अलं त्रातुमर्हसि। त्वयि शासति सति पराभवो मास्म भवत् मा भूत्। "स्मोत्तरे लङ् च" इति लङ्॥ ३१॥

इतीति। इति इत्थं गां वाचं विधाय अभिधाय इत्यर्थः। सामान्यस्य विशेषपर्य्यवसानात्। मुनिषु विरतेषु तूष्णीम्भूतेषु सत्सु अन्धकान्तकः शिवः भिन्नस्य उद्वेलस्य जलधेर्जलस्य नादमिव गुरु गम्भीरं यथा तथा दिशां विवर-मन्तरालं ध्वनयन् वचनं समाददे स्वीचकार, उवाच इत्यर्थः॥ ३२॥

बदरीति। बदरीतपोवने बदरिकाश्रमे निवासनिरतं नित्यनिवासिनं गां गतं भुवमवतीर्णं जगताम् उदयनिधने सृष्टिसंहारौ धातुः तयोः कर्त्तु-रित्यर्थः। "तृन्" इति दधातेः तृन्प्रत्ययः। अतएव "न लोक" इत्यादिना कर्मणि षष्ठीप्रतिषेधः। आदिपुरुषस्य विष्णोः अंशम् अंशभूतं नरं नरसंज्ञक-मित्यर्थः। यो नारायणसखः इति भावः। अन्यथा उक्तवैपरीत्येन

৩১। হে নাথ! আপনি উপেক্ষা করিতেছেন কেন বলুন? আপনার ত অবিদিত কিছুই নাই। হে অভয়প্রদ! আমাদের রক্ষা করা আপনার একান্ত কর্ত্তব্য। আপনি শাসক থাকিতে আমাদের যেন পরাভব ঘটে না।

৩২। এই কথা কহিয়া মুনিগণ বিরত হইলে, অন্ধকনাশক শিব উদ্বেলিত জলনিধির জলনাদবৎ গম্ভীরভাবে দিগ্‌ বিবর ধ্বনিত করিয়া বলিতে লাগিলেন।

द्विषतः परासिसिषुरेष
सकलभुवनाभितापिनः ।
क्रान्तकुलिशकरवीर्य्यबलान्
मदुपासनं विहितवान् महत्तपः ॥ ३४ ॥

अयमच्युतश्च वचनेन
सरसिरुहजन्मनः प्रजाः ।
पातुमसुरनिधनेन विभू
भुवमभ्युपेत्य मनुजेषु तिष्ठतः ॥ ३५ ॥

अन्वयः । एषः सकलभुवनाभितापिनः क्रान्तकुलिशकरवीर्य्यबलान् द्विषतः परासिसिषुः मदुपासनं महत्तपः विहितवान् । वाच्य—एतेन — —द्विषतः परासिसिषुणा विहितम् ॥ ३४ ॥

अन्वयः । विभू अयं अच्युतश्च सरसिरुहजन्मनः वचनेन असुरनिधनेन प्रजाः पातुं भुवम् अभ्युपेत्य मनुजेषु तिष्ठतः । वाच्य—विभुभ्याम् अनेन अच्युतेन च स्थीयते ॥ ३५ ॥

मा अवगात मनुष्यमात्रं मा जानीत इत्यर्थः । "इणो गा लुङि" इति गादेशः ॥ ३३ ॥

अथ तस्य तपसः निमित्तमाह—द्विषत इति । एष नरः सकलभुवनानि अभितापयन्ति अभीक्ष्णमिति तथोक्तान् । "बहुलमाभीक्ष्ण्ये" इति णिनिः । क्रान्ते आक्रान्ते कुलिश-करस्य इन्द्रस्य वीर्य्यबले शक्तिसैन्ये यैः तान् द्विषतः शत्रून् परासिसिषुः परासितुमिच्छुः । अस्यतेः सन्नन्तादुप्रत्ययः । मदुपासनं मदाराधनम् । करणे ल्युट् । महत्तपो विहितवान् । अत्र निमित्तं शत्रुक्षय एव इति ॥ ३४ ॥

अथास्य मानुषावतारे कारणमाह—अयमिति । विभू प्रभू अयं नरः अच्युतः कृष्णश्च सरसिरुहजन्मनः ब्रह्मणः वचनेन प्रार्थनया असुराणां निधनेन मारणेन करणेन प्रजाः पातुं रक्षितुं भुवमभ्युपेत्य मनुजेषु तिष्ठतः । वस्तुतस्तु साक्षात् नरनारायणौ एतौ कृष्णार्जुनौ इत्यर्थः ॥ ३५ ॥

৩৩। ইনি নিত্য বদরিকাশ্রমবাসী জগতের সৃষ্টি-সংহারকর্ত্তা বিষ্ণুর ভূতলাবতীর্ণ নরনামক অংশ অর্থাৎ নারায়ণ। ইঁহাকে আপনারা অন্য ব্যক্তি বলিয়া মনে করিবেন না।

৩৪। ইনি ইন্দ্রের বলবীর্য্যপরাভবকারী সমগ্রভুবনতাপী শত্রুদিগকে পরাস্ত করিবার অভিপ্রায়ে আমার উপাসনারূপ মহা তপস্যা করিতেছেন।

৩৫। এই প্রভুদ্বয়—ইনি এবং অচ্যুত, ব্রহ্মার প্রার্থনায় অসুরবিনাশ দ্বারা প্রজাগণকে রক্ষা করিবার নিমিত্ত, ভূতলে আসিয়া অবস্থান করিতেছেন।

सुरकृत्यमेतदवगम्य
निपुणमिति मूकदानवः।
हन्तुमभिपतति पाण्डुसुतं
त्वरया तदत्र सह गम्यतां मया॥ ३६॥

विवरेऽपि नैनमनिगूढ़-
मभिभवितुमेष पारयन्।
पापनिरतिरविशङ्कितया
विजयं व्यवस्यति वराहमायया॥ ३७॥

निहते विडम्बितकिरात-
नृपतिवपुषा रिपौ मया।

अन्वयः। मूकदानवः एतत् सुरकृत्यम् इति निपुणम् अवगम्य पाण्डुसुतं हन्तुम् अभिपतति तत् अत्र मया सह त्वरया गम्यताम्। वाच्य—मूकदानवेन अभिपत्यते, (यूयं) गच्छध्वम्॥ ३६॥

अन्वयः। पापनिरतिः एषः विवरेऽपि एनम् अनिगूढम् अभिभवितुं न पारयन् अविशङ्कितया वराहमायया विजयं व्यवस्यति। वाच्य—पापनिरतिना एतेन न पारयता विजयः व्यवसीयते॥ ३७॥

अथास्य सत्त्वसम्पदं प्रकाशयितुमाह—सुरेति। मूकदानवो मूकाख्यः कश्चित् असुरः एतत्पाण्डवकृत्यं सुरकृत्यमिति निपुणमवगम्य साधु निश्चित्य पाण्डुसुतमर्जुनं हन्तुम् अभिपतति। तत् तस्मात् कारणात् अत्र अर्जुनाश्रमे विषये आश्रमं प्रति इत्यर्थः। मया सह त्वरया गम्यताम्। द्रष्टुमिति शेषः॥ ३६॥

विवर इति। पापे निरतिरतिप्रीतिर्यस्य सः एषः दानवः विवरे रन्ध्रे अपि एकान्तेऽपीत्यर्थः। एनं पाण्डवम् अनिगूढं प्रकाशं स्पष्टं यथा तथा अभिभवितुं न पारयन् शक्नुवन्। विभाषायां "नञ्" इति नञ्-समासः। अविशङ्कितया स्वरूपगूहनात् निःशङ्कितया वराहमायया वराह-भूमिकया विजयं व्यवस्यति। विजयं प्रति उद्युक्त इत्यर्थः॥ ३७॥

৩৬। মূক নামে কোন দানব পাণ্ডব-কার্য্যই সুরকার্য্য বলিয়া সম্যক্ অবধারণপূর্ব্বক অর্জ্জুনকে বিনাশ করিতে ধাবিত হইতেছে; অতএব ঐ অর্জ্জুনাশ্রমে আমার সহিত সত্বর আপনারা গমন করুন।

৩৭। এই পাপাসক্ত দানব নির্জ্জনেও ইঁহাকে নিজ মূর্ত্তিতে পরাভূত করিতে অসমর্থ হইবে মনে করিয়া মায়া দ্বারা বরাহমূর্ত্তি অবলম্বনপূর্ব্বক নিঃশঙ্কভাবে বিজয়ার্থ উদ্যত হইয়াছে।

मुक्तनिशितशिखः प्रसभं
मृगयाविवादमयमाचरिष्यति ॥ ३८ ॥
तपसा निपीड़ितकृशस्य
विरहितसहायसम्पदः ।
सत्त्वविहितमतुलं भुजयो-
र्बलमस्य पश्यत मृधेऽधिकुप्यतः ॥ ३९ ॥
इति तानुदारमनुनीय
विषमहरिचन्दनालिना ।

अन्वयः । विडम्बितकिरातनृपतिवपुषा मया निहते रिपौ मुक्तनिशितविशिखः (सन्) अयं प्रसभं मृगयाविवादम् आचरिष्यति । वाच्य—मुक्तनिशितविशिखेन अनेन मृगयाविवादः आचरिष्यते ॥३८॥

अन्वयः । तपसा निपीड़ितकृशस्य तथा विरहितसहायसम्पदः मृधे अधिकुप्यतः अस्य सत्त्वविहितम् अतुलं भुजयोः बलं पश्यत । वाच्य — — — बलं दृश्यताम् ॥ ३९ ॥

ततः किं भविष्यति ? इत्यत आह—निहत इति । विड़म्बित-मनुकृतं किरातनृपतिवपुः येन तेन तद्रूपधारिणा इत्यर्थः । मया रिपौ वराहे निहते मुक्तनिशितविशिखः सन् । अयं पाण्डवः प्रसभं प्रसह्य मृगया-विवादं मृगयाप्रहारकलहमाचरिष्यति करिष्यति मत्प्रहृतमेव मृगं प्रहृत्य स्वयमहमेव प्रहर्त्ता इति कलहिष्यते इत्यर्थः ॥ ३८ ॥

ततोऽपि किं भावि ? इत्यत आह—तपसेति । तपसा नितरां पीड़ितः अतएव कृशः तस्य निपीड़ितकृशस्य । "पूर्वकाल" इत्यादिना समासः । तथा विरहिता सहायसम्पत् यस्य तस्य एकाकिनः मृधे रणे । "मृधमास्कन्दनं संख्यम्" इत्यमरः । अधिकुप्यतः अधिकं कुप्यतः अस्य पाण्डवस्य सत्त्वविहितं स्वभावकृतं स्वाभाविकमित्यर्थः । "सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्ता-स्वभावयोः । प्राणे बलेऽन्तःकरणे" इति वैजयन्ती । अतुलं निरुपमं भुजयोः बाह्वोः बलं शक्तिं पश्यत । "बलं शक्तिर्बलं सैन्यम्" इति शाश्वतः ॥ ३९ ॥

৩৮। আমি কিরাত ভূপতির রূপ ধারণ করিয়া সেই বরাহ-রিপুকে নিহত করিলে ঐ পাণ্ডব নিহত বরাহে নিশিত শরবর্ষণপূর্ব্বক সহসা মৃগয়া-কলহ আরম্ভ করিবে।

৩৯। অর্জুন তপস্যায় নিতান্ত পীড়িত হইয়া কৃশ হইয়াছে, ইহার সহায় সম্পদ্ নাই। (তথাপি) এ রণে কুপিত হইয়া যে স্বভাবসিদ্ধ অতুল ভুজবল প্রকাশ করিবে, তাহা আপনারা অবলোকন করিবেন

घर्म्मजनितपुलकेन लसद्-
गजमौक्तिकावलिगुणेन वक्षसा ॥ ४० ॥
वदनेन पुष्पितलतान्त-
नियमितविलम्बिमौलिना ।
बिभ्रदरुणनयनेन रुचं
शिखिपिच्छलाञ्छितकपोलभित्तिना ॥ ४१ ॥
बृहदुद्वहन् जलदनादि
धनुरुपहितैकमार्गणम् ।

अन्वयः । शिवः इति तान् उदारम् अनुनीय विषमहरिचन्दनालिना घर्म्मजनितपुलकेन लसद्गज-मौक्तिकावलियुतेन वक्षसा पुष्पितलतान्तनियमितविलम्बिमौलिना शिखिपिच्छलाञ्छितकपोलभित्तिना

अथ त्रिभिरस्य किरातभावं वर्णयति—इतीत्यादि। शिव इति इत्थं तान् मुनीनुदारं युक्तियुक्तं यथा तथा अनुनीय शिक्षयित्वा उक्त्वा इति यावत्। रुचिरः किरातपृतनापतिः संवव्रते इति उत्तरेण अन्वयः। किरात-सेनापतिवेशधारी बभूव इत्यर्थः। कथम्भूतः? विषमा विकृतविन्यासा हरिचन्दनस्य आलयः रेखा यस्मिन् तेन। घर्म्मेण खेदेन जनिताः पुलकाः रोमाञ्चाः यस्मिन् तेन। "पुलकः पुनः। रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम्" इति हेमचन्द्रः। "घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि" इति विश्वः। लसन्तः शोभमानाः गजमौक्तिकानां करिकुम्भोद्भवमौक्तिका-नाम् आवलय एव गुणाः सूत्राणि यस्मिन् तेन वक्षसा वक्षःस्थलेन उपलक्षितः करिणां मुक्तायोनित्वे प्रमाणमाह अगस्त्यः—"जीमूतकरिमत्स्याहिवंशशङ्ख-वराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः॥" इति ॥ ४० ॥

वदनेनेति। पुष्पितैः लतान्तैः विकसितलताग्रैः नियमिताः संयताः विलम्बिनश्च ते मौलयः केशाः यस्य तेन। "चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। शिखिपिच्छलाञ्छिते बर्हिबर्हाङ्किते कपोलभित्ती यस्य तेन अरुणनयनेन आरक्तनेत्रेण वदनेन रुचं शोभां बिभ्रत् ॥ ४१ ॥

৪০—৪২। শিব মুনিগণকে এইরূপ উদার উপদেশ প্রদান করিবার পর তাঁহার বক্ষঃস্থলে বিকৃতভাবে হরিচন্দনরেখা বিন্যস্ত হইল, ঘর্ম্মজনিত রোমাঞ্চ উদ্গত হইল এবং বিলসিত গজ-মৌক্তিকমালা বিরাজিত হইতে লাগিল। তদীয় মস্তকস্থ কেশকলাপ-বিকসিত লতাগ্র দ্বারা সংযত হইয়া বিলম্বিত হইল, কপোল ভিত্তি শিখিপুচ্ছে লাঞ্ছিত হইল, নয়ন আরুণাভা ধারণ

मेघनिचय इव संववृते
रुचिरः किरातपृतनापतिः शिवः ॥४२॥

विशेषकम् ।

अनुकूलमस्य च विचिन्त्य
गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतै-
र्महती वनेचरचमूर्विनिर्ममे ॥ ४३ ॥
विरचय्य काननविभाग-
मनुगिरमथेश्वराज्ञया ।

अरुणनयनेन वदनेन रुचं बिभ्रत्, जलदनादि उपाहितैकमार्गणं महत् धनुः उद्वहन् रुचिरः किरात-पृतनापतिः संववृते । वाच्य—शिवेन — रुचं बिभ्रता धनुः उद्वहता रुचिरेण किरातपृतनापतिना संववृते ॥ ४०—४२ ॥

अन्वयः । अस्य अनुकूलं विचिन्त्य आत्तविग्रहैः शूलपरशुशरचापभृतैः गणपतिभिः महती वनेचरचमूः विनिर्ममे । वाच्य—आत्तविग्रहाः भूताः गणपतयः महतीं वनेचरचमूं विनिर्ममुः ॥ ४३ ॥

बृहदिति । पुनश्च जलद इव नदतीति जलदनादि । "कर्त्तर्य्युपमाने" इति णिनिः । उपहितैकमार्गणं संहितैकबाणं धनुरुद्वहन् । अत एव मेघनिचय इव स्थित इत्युपमा । अत्र विशेषके स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥ ४२ ॥

अनुकूलमिति । अस्य शिवस्य अनुकूलं विचिन्त्य प्रियमिति निश्चित्य आत्तविग्रहैः गृहीतकिरातदेहैः । तथा शूलानि परशवः कुठाराः शराः चापानि च तानि भृतानि यैः तैः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति निष्ठायाः परनिपातः । गणपतिभिः प्रमथमुख्यैः महती वनेचरचमूः सेना विनिर्ममे निर्मिता । "माङ् माने" कर्मणि लिट् । "ह्रस्व" इत्यभ्यासस्य ह्रस्वत्वम् ॥ ४३ ॥

করিল; এইরূপে তিনি মুখমণ্ডলে শোভা ধারণ করিয়া এক বৃহৎ জলদনাদী ধনু ধারণ করিলেন; তাহাতে একটী বাণ যোজিত হইল। সুতরাং তিনি মেঘনিচয়বৎ অবস্থিত হইয়া এক সুন্দর কিরাত-চমূপতিরূপে পরিণত হইলেন।

৪৩। শিবের প্রিয়বোধে গণপতিগণ কিরাতদেহ ধারণ এবং শূল, পরশু, শর ও চাপ গ্রহণ-পূর্ব্বক এক বিরাট বনেচর-বাহিনী নির্ম্মাণ করিলেন।

भीमनिनदपिहितोरुभुवः
परितोऽपदिश्य मृगयां प्रतस्थिरे ॥ ४४ ॥

क्षुभिताभिनिःसृतविभिन्न-
शकुनिमृगयूथनिःस्वनैः ।
पूर्णपृथुवनगुहाविवरः
सहसा भयादिव ररास भूधरः ॥ ४५ ॥

न विरोधिनी रुषमियाय
पथि मृगविहङ्गसंहतिः ।
घ्नन्ति सहजमपि भूरिभियः
सममागताः सपदि वैरमापदः ॥ ४६ ॥

अन्वयः। अथ ईश्वराज्ञया अनुगिरं काननविभागं विरचय्य भीमनिनदपिहितोरुभुवः (मन्तः) मृगयाम् अपदिश्य परितः प्रतस्थिरे। वाच्य— — — पिहितोरुभूमिः प्रतस्थे ॥ ४४ ॥

अन्वयः। क्षुभिताभिनिःसृतविभिन्न शकुनि मृग यूथनिःस्वनैः पूर्णपृथुवनगुहाविवरः भूधरः सहसा भयात् इव ररास। वाच्य— — — विवरेण भूधरेण ररसे ॥ ४५ ॥

अन्वयः। पथि विरोधिनी मृग-विहङ्गसंहतिः रुषं न इयाय; (तथाहि) भूरिभियः समम् आगताः आपदः सहजम् अपि वैरं सपदि घ्नन्ति। वाच्य— — — मृग-विहङ्ग-संहत्या रुट् न ईये। भूरिभीभिः समम् आगताभिः आपद्भिः सहजम् अपि वैरं हन्यते ॥ ४६ ॥

विरचय्येति। अथ ईश्वराज्ञया अनुगिरं गिरौ। विभक्त्यर्थेऽव्ययीभावः। "गिरेश्च सेनकस्य" इति समासान्तः। काननविभागं वनविभागं विरचय्य, अस्यायमिति देशविभागं कृत्वा इत्यर्थः। भीमैर्निनादैः कलकलैः पिहिताः उरवः भुवः यैः ते तथोक्ताः सन्तः मृगयामपदिश्य व्याजीकृत्य परितः प्रतस्थिरे प्रस्थिताः ॥ ४४ ॥

क्षुभितेति। क्षुभितास्त्रस्ताः अभिनिःसृता स्वस्थानात् निर्गताः विभिन्नाः मुक्तसङ्गाश्च ये शकुनयः पक्षिणः मृगाश्च तेषां यूथानि तानि तेषां निःस्वनैः पूर्णानि पृथूनि वनानि गुहाविवराणि च यस्य सः भूधरः सहसा भयात् इवेति उत्प्रेक्षा। ररास चुक्रोश। "रस आक्रोशे" लिट् ॥ ४५ ॥

৪৪। অনন্তর শিবাজ্ঞায় গণপতিগণ পার্ব্বত্য কাননপ্রদেশ বিভাগ করিয়া ভীষণ কলকল রবে বহুল স্থান পূর্ণ করত মৃগয়াব্যপদেশে চতুর্দ্দিক্ হইতে প্রয়াণ করিল।

৪৫। তখন ত্রস্ত ও স্বস্থান হইতে নির্গত বিবিধ মৃগপক্ষিকুলের নিনাদে বিপুল অরণ্য এবং গুহাবিবর পূর্ণ হওয়ায় ভূধর যেন আকস্মিক ভয়ে চীৎকার করিয়া উঠিল।

चमरीगणैः शिवबलस्य
बलवति भयेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथु-
प्रियबालधिभिराददे धृतिः ॥ ४७ ॥

हरसैनिकाः प्रतिभयेऽपि
गजमदसुगन्धिकेसरैः ।
स्वस्थमभिददृशिरे सहसा
प्रतिबोधजृम्भितमुखैर्मृगाधिपैः ॥ ४८ ॥

अन्वयः । वंशविततिषु विषक्तपृथुप्रियबालधिभिः चमरीगणैः शिवबलस्य बलवति भये उपस्थिते (सति) अपि धृतिः आददे । वाच्य— — विषक्त- बालधयः चमरीगणाः धृतिम् आददिरे ॥ ४७ ॥

अन्वयः । प्रतिभये अपि गजमदसुगन्धिकेसरैः प्रतिबोधजृम्भितमुखैः मृगाधिपैः स्वस्थं हरसैनिकाः अभिददृशिरे । वाच्य—गजमद — केसराः प्रतिमुखाः मृगाधिपाः हरसैनिकान् अभिददृशुः ॥ ४८ ॥

नेति । पथि पलायनमार्गे विरोधिनो जातिवैरिणो मृगाणां सिंह व्याघ्रादीनां विहङ्गानां काकोलूकानां च संहतिः रुङ्ः रुषं परस्परक्रोधं न इयाय न प्राप । किन्तु सहैव चचारेत्यर्थः । तथाहि—भूरि प्रभूता भीः यासु ताः समं साधारण्येन आगता आपदः विपत्तयः सहजमपि स्वाभाविकमपि वैरं सपदि घ्नन्ति । न हि सङ्गातव्यसनेषु प्रजायते वैरानुबन्ध इति भावः ॥ ४६ ॥

चमरीति । वंशविततिषु वेणुगुल्मेषु विषक्ताः लग्नाः पृथवः भृशं प्रियबाला प्रियरोमाणो बालधयः पुच्छानि येषां तैः । "पुच्छोऽस्त्री लूमलाङ्गूले बालहस्तश्च बालधिः" इत्यमरः । चमरीगणैः मृगविशेषैः शिवबलस्य सम्बन्धिनि तद्धेतुके इत्यर्थः । सम्बन्धमात्रविवक्षायां षष्ठी । अन्यथा "भीत्रार्थानां भयहेतुः" इति पञ्चमी स्यात् । बलवति प्रबले भये उपस्थिते प्राप्तेऽपि धृतिः आददे स्वीकृता । बालच्छेदभयात् प्राणहानिमप्यवगणय्य स्थितमित्यर्थः ॥ ४७ ॥

हरेति । प्रतिभये भयहेतौ । "भयङ्करं प्रतिभयम्" इत्यमरः ।

৪৬। পথিমধ্যে বিরোধী মৃগ-বিহঙ্গকুল ক্রোধপরবশ হইল না ; বস্তুতঃ যুগপৎ আগত ভূরি-ভয়জনক আপদ্ সহজ বৈরকেও নষ্ট করিয়া থাকে।

৪৭। বেণুগুল্মে চমরীগণের প্রিয় পুচ্ছসকল সংলগ্ন হইল, তাহাতে শিবসৈন্য হইতে প্রবল ভয় উপস্থিত হইলেও তাহারা ধৈর্য্যশালী হইয়া রহিল।

विभराम्बभूवुरपवृत्त-
जठरशफरीकुलाकुलाः ।
पङ्कविषमिततटाः सरितः
करिरुग्णचन्दनरसारुणं पयः ॥ ४९ ॥
महिषक्षतागुरुतमाल-
नलदसुरभिः सदागतिः ।
व्यस्तशुकनिभशिलाकुसुमः
प्रणुदन् ववौ वनसदां परिश्रमम् ॥ ५० ॥

अन्वयः । अपवृत्तजठरशफरीकुलाकुलाः पङ्कविषमिततटाः सरितः करिरुग्णचन्दनरसारुणं पयः विभराम्बभूवुः । वाच्य—अपवृत्त + कुलाभिः पङ्क + तटाभिः सरिद्भिः करि + रसारुणं पयः विभराम्बभूवे ॥ ४९ ॥

अन्वयः । महिषक्षतागुरुतमालनलदसुरभिः व्यस्तशुकनिभशिलाकुसुमः सदागतिः वनसदां परिश्रमं प्रणुदन् ( सन् ) ववौ । वाच्य—महिष + सुरभिणा व्यस्त + कुसुमेन सदागतिना । + प्रणुदता ( सता ) ववे ॥ ५० ॥

प्राप्ते अपि इति शेषः । गजमदैः सुगन्धयः सुरभयः केसराः सटा येषां तैः हतानेकगजैरित्यर्थः । सहसा सेनाकलस्वश्रवणानन्तरमेव प्रतिबोधेन निद्रापगमेन जृम्भितानि व्यात्तानि मुखानि येषां तैः मृगाधिपैः सिंहैः स्वस्थं निःशङ्कमेव हरसैनिका अभिदद्दशिरे ईक्षिताः । न तु किञ्चित् क्षुभितमित्यर्थः । युक्तं चैतद्राजनामावधारिणां केसरिणामिति भावः ॥४८॥

विभरामिति । अपवृत्तजठरैः तत्कालक्षोभाल्लुठितोदरैः शफरीकुलैराकुलाः व्याप्ताः, पङ्कैः विषमितानि दुर्गमीकृतानि तटानि कूलानि यासां ताः सरितः करिभिः पलायमानैरिति शेषः । रुग्णानां मार्गरोधितया भग्नानाम् । "ओदितश्च" इति निष्ठानत्वम् । चन्दनानां रसैररुणं पयः विभराम्बभूवुः । भृधातोः "भीह्रीभृहुवां श्लुवच्च" इति आम्प्रत्ययः । श्लुवद्भावश्च "कृञ्चानुप्रयुज्यते लिटि" इति भुवोऽनुप्रयोग. ॥४९॥

৪৮। ভয়-কারণ উপস্থিত হইলেও মৃগাধিপগণ নির্ভয়ে শিব-সৈন্যদিগকে দেখিতে লাগিল। ঐ সকল মৃগাধিপের কেশরজাল-নিহিত গজমদে সুগন্ধি হইয়াছিল, তাহারা নিদ্রাপগমে জৃম্ভণ করিতেছিল।

৪৯। সরিৎসকল লুঠিতোদর শফরীকুলে আকুল হইল; কর্দ্দমাক্ত হওয়ায় তাহাদের তটভূমি দুর্গম হইয়া উঠিল। তাহারা করিগণভগ্ন চন্দনরসে অরুণবর্ণ জল ধারণ করিতে লাগিল।

मथिताम्भसो रयविकीर्ण-
मृदितकदलीगवेधुकाः ।
क्लान्तजलरुहलताः सरसी-
र्विदधे निदाघ इव सत्त्वसंप्लवः ॥ ५१ ॥

इति चालयन्नचलसानु-
वनगहनजानुमापतिः ।

अन्वयः । सत्त्वसंप्लवः निदाघ इव सरसीः मथिताम्भसः रयविकीर्णमृदितकदलीगवेधुकाः क्लान्त-जलरुहलताः ( च ) विदधे । वाच्य—सत्त्वसंप्लवेन निदाघेन इव सरस्यः मथिताम्भसः रय । गवेधुकाः क्लान्त । लता विदधिरे ॥ ५१ ॥

महिषेति । महिषैः लुलापैः क्षतानि विदलितानि तैः अगुरुभिः तमालैर्नलदैरुशीरैः च सुरभिः सुगन्धिः । व्यस्तानि विक्षिप्तानि शुकनिभानि शुकसवर्णानि शिलाकुसुमानि शैलेयाख्याः ओषधिविशेषाः येन सः अत शीतल इति भावः । "कालानुसार्य्यवृद्धाश्मपुष्पशीतलशिवानि तु । शैलेयम्" इत्यमरः । शुकनिभेति स्वरूपकथनम् । सदागतिः वायुः वनसदां वनेचराणां परिश्रमं प्रणुदन् । अतो मन्द इति भावः । "मातरिश्वा सदागतिः" इत्यमरः । ववौ वाति स्म ॥ ५० ॥

मथिताम्भस इति । सत्त्वसंप्लवः प्राणिसंक्षोभः निदाघः ग्रीष्म इव सरसीः सरांसि । "कासारः सरसी सरः" इत्यमरः । मथिताम्भसः संक्षोभितोदकाः रयेण पलायनवेगेन विकीर्णं व्याकीर्णं यथा तथा मृदिताः निष्पीड़िताः कदल्यः गवेधुकाः तृणधान्यविशेषाश्च यासां ताः तथोक्ताः । "तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका" इत्यमरः । मृदित इति "क्ङिति च" इति गुणप्रतिषेधः । क्लान्ताः जलरुहलताः पद्मिन्यः यासु ताः एवम्भूताः विदधे चकार ॥ ५१ ॥

৫০। মহিষ-বিদলিত অগুরু তমাল ও উশীর দ্বারা সুরভিত সমীরণ, শুকসমান বর্ণ শিলা কুসুমরাজি বিক্ষিপ্ত করিয়া বনেচরগণের পরিশ্রম অপনোদন করত প্রবাহিত হইতে লাগিল।

৫১। নিদাঘের ন্যায় তাৎকালিক প্রাণি-সংক্ষোভে সরোবরসমূহের সলিল সমালোড়িত পলায়নবেগে কদলী ও তৃণ-ধান্যসকল নিপীড়িত এবং পদ্মিনীদল পরিম্লান হইল।

प्राप मुदितहरिणीदशन-
क्षतवीरुधं वसतिमैन्द्रसूनवीम् ॥ ५२ ॥
स तमाससाद घननील-
मभिमुखमुपस्थितं मुनेः ।
पोत्रनिकषणविभिन्नभुवं
दनुजं दधानमथ शौकरं वपुः ॥ ५३ ॥
कच्छान्ते सुरसरितो निधाय सेना-
मन्वीतः स कतिपयैः किरातवर्य्यैः ।

अन्वयः । इति उमापतिः अचलसानुवनगहनजान् चालयन् मुदितहरिणीदशनक्षतवीरुधम् ऐन्द्रसूनवीं वसतिं प्राप । वाच्य—इति उमापतिना — चालयता मुदित — वीरुत् ऐन्द्रसूनवी वसतिः प्रापे ॥ ५२ ॥

अन्वयः । अथ सः घननीलं मुनेः अभिमुखम् उपस्थितं पोत्रनिकषणविभिन्नभुवं तं सौकरं वपुः दधानं दनुजं ददर्श । वाच्य—तेन घननीलः—उपस्थितः पोत्र—भूः सः — — दधानः दनुजः ददृशे ॥ ५३ ॥

इतीति । इति इत्थमुमापतिरचलसानुषु वनेषु उपभोग्यवृक्षेषु गहनेषु दावेषु च जातास्तथोक्तान् सत्वानिति शेषः । चालयन् । मुदितानां हरिणीनां दशनैः क्षताः वीरुधः लताः यस्यां तामिन्द्रसूनोः इमाम् ऐन्द्रसूनवीं वसत्यत्रेति वसतिमाश्रमम् । "वहिवस्यर्त्तिभ्यश्च" इति औणादिकः वसतेरतिप्रत्ययः । प्राप ॥ ५२ ॥

स इति । अथानन्तरं सः शिवः घननीलं मेघमेचकं मुनेरर्जुनस्याभिमुखमुपस्थितमागतम् । पोत्रस्य मुखाग्रस्य । "मुखाग्रे क्रोड़हलयोः पोत्रम्" इत्यमरः । "हलशूकरयोः पुवः" इति ष्ट्रन्प्रत्ययः । निकषणेनोल्लेखनेन विभिन्ना विदारिता भूः येन तम् । शूकरस्य इदं शौकरं वाराहं वपुः दधानं दनुजमाससाद प्राप ददर्शेति ॥ ५३ ॥

৫২। এইরূপে উমাপতি গিরিসানু ও বনগহনজাত প্রাণীদিগকে পরিচালিত করিয়া মুদিত হরিণীগণের দন্তক্ষত লতাসমন্বিত ইন্দ্রনন্দনের বনাশ্রম প্রাপ্ত হইলেন।

৫৩। অনন্তর শিব দেখিলেন ;—ঘনবৎ নীলবর্ণ সেই দানব শূকরদেহ ধারণপূর্ব্বক মুখাগ্রবর্ষণে ভূতল বিদারণ করিয়া অর্জ্জুনের অভিমুখে উপস্থিত হইতেছিল।

प्रच्छन्नस्तरुगहनै: सगुल्मजालै-
र्लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥ ५४॥

इति ईश्वराभिगमनो नाम द्वादश: सर्ग: ॥१२॥

अन्वय:। लक्ष्मीवान् स: सुरसरित: कच्छान्ते सेनां निधाय कतिपयै: किरातवर्य्यै: अन्वीत: ( सन् ) सगुल्मजालै: तरुगहनै: प्रच्छन्न: ( सन् च ) अस्य अनुपदं सम्प्रतस्थे। वाच्य—लक्ष्मीवता तेन—अन्वीतेन ( सता )—प्रच्छन्नेन ( सता च )—अनुपदं सम्प्रतस्थे ॥ ५४ ॥

---

कच्छान्त इति। लक्ष्मीवान् "मादुपधायाश्च मतोर्वोऽयवादिभ्य:" इति मतुपो मकारस्य वकारादेश:। स: शिव:। सुरसरित: कच्छान्ते। "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध:" इत्यमर:। सेनां निधाय स्थापयित्वा इत्यर्थ:। कतिपयै: किरातवर्य्यैरन्वीत: अनुगत: सन्। "ई गतौ" इति धातोरनुपूर्वात् कर्म्मणि क्त:। सगुल्मजालै: लताप्रतानसहितै: तरुगहनै: प्रच्छन्न: छादित:। "वा दान्तशान्त" इत्यादिना निपात:। अस्य वराहस्य पदमनु अनुपदं पदानुसारेणेत्यर्थ:। सम्प्रतस्थे प्रस्थित:। "समवप्रविभ्य: स्थ:" इति आत्मनेपदम्। प्रहर्षिणीवृत्तम् ॥ ५४ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
द्वादश: सर्ग: ॥ १२ ॥

---

৫৪। সেই লক্ষ্মীসম্পন্ন শিব সুরনদীর অনূপপ্রান্তে সেনা সন্নিবেশ করিয়া কতিপয় প্রধান প্রধান কিরাতের সহিত গুল্মজালযুত তরুগহনে প্রচ্ছন্ন হইয়া উক্ত বরাহের পদচিহ্নানুসারে প্রয়াণ করিলেন।

দ্বাদশ সর্গ সমাপ্ত ॥ ১২ ॥

---

# त्रयोदशः सर्गः ।

—:०:—

वपुषां परमेण भूधराणा-
मथ सम्भाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार
स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥
स्फुटबद्धसटोन्नतिः स दूरा-
दभिधावन्नवधीरितान्यकृत्यः ।
जयमिच्छति तस्य जातशङ्के
मनसीमं मुहुराददे वितर्कम् ॥ २ ॥

अन्वयः । अथ महेन्द्रसूनुः परमेण वपुषा भूधराणां विभेदे सम्भाव्यपराक्रमं स्थिरदंष्ट्रोग्रमुखं मृगम् आशु विलोकयाञ्चकार । वाच्या—महेन्द्रसूनुना — — मृगः विलोकयाञ्चक्रे ॥ १ ॥

अन्वयः । स्फुटबद्धसटोन्नतिः दूरात् अभिधावन् अवधीरितान्यकृत्यः सः जयम् इच्छति (अतः) जातशङ्के तस्य मनसि मुहुः इमं वितर्कम् आददे । वाच्या— — सटोन्नतिना अभिधावता —कृत्येन तस्य अयं वितर्कः आददे ॥ २ ॥

वपुषेति । अथ ईश्वरप्रस्थानानन्तरं महेन्द्रसूनुरर्जुनः परमेण महता वपुषा हेतुना भूधराणां विभेदे विदारणे सम्भाव्यपराक्रमं क्षमः अयमिति प्रतर्क्यपौरुषम् । स्थिराभ्यां दृढाभ्यां दंष्ट्राभ्यामुग्रं मुखं यस्य तं मृगं वराहम् । आशु तदागमनानन्तरमविलम्बेनेत्यर्थः । विलोकयाञ्चकार ददर्श । अस्मिन् सर्गे प्राक् पञ्चविंशत्श्लोकादौपच्छन्दसिकं वृत्तम् ॥ १ ॥

स्फुटेति । स्फुटा स्पष्टा बद्धा विरचिता सटानां केसराणामुन्नतिः उन्नतिः यस्य सः क्रोधात् हर्षितलोमेत्यर्थः । "सटाजटाकेसरयोः" इत्यमरः । दूरा-दभिधावन् । तथा अवधारितान्यकृत्यः अनन्यकर्मा सः वराहः जयमिच्छ-

১। অনন্তর অর্জ্জুন অবিলম্বে বরাহের দিকে দৃষ্টিপাত করিলেন; দেখিলেন—স্থির দংষ্ট্রাদ্বয়ে উহার বদন ভয়ঙ্কর। মনে মনে আলোচনা করিলেন—উহার যেরূপ বিরাট দেহ, তাহাতে উহার পরাক্রম ভূধরবিদারণেও সমর্থ।

घनपीवविदीर्णशालमूलो
निबिड़स्कन्धनिकाषरुग्णवप्रः ।
अयमेकचरोऽभिवर्त्तते मां
समरायेव समाजुहूषमाणः ॥ ३ ॥

इह वीतभयास्तपोऽनुभावाद्-
जहति व्यालमृगाः परेषु वृत्तिम् ।
मयि तां सुतरामयं विधत्ते
विकृतिः किं नु भवेदियं नु माया ॥४॥

अन्वयः । घनपीवविदीर्ण-शालमूलः निबिडस्कन्धनिकाषरुग्णवप्रः एकचरः अयं समराय समाजुहूषमाण इव माम् अभिवर्त्तते । वाच्य— ।　शालमूलेन रुग्णवप्रेण एकचरेण अनेन समाजुहूषमाणेन अहम् अभिवर्त्त्ये ॥ ३ ॥

च्छति जयार्थिनि अतएव जातशङ्के स्वयं जिघांसोर्द्विषामेकलक्ष्यत्वादिति भावः । तस्य मुनेर्म्मनसि मुहुरिमं वितर्कं वक्ष्यमाणम् ऊहम् । "अध्याहारस्तर्क ऊहः" इत्यमरः । आददे उत्पादयामास ॥ २ ॥

अथैकादशभिर्वितर्कमेव निरूपयति—घनपीवेति । घनेन कठिनेन पीवेण मुखाग्रेण विदीर्णानि विदलितानि शालमूलानि वृक्षमूलानि येन सः । निबिड़स्य स्कन्धस्य निकाषेण निकषणेन रुग्णवप्रः भग्नसानुः अतो महासत्त्वसम्पन्न इति भावः । एकश्चासौ चरश्च इत्येकचरः एकाकी यूथात् अपेत इत्यर्थः । अतोऽयं वराहः समराय समरं कर्त्तुम् । "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" इति चतुर्थी । समाजुहूषमाण इव समाह्वातुम् इच्छन् इव इवशब्दः सम्भावनायाम् । समाह्वयतेः सन्नन्तात् शानच्प्रत्ययः । "स्पर्द्धायामाङः" "पूर्ववत् सनः" इति आत्मनेपदम् । "अभ्यस्तस्य च" इति सम्प्रसारणम् । माम् अभिवर्त्तते माम् अभिधावति । उपसर्गवशात् सकर्मकत्वम् । अतः सर्वथा नायमुपेक्ष्य इति भावः ॥ ३ ॥

২। সেই বরাহ অনন্যকর্মা হইয়া দূর হইতে ছুটিয়া আসিতেছে ; ক্রোধে তাহার কেশরজাল সুস্পষ্ট উন্নত হইয়াছে। (এদিকে) অর্জ্জুন মনে মনে তাহার জয়ার্থী ; তাঁহার চিত্তে কিঞ্চিৎ শঙ্কার উদ্রেক হইয়াছে। এই বরাহ তখন অর্জ্জুনের অন্তরে বার বার এইরূপ বিতর্ক উদ্ভাবন করিতে লাগিল—।

৩। যূথভ্রষ্ট একাকী এই বরাহ কঠিন মুখাগ্র দ্বারা শালমূল সকল বিদলিত করিয়া, নিবিড় স্কন্ধঘর্ষণে গিরিসানুসকল ভাঙ্গিয়া যেন সমরার্থ আহ্বান করিতে অভিলাষী হইয়া আমার দিকে ছুটিয়া আসিতেছে।

अथवैष कृतज्ञयेव पूर्वं
भृशमासेवितया रुषा न मुक्तः ।
अवधूय विरोधिनीः किमारा-
न्मृगजातीरभियाति मां जवेन ॥५॥

न मृगः खलु कोऽप्ययं जिघांसुः
स्खलति ह्यत्र तथा भृशं मनो मे ।

अन्वयः । इह तपोऽनुभावात् वीतभयाः व्यालमृगाः परेषु वृत्तिं विजहति, अयं मयि तां सुतरां विधत्ते (तत्) इयं विकृतिः किं नु माया नु भवेत्? वाच्य—वीतभयैः व्यालमृगैः वृत्तिः विहीयते अनेन सा विधीयते । अनया विकृत्या मायया (भूयते) ॥ ४ ॥

अन्वयः । अथवा एषः पूर्वं भृशम् आसेवितया रुषा कृतज्ञया इव न मुक्तः (यत्) आरात् विरोधिनीः मृगजातीः अवधूय जवेन माम् अभियाति । वाच्य—एतम् आसेविता रुक् कृतज्ञा इव न मुक्तवती । (एतेन) अहम् अभियाये ॥ ५ ॥

इहेति । इह आश्रमे तपोऽनुभावात् वीतभयाः लक्षणया विगतवैराः इत्यर्थः, अतएव व्यालमृगाः क्रूरव्याघ्रादयः । "व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः । परेषु प्राण्यन्तरेषु वृत्तिं जीविकां जहति हिंसया न जीवन्ति, इत्यर्थः । अयं वराहो मयि मद्विषये तां वृत्तिं सुतरां विधत्ते करोति, मां हन्तुमिच्छतीत्यर्थः । तदियं विकृतिः तपःसामर्थ्यभङ्गरूपा भवेत् किं नु? यद्वा माया कस्यचित् दैत्यस्य वराहभूमिका भवेत् नु? नु-किंनु-शब्दौ वितर्के ॥ ४ ॥

अथवेति । अथवा इति पक्षान्तरे । एषः मृगः पूर्वं जन्मान्तरे भृशम् अत्यर्थमासेवितया अतिपरिचितया रुषा क्रुधा मद्गोचरया इति शेषः । कृतज्ञया इव पूर्वकृतं वैरानुबन्धं सम्प्रति जानाति इत्युत्प्रेक्षा । न मुक्तः न त्यक्तः, अद्यापीति शेषः । नूनमयं प्राग्भवीयवैरानुबन्धीति कश्चित् । सम्प्रति वैरबीजामभवादिति भावः । कुतः ? यत् यतः आरात् समीपतः । "आराद्दूरसमीपयोः" इत्यमरः । विरोधिनीः मृगजातीः अवधूय त्यक्त्वा जवेन मामभियाति अभिधावति, अन्यथा न अभियायादिति भावः ॥ ५ ॥

४ । এ আশ্রমে তপঃপ্রভাবে ক্রূর ব্যাঘ্রাদি পশুসকল দ্বেষবিরহিত—নির্ভয় হইয়া পরহিংসাবৃত্তি পরিত্যাগ করিয়াছে; কিন্তু এই বরাহ আমাতেই বিশেষভাবে সেই হিংসাবৃত্তি আচরণ করিতে আসিতেছে; অতএব ইহা কি আমার তপঃশক্তিভঙ্গরূপ বিকৃতি? অথবা কোন দৈত্যের বরাহ-ভূমিকা?

विमलं कलुषीभवच्च चेतः
कथयत्येव हितैषिणं रिपुं वा ॥६॥
मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥७॥

अन्वयः । अयं मृगः न खलु, ( किन्तु ) कः अपि अन्यः एव जिघांसुः । हि अत्र मे मनः तथा भृशं स्खलति ( तथाहि ) विमलं तथा कलुषीभवत् चेतः एव हितैषिणं रिपुं वा कथयति । वाच्य— मनसा स्खल्यते । विमलेन कलुषीभवता चेतसा हितैषी रिपुर्वा कथ्यते ॥ ६ ॥

अन्वयः । ( अहं ) मुनिः अस्मि ( अतः ) निरागसः मे कुतः भयम् इति एषः अभिमानः भूतये न ( भवति ) ( तथाहि ) परवृद्धिषु बद्धमत्सराणां दुरात्मनां किमिव अलङ्घ्यम् अस्ति । वाच्य— ( मया ) मुनिना भूयते । अनेन अभिमानेन न ( भूयते ) केन अलङ्घ्येन भूयते ॥ ७ ॥

न केवलमभियानमेव किन्तु मनोवृत्तिरपि अत्र प्रमाणमित्याह— न मृग इति । अयं मृगः न खलु, किन्तु कोऽपि कश्चिदन्य एव जिघांसुः हन्तुमिच्छुः । हन्तेः सन्नन्तादुप्रत्ययः । "अभ्यासाच्च" इति कुत्वम् । "अजझनगमां सनि" इति दीर्घः । कुतः ? हि यस्मादत्र अस्मिन् मृगविषये मे मनः तथा भृशं स्खलति क्षुभ्यति, यथा जिघांसुरयमिति बुद्धिरुत्पद्यत इत्यर्थः । तथाहि—विमलं प्रसन्नं तथा कलुषीभवत् क्षुभ्यच्च चेतः एव हितैषिणं रिपुं वा मित्रममित्रं च कथयति । यत्र यत्र मनः प्रसीदति तदेव मित्रं, यत्र क्षुभ्यति सः अमित्र इति निश्चितमित्यर्थः । अतोऽयं वध्य इति भावः ॥ ६ ॥

ननु मुनेः किमनया दुःशङ्कया ? तत्राह—मुनिरिति । मुनिरस्मि अतो निरागसो निरपराधस्य मे कुतो भयम् ? इत्येष अभिमानः अहङ्कारः । अनपकारिणं मां कोऽपि किं करिष्यतीति बुद्धिः भूतये श्रेयसे न भवति । तथाहि परवृद्धिषु विषये बद्धमत्सराणां दुरात्मनाम् अलङ्घ्यं किमिव अस्ति ? न किञ्चिदकार्य्यमस्ति इत्यर्थः । इवशब्दो वाक्यालङ्कारे ॥ ७ ॥

৫। অথবা জন্মান্তরে বৈরনিবন্ধন আমার প্রতি ইহার অত্যন্ত ক্রোধ ছিল, সেই ক্রোধ কৃতজ্ঞের ন্যায় ইহাকে অদ্যাপি পরিত্যাগ করে নাই। কেননা, এ সমীপস্থ বিরুদ্ধস্বভাব মৃগজাতিকে পরিত্যাগ করিয়া বেগে আমারই অভিমুখে ধাবিত হইতেছে।

৬। এ মৃগ নয়; নিশ্চয়ই অন্য কোন জিঘাংসু হইবে। কারণ এই মৃগসম্বন্ধে আমার মন সেইরূপেই একান্ত স্খলিত হইতেছে। অর্থাৎ ইহাকে জিঘাংসু বলিয়াই আমার ধারণা হইতেছে। বস্তুতঃ প্রসন্ন এবং অপ্রসন্ন চিত্তই মিত্র কি অমিত্র, ইহা কহিয়া থাকে।

दनुजः स्विदयं क्षपाचरो वा
वनजे नेति बलं बतास्ति सत्त्वे।
अभिभूय तथाहि मेघनीलः
सकलं कम्पयतीव शैलराजम् ॥८॥
अयमेव मृगव्यसत्रकामः
प्रहरिष्यन्मयि मायया शमस्थे।
पृथुभिर्ध्वजिनीरवैरकार्षी-
च्चकितोद्भ्रान्तमृगाणि काननानि ॥९॥

अन्वयः। अयं दनुजः स्वित्, क्षपाचरः वा, वनजे सत्त्वे इति बलं न अस्ति बत। तथाहि मेघनीलः (अयं वराहः) सकलं शैलराजम् अभिभूय कम्पयतीव। वाच्य—बलेन न भूयते। मेघनीलेन (अनेन वराहेण) सकलः शैलराजः अभिभूय कम्प्यते ॥८॥

अन्वयः। अयम् एव शमस्थे मयि मायया प्रहरिष्यन् मृगव्यसत्रकामः (सन्) पृथुभिः ध्वजिनीरवैः काननानि चकितोद्भ्रान्तमृगाणि अकार्षीत्। वाच्य—अनेन प्रहरिष्यता मृगव्यसत्रकामिना (सता) काननानि ... अकारिषत ॥९॥

अस्तु जिघांसुरपि क्षुद्रः किं करिष्यति? इत्यत्राह—दनुज इति। अयं दनुजः स्वित् दानवो वा, क्षपाचरो राक्षसो वा न तु मृग एवेत्यर्थः। कुतः? वनजे सत्त्वे वन्यप्राणिनि इति ईदृशं बलं न अस्ति। बत इति आश्चर्ये। बलमेव समर्थयते। तथाहि—मेघनीलोऽयं वराहः सकलं शैलराजमभिभूय आक्रम्य कम्पयति इव पदविष्टम्भमात्रात् तथा प्रतीयत-इत्यर्थः। अत्र कम्पयति इवेति उत्प्रेक्षागर्भः अयं शैलकम्पनरूपकार्य्येण तत्कारणबलातिरेकसमर्थनात् कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ॥८॥

किञ्च योऽयं शैले मृगयाकलकल इव श्रूयते सोऽपि एतन्मायापरिकल्पित एवेत्याह—अयमिति। अयमेव शमस्थे शान्तिनिविष्टे इति रन्ध्रोक्तिः। मयि। अधिकरणविवक्षायां सप्तमी। मायया प्रहरिष्यन् प्रहर्त्तुमिच्छन्

৭। আমি মুনি; আমার কোন অপরাধ নাই, সুতরাং আমার আবার ভয় কোথায়? এরূপ অভিমান লইয়া থাকা কিছুতেই শ্রেয়স্কর নহে। পরের শ্রীবৃদ্ধিবিষয়ে মাৎসর্য্যশালী দুরাত্মাদিগের অকর্ত্তব্য কি আছে?

৮। এ নিশ্চয়ই কোন দানব অথবা রাক্ষস; কেননা, বন্য প্রাণিগণে ঈদৃশ বল নাই। এই মেঘবৎ নীলবর্ণ বরাহ সমস্ত শৈলরাজকে আক্রমণ করিয়া কম্পিত করিতেছে।

बहुश: कृतसत्कृतेर्विधातुं
प्रियमिच्छन्नथवा सुयोधनस्य।
क्षुभितं वनगोचराभियोगाद्-
गणमाशिश्रियदाकुलं तिरश्चाम् ॥१०॥
अवलीढ़सनाभिरश्वसेन:
प्रसभं खाण्डवजातवेदसा वा।

अन्वय:। अथवा बहुश: कृतसत्कृते: सुयोधनस्य प्रियं विधातुम् इच्छन् (य: कश्चित्) वनगोचराभियोगात् क्षुभित तिरश्चां गणम् आशिश्रियत्। वाच्य—इच्छता (येन केनचित्) क्षुभित: गण: आश्रायि ॥ १० ॥

इत्यर्थ:। "लृट् शेषे च" इति चकारात् क्रियार्थायां क्रियायां लृट्। "लृट: सद्वा" इति शत्रादेश:। मृगव्यं मृगया तस्य सत्रं वनं तदर्थं वनमित्यर्थ:। तत्कामयते इति मृगव्यसत्रकाम: मृगयाभूमिपरिग्रहार्थी सन् इत्यर्थ:। "कर्मण्यण्।" "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इति। "सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च" इति चामर:। पृथुभि: बृहद्भि: ध्वजिनीरवै: सेनाकलकलै: स्वमायया कल्पितैरित्यर्थ:। काननानि चकितोद्भ्रान्ता: त्रस्तपलायिता मृगा: येषु तानि अकार्षीत् चकार। अयमेव रन्ध्रान्वेषी मत्प्रहारार्थं स्वयमेव मृगयुर्भूत्वा वनावरोधाय सेनाघोषं कल्पयामास। स: मृगरूपेण आगच्छति इत्यर्थ: ॥ ९ ॥

वितर्कान्तरमाह—बहुश इति। अथवा बहुश:कृता सत्कृति: सत्कारो येन तस्य सुयोधनस्य प्रियं मद्वधरूपं प्रतिप्रियं विधातुं कर्त्तुमिच्छन् य: कश्चिदिति शेष:। वनं गोचरं स्थानं येषां तेषां वनगोचराणामभियोगात् अवरोधात्। "अभियोगोऽवरोध: स्यात्" इति हलायुध:। क्षुभितमुद्विग्नम्, आकुलं चलं, तिरश्चां मृगादिपशूनां गणमाशिश्रियत् वराहरूपेण प्राविक्षत्। "णिश्रिद्रुस्रुभ्य: कर्त्तरि चङ्" इति चङ्। "चङि" इति द्विर्भाव: ॥ १० ॥

৯। আমি শান্তিনিবিষ্ট হইয়া রহিয়াছি; এই মৃগই আমাকে প্রহার করিবার অভিপ্রায়ে মৃগয়া-ভূমি-পরিগ্রহার্থী হইয়া (মায়াকল্পিত) বিপুল সেনা-কল-কল দ্বারা কাননভূমিসকল এমন করিয়া তুলিয়াছে যে, কাননস্থ মৃগগণ ত্রস্ত ও পলায়িত হইতেছে।

১০। অথবা কোন ব্যক্তি দুর্যোধনের নিকট বহুতর উপকার পাইয়া আমাকে বধকবারূপ দুর্য্যোধনের প্রিয়কার্য্য করিবার অভিপ্রায়ে বন্য জন্তুগণের অবরোধে-ক্ষুভিত এই তির্য্যগ্‌জাতি আশ্রয় করিয়াছে—অর্থাৎ বরাহরূপে প্রবেশ করিয়াছে।

प्रतिकर्त्तुमुपागतः समन्युः
कृतवैरो यदि वा वृकोदरेण ? ॥११॥
बलशालितया यथा तथा वा
धियमुच्छेदपरामयं दधानः ।
नियमेन मया निवर्हणीयः
परमं लाभमरातिभङ्गमाहुः ॥१२॥

अन्वयः । खाण्डवजातवेदसा प्रसभम् अवलीढसनाभिः ( अतः ) समन्युः अश्वसेनः प्रतिकर्त्तुम् उपागतः, यदि वा वृकोदरेण कृतवैरः वा ( कश्चित् उपागतः ) । वाच्य— + सनाभिना समन्युना अश्वसेनेन + उपागतम् । कृतवैरेण वा ( केनचित् उपागतम ) ॥ ११ ॥

अन्वयः । ( किं बहुना ) यथा तथा वा (अस्तु) बलशालितया उच्छेदपरां धियं दधानः अयं नियमेन मया निवर्हणीयः । ( तथाहि ) अरातिभङ्गं परमं लाभम् आहुः ( पण्डिताः ) । वाच्य—यथा तथा वा ( भूयतां ) + दधानम् अहं निवर्हयेयम् । अरातिभङ्गः परमो लाभः उच्यते ॥ १२ ॥

वितर्कान्तरमाह—अवलीढेति । खाण्डवजातवेदसा खाण्डववनाग्निना प्रसभम् अवलीढसनाभिर्दग्धबन्धुः । "सपिण्डास्तु सनाभयः । सगोत्र-बान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः । अत एव समन्युः बद्धवैरः तस्य अर्जुनस्य अपकारयितृत्वादिति भावः । अश्वसेनः तक्षकपुत्रः कश्चित् महासर्पः प्रतिकर्त्तुं वैरनिर्य्यातनार्थम् उपागतो वराहमाययेति शेषः । पक्षान्तरमाह—यदि वा वृकोदरेण भीमसेनेन कृतमन्युर्जनितक्रोधो वा कश्चिदिति शेषः । पुरा किल पाण्डवः खाण्डवदाहे पावकभयात् पलाय-मानान् तक्षकपुत्रान् अश्वसेनस्य बन्धून् बाणैरवरुध्य दाहयामास इति भारतकथानुसन्धेया इति ॥ ११ ॥

अथ द्वाभ्यामनन्तरकरणीयमध्यवस्यति—बलेत्यादिना । किं बहुना । यथा तथा वा अस्तु, अयं मायिकः पारमार्थिको वा अस्तु इत्यर्थः । सर्वथापि बलशालितया बलदृप्ततया इत्यर्थः । उच्छेदपरां धियं दधानो मां जिघांसु-रित्यर्थः । अतोऽयं मृगो नियमेनावश्यं मया निवर्हणीयो वध्यः । "प्रमापणं निवर्हणम्" इत्यमरः । तथाहि अरातिभङ्गं शत्रुक्षयं परमं लाभमाहुः ॥१२॥

১১। অথবা অশ্বসেনাখ্য তক্ষকপুত্রের বান্ধবগণ খাণ্ডববন-বহ্নিদ্বারা সহসা দগ্ধ হইয়াছিল বলিয়া সেই অশ্বসেনই বৈরনির্য্যাতনার্থ উপস্থিত হইল ? অথবা বৃকোদর কাহারও সহিত শত্রুতাচরণ করিয়াছেন, তাই সেই ব্যক্তি ক্রুদ্ধ হইয়া আসিল ?

১২। অধিক আর কি, এ মৃগ মায়িক বা পারমার্থিক যাহাই হয়, হউক ; বলদৃপ্ত বলিয়া এ

कुरु तात तपांस्यमार्गदायी
विजयायेत्यलमन्वशान्मुनिर्माम् ।
बलिनश्च वधादृतेऽस्य शक्यं
व्रतसंरक्षणमन्यथा न कर्त्तुम् ॥१३॥

इति तेन विचिन्त्य चापनाम
प्रथमं पौरुषचिह्नमाललम्बे ।
उपलब्धगुण: परस्य भेदे
सचिव: शुद्ध इवाददे च बाण: ॥१४॥

अन्वय:। हे तात। अमार्गदायी विजयाय तपांसि कुरु इति मुनि: माम् अलम् अन्वशात्। अस्य बलिन: वधात् ऋते अन्यथा व्रतसंरक्षणं कर्त्तुं न शक्यम्। वाच्य—अमार्गदायिना तपांसि क्रियन्तां मुनिना अहम् अन्वशिष्ये ॥ १३ ॥

अन्वय:। तेन इति विचिन्त्य चापनाम प्रथमं पौरुषचिह्नम् आललम्बे, परस्य भेदे उपलब्धगुण: शुद्ध: बाणश्च सचिव इव आददे। वाच्य—स: पौरुषचिह्नम् आललम्बे, उपलब्धगुणं शुद्धं बाणञ्च सचिवम् इव आददे ॥ १४ ॥

ननु तपोविरोधिनी हिंसेत्याशङ्क्याह—कुर्विति। हे तात! वत्स! मार्गदायी न भवतीति अमार्गदायी रन्ध्रान्वेषिणां प्रवेशम् अयच्छन् इत्यर्थ:। कुत: ? जयार्थित्वादित्याह—विजयाय तपांसि कुर्विति मुनि: व्यासो माम् अलं भृशमन्वशात् अनुशिष्टवान्। अनुशासेर्लङ्। ननु मुनिर्वा कथम् अधर्मम् अन्वशात्? तत्राह—बलिन इति। अस्य मृगस्य बलिन: प्रबलस्य वधादृते वधं विना। "अन्यारादितरर्त्ते" इत्यादिना पञ्चमी। अन्यथा उपायान्तरेण व्रतसंरक्षणं तपोरक्षणं कर्त्तुं न शक्यम्। हिंसापि दुष्टनिग्रहात्मिका न अधर्म इत्यर्थ: ॥ १३ ॥

इतीति। तेन अर्जुनेन इतीत्थं विचिन्त्य वितर्क्य चापनाम चापाख्यं प्रथमं पौरुषचिह्नं तस्य मुख्यायुधत्वादिति भाव:। आललम्बे गृहीतम्। कर्मणि लिट्। अथ परस्य शत्रोर्भेदे विदारणे उपजापे च उपलब्धगुणो

আমাকে নিহত করিতে ইচ্ছা করিয়াছে; অতএব ইহাকে আমি অবশ্যই বধ করিব। বিচক্ষণেরা অরাতিসংহার পরম লাভ বলিয়া ব্যাখ্যা করিয়াছেন।

১৩। "বৎস! তুমি (রন্ধ্রান্বেষীদিগকে) তোমার পথে প্রবেশ করিতে না দিয়া বিজয়ার্থ তপস্যা করিতে থাক,—"ব্যাসমুনি আমাকে বারবার এইরূপ উপদেশ দিয়াছিলেন; সুতরাং এই প্রবল মৃগের বিনাশ ব্যতীত অন্য কোন উপায়ে আমার ব্রত রক্ষা করা যাইবে না।

अनुभाववता गुरु स्थिरत्वा-
दविसंवादि धनुर्धनञ्जयेन।
स्वबलव्यसनेऽपि पीड्यमानं
गुणवन्मित्रमिवानतिं प्रपेदे ॥१५॥

प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीड़ितस्तदानीम्।
अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः ॥१६॥

अन्वयः। अनुभाववता धनञ्जयेन गुरु स्थिरत्वात् अविसंवादि गुणवत् इव स्वबलव्यसनेऽपि पीड्यमानं धनुः मित्रम् इव आनतिं प्रपेदे। वाच्य—गुरुणा अविसंवादिना गुणवता धनुषा मित्रेण इव +पीड्यमानेन आनतिः प्रपेदे ॥ १५ ॥

अन्वयः। तदानीं महेषौ गाण्डिवम् अधिरोहति (सति) प्रविकर्षनिनादभिन्नरन्ध्रः तथा पद-

ज्ञातशक्तिः बाणस्तु प्रासमौर्व्वीकस्येति शेषः। शुद्धो ऋजुः दिग्धत्वादिदोष-रहितो वा। "न कर्णिभिर्नै दिग्धैर्नाग्निज्वलिततेजसैः" इति निषेधात्। अन्यत्रोपधाविशुद्धो निर्मलचित्त इति यावत्। बाणस्य सचिव इव आददे जगृहे। अत्र बाणसचिवयोः शब्दमात्रसाधर्म्यात् श्लेषालङ्कारः। प्रकृता-प्रकृतविषय इति सर्वस्वकारः, उपमेवेति केचित् ॥ १४ ॥

अनुभावेति। गुरु महत् पूज्यं च स्थिरत्वात् सारवत्त्वात् अविसंवादि अभङ्गुरमन्यत्र प्रतिष्ठितत्वात् असत्यरहितं गुणवत् सज्यमन्यत्र औदार्य्यादि-गुणवत् धनुः अनुभाववता निश्चयबुद्धिमता। "अनुभावः प्रभावे च सतां च मतिनिश्चयः" इत्यमरः। धनञ्जयेन स्वबलव्यसनेऽपि तपसा क्षीणबलेऽपि। अन्यत्र स्वं धनं तदेव बलं तस्य व्यसने नाशेऽपि पीड्यमानम् आकृष्यमाणम् अवरुध्यमानञ्च सन्मित्रमिव आनतिं नम्रताम् आनुकूल्यञ्च प्रपेदे। अलङ्कारस्तु पूर्ववत् ॥ १५ ॥

১৪। অর্জ্জুন এইরূপ বিতর্ক করিয়া চাপনামক প্রথম পৌরুষ-চি · গ্রহণ করিলেন; অনন্তর শত্রুসংহারে যাহার শক্তি অবগত হওয়া গিয়াছে, এরূপ একটী সরল বাণও তিনি সচিবের ন্যায় গ্রহণ করিলেন।

১৫। যেমন সৎকার্যযোগ্য সত্যনিষ্ঠ ঔদার্য্যাদি গুণশালী মিত্র ধনবলের অভাবেও অনুরুধ্যমান হইলে আনুকূল্য প্রাপ্ত হয়, তেমনি সারবত্তাহেতু গুরু, অভঙ্গুর, মৌর্ব্বীযুক্ত ধনুঃ মহানুভব ধনঞ্জয় কর্তৃক তপোজন্য ক্ষীণবল অবস্থায়ও আকৃষ্যমাণ হইয়া নম্র হইল।

दद्दशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्त्रिसृणां पुरां विधातुं
वधमात्मेव भयङ्करः परेषाम् ॥१७॥

विचकर्ष च संहितेषुरुच्चै-
श्चरणास्कन्दननामिताचलेन्द्रः ।
धनुरायतभोगवासुकिज्या-
वदनग्रन्थिविमुक्तवह्नि शम्भुः ॥१८॥

विष्टम्भनिपीडितः सकलः शैलः संशयम् आरुरोह । वाच्य— — भिन्नरन्ध्रेण — निपीडितेन सकलेन शैलेन संशयः आरुरुहे ॥ १६ ॥

अन्वयः । अथ शिवेन स्थिरपूर्णायतचापमण्डलस्थः तिसृणां पुरां वधं विधातुं रचितः आत्मा इव परेषां भयङ्करः सः सविस्मयं दद्दशे । वाच्य—शिवः । चापमण्डलस्थं रचितम् आत्मानम् इव भयङ्करं तं ददर्श ॥ १७

प्रविकर्षेति । तदानीं तस्मिन् काले महेषौ बाणे गाण्डीवम् अर्जुनधनु-रधिरोहति सति । "कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्य-मरः । "गाण्डग्रजगात् संज्ञायाम्" इति वप्रत्ययः । प्रविकर्षणं ज्यास्फालनेन यो निनादः तेन भिन्नरन्ध्रो विदलितगह्वरः, तथा पदविष्टम्भेन पादाक्रमणेन निपीड़ितः नुन्नः सकलः समूलः [सर्वः] शैलः संशयं जीवितसन्देहम् आरुरोह प्राप इत्यर्थः । अत्र शैलस्य संशयासम्बन्धेऽपि सम्बन्धकथनात् अतिशयोक्ति-रलङ्कारः ॥ १६

दद्दश इति । अथ बाणसन्धानानन्तरं शिवेन स्थिरं निश्चलं पूर्णञ्च यथा तथा आयते आकृष्टे चापमण्डले तिष्ठतीति तथोक्तः, चापमण्डलमन्तर्धाय स्थित इत्यर्थः । तिसृणाम् । "न तिसृचतसृ" इति दीर्घप्रतिषेधः । पुरां, त्रिपुरासुरस्येत्यर्थः । वधं संहारं विधातुं कर्त्तुं रचितः कल्पितः स्थानविशेषे स्थापित इति यावत् । आत्मा स्वयमेव परेषां भयानको भयङ्करः । सः अर्जुनः सविस्मयं दद्दशे दृष्टः । उपमालङ्कारः ॥१७

১৬। তৎকালে মহাশর গাণ্ডীবে যোজিত হইলে সমুদয় শৈলভূমি জ্যাকর্ষণ-নাদে ভিন্নরন্ধ্র ও পাদ-নিক্ষেপে নিপীড়িত হইয়া তাহাদের অস্তিত্ববিষয়ে সংশয়ারূঢ় হইল।

১৭। অনন্তর শিব সবিস্ময়ে দেখিলেন,—অর্জ্জুন সম্পূর্ণ সমাকৃষ্ট স্থির চাপমণ্ডলে অবস্থিত হইয়া ত্রিপুরসংহারে পরিকল্পিত আপনার আত্মারই ন্যায় ভয়ঙ্কর আকারে বিরাজ করিতেছেন।

स भवस्य भवक्षयैकहेतोः
सितसप्तेश्च विधास्यतोः सहार्थम्।
रिपुराप पराभवाय मध्यं
प्रकृतिप्रत्यययोरिवानुबन्धः ॥१९॥

अथ दीपितवारिवाहवर्त्मा
रववित्रासितवारणादवार्य्यः।
निपपात जवादिषुः पिनाकात्
महतोऽभ्रादिव वैद्युतः कृशानुः ॥२०॥

अन्वयः। अथ शम्भुश्च संहितेषुः (सन्) उच्चैः चरणास्कन्दननामिताचलेन्द्रः, आयतभोगवासुकिज्या वदनग्रन्थिविमुक्तवह्नि धनुः विचकर्ष। वाच्य—शम्भुना संहितेषुणा + नामिताचलेन्द्रेण धनुः विचकृषे ॥ १८

अन्वयः। सहार्थं विधास्यतोः भवक्षयैकहेतोः भवस्य सितसप्तेः च मध्यं रिपुः प्रकृतिप्रत्यययोः मध्यम् अनुबन्ध इव पराभवाय आप। वाच्य—रिपुणा अनुबन्धेन इव आपे ॥ १९

अन्वयः। अथ दीपितवारिवाहवर्त्मा अवार्य्यः इषुः रववित्रासितवारणात् पिनाकात् महतः अभ्रात् वैद्युतः कृशानुः इव जवात् निपपात। वाच्य— + वर्त्मना अवार्य्येण इषुणा वैद्युतेन कृशानुना इव निपेते ॥ २०

अथ पिनाकिवृत्तान्तमाह—विचकर्षेति। अथ शम्भुश्च संहितेषुः सन् उच्चैर्भृशं चरणास्कन्दनेन पदविष्टम्भेन नामितः अधो नीतः अचलेन्द्रो येन स तथोक्तः। आयतभोग आकृष्टकायः वासुकिरेव ज्या तस्य वदनमेव ग्रन्थिस्तेन विमुक्तः उत्सृष्टो वह्निर्यस्य तद् धनुर्विचकर्ष इति स्वभावोक्तिः ॥१८

स इति। सह सम्भूय अर्थमरिवधरूपप्रयोजनं विधास्यतोः करिष्यतोः, अन्यत्र सहार्थम् अभिधेयमभिधास्यतोरित्यर्थः। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" इति वचनात्। भवक्षयैकहेतोः संसारोच्छेदनिदानस्य भवस्य शिवस्य सितसप्तेरर्जुनस्य च मध्यं रिपुर्वराहः। यस्मात् प्रत्ययो विधीयते सा प्रकृतिर्धात्वादिः, प्रत्ययः सनादिः, तयोर्मध्यम् अनुबन्धः इत्संज्ञको वर्णः यथाभूतं भूतिरित्यादौ ककारः। स इव पराभवाय नाशाय लोपार्थमिवाप न तु स्थित्यर्थमित्यर्थः ॥ १९

১৮। অনন্তর শম্ভুও শরসন্ধানপূর্ব্বক ধনু আকর্ষণ করিলেন ; তদীয় চরণাস্কন্দনে গিরিরাজ বিনমিত হইল। আকৃষ্টকায় বাসুকি তাঁহার ধনুর মৌর্ব্বীরূপে পরিণত হওয়ায় তাহার বদনগ্রন্থি হইতে অগ্নি নির্গত হইতে লাগিল।

১৯। সংসারক্ষয়নিদান শঙ্কর ও শ্বেতাশ্ব অর্জ্জুন উভয়েই একদা বৈরিবধরূপ এক কার্য্যে উদ্যত

व्रजतोऽस्य बृहत्पतत्रजन्मा
कृततार्क्ष्योपनिपातवेगशङ्कः।
प्रतिनादमहान् महोरगाणां
हृदयश्रोत्रभिदुत्पपात नादः ॥२१॥

नयनादिव शूलिनः प्रवृत्तै-
र्मनसोऽप्याशुतरं यतः पिशङ्गैः।
विदधे विलसत्तड़िल्लताभैः
किरणैर्व्योमनि मार्गणस्य मार्गः ॥२२॥

अन्वयः। व्रजतः अस्य बृहत्पतत्रजन्मा कृततार्क्ष्योपनिपातवेगशङ्कः (अतः) महोरगाणां हृदयश्रोत्रभित् प्रतिनादमहान् नादः उत्पपात। वाच्य—बृहत्पतत्रजन्मना + वेगशङ्केन + श्रोत्रभिदा प्रतिनादमहता नादेन उत्पेते ॥ २१

अथेति। अथ रिपोर्म्मध्यप्रवेशानन्तरं दीपितं वारिवाहवर्त्म आकाशं येन सः अवार्य्यो दुर्वारः इषुः शरः रववित्रासितवारणात् स्वघोषभीषितगजात् पिनाकात् शिवधनुषः। "पिनाकोऽजगवं धनुः" इत्यमरः। महतोऽभ्रात् मेघात् विद्युतोऽयं वैद्युतः कृशानुः अशनिरिव जवात् वेगात् निपपात आदधाव ॥ २०

व्रजत इति। व्रजतो धावतोऽस्य बाणस्य बृहद्भ्यः पतत्रेभ्यः पत्रेभ्यो जन्म यस्य स तथोक्तः, कृता तार्क्ष्योपनिपातवेगशङ्का गरुड़ागमभ्रमो येन सः। अतएव महोरगाणां सर्पाणां हृदयानि श्रोत्राणि च भिनत्तीति हृदयश्रोत्रभित्। "समुद्राभ्राद्घः" इति सूत्रे पूर्वनिपातव्यभिचारात् श्रोत्रशब्दस्य पूर्वनिपातव्यभिचारः। प्रतिनादैः प्रतिध्वनिभिर्म्महान् सम्मूर्च्छितो नादः उत्पपात उत्थितः। अत्र नादस्य उरगहृदयभेदकत्वासम्बन्धेऽपि सम्बन्धाभिधानात् अतिशयोक्तिः। सा च तार्क्ष्यवेगभ्रमोत्थापितेति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ११

হইয়াছেন। ইহাঁদের মধ্যস্থলে, যেমন ("দেবানাং, সর্ব্বেষাং ভূত্বা গতিঃ" প্রভৃতি প্রয়োগে) টকারাদি অনুবন্ধ (ইৎসংজ্ঞক বর্ণ) একযোগে অর্থপ্রতিপাদক প্রকৃতি এবং প্রত্যয়ের মধ্যস্থলে লোপার্থ আসিয়া উপস্থিত হয়, তেমনি বরাহরূপী রিপু আত্মবিনাশার্থ সমাগত হইল।

২০। অনন্তর সেই দুর্ব্বার বাণ আকাশপথ উদ্দীপিত করিয়া স্বশব্দে গজঘটার বিত্রাসজনক পিনাক হইতে বেগে নিপতিত হইল; বোধ হইল, যেন মহামেঘ হইতে বজ্রপাত হইল।

২১। বাণ ধাবিত হইলে তাহার বিপুল পক্ষোৎপন্ন প্রতিনাদ মহানাদে উত্থিত হইল। ঐ নাদে

अपयन् धनुषः शिवान्तिकस्थै-
र्विवरेसद्भिरभिख्यया जिहानः ।
युगपद्ददृशे विशन् वराहं
तदुपोढैश्च नभश्चरैः पृषत्कः ॥२३॥

अन्वयः । शूलिनः नयनात् प्रवृत्तैः इव पिशङ्गैः विलसत्तड़िल्लताभैः मनसः अपि आशुतरं यतः मार्गणस्य किरणैः व्योमनि मार्गः विदधे । वाच्य—प्रवृत्त : पिशङ्गाः + लताभाः + किरणाः मार्गं विदधुः ॥२२

अन्वयः । पृषत्कः धनुषः अपयन् शिवान्तिकस्थैः नभश्चरैः, अभिख्यया जिहानः विवरेसद्भिः (नभश्चरैः) वराहं विशन् तदुपोढैः (नभश्चरैः) युगपत् ददृशे । वाच्य—पृषत्कम् अपयन्तं शिवान्तिकस्थाः जिहानं विवरेसदः, विशन्तं तदुपोढाः नभश्चराः ददृशुः ॥ २३

नयनादिति । शूलिनो नयनात् प्रवृत्तैर्निर्गतैरिवेति उत्प्रेक्षा । नेत्राग्निशिखाकल्पैरित्यर्थः । पिशङ्गैर्विलसत्तड़िल्लताभैः विद्युद्दामतुल्यैरित्युपमा । मनसश्चित्तादपि आशुतरं शीघ्रतरम् । आशुशब्दादव्ययात्तरप् । अतः "किमेत्तिङव्यय" इत्यादिना आम्प्रत्ययो न । "क्लीबे शीघ्राद्यसत्त्वे स्यात्" इत्यमरः । यतः गच्छतः । इणः शतृप्रत्ययः । मार्गणस्य शरस्य "कलम्बमार्गणशराः" इत्यमरः । किरणैर्व्योमनि आकाशे मार्गः उल्कारेखाकारः पन्था विदधे विरचित इति स्वभावोक्तिरलङ्कारः ॥ २२

अपयन्निति । पृषत्को बाणः । "पृषत्कबाणविशिखाः" इत्यमरः । धनुषः पिनाकात् अपयन् निर्यन्, निर्गच्छन्नित्यर्थः । इणः शतृप्रत्ययः । शिवान्तिकस्थैर्नभश्चरैः अभिख्यया शोभया जिहानः शोभनं गच्छन् इत्यर्थः । "ओ हाङ् गतौ" इति धातोः शानच् । "अभिख्या नामशोभयोः" इत्यमरः । विवरे सीदन्तीति विवरेसदस्तैः विवरेसद्भिरन्तरालवर्त्तिभिर्नभश्चरैः । "सत्सूद्विष" इत्यादिना क्विप् । "तत्पुरुषे कृति बहुलम्" इत्यलुक् । अथ वराहं विशन् प्रविशन् तदुपोढैः तं वराहम् उपोढैः प्रत्यासन्नैः । वहेः कर्त्तरि क्तः । नभश्चरैः युगपत् ददृशे दृष्ट इति बाणवेगोक्तिः । अत्र क्रमेण पिनाकनिष्क्रमणादिक्रियाविशिष्टस्य बाणस्य शिवान्तिकादिभिन्नदेशस्थनभश्चरकर्त्तृकदर्शनयौगपद्यासम्बन्धेऽपि तत्सम्बन्धोक्तिमूलातिशयोक्त्या लोकोत्तरवेगप्रतीतिरलङ्कारेण वस्तुध्वनिः ॥ २३

গরুড়ের পতনবেগাশঙ্কা উৎপাদন করিল। সুতরাং উহাতে মহোরগগণের হৃদয় এবং কর্ণ বিদীর্ণ হইতে লাগিল।

২২। মন অপেক্ষাও আশুগামী, পিশঙ্গবর্ণ, বিলসিত তড়িল্লতার ন্যায় সমুদ্ভাসিত শিবশরের কিরণপুঞ্জ আকাশে যেন একটা পথ বিরচন করিল। এই সকল কিরণ শূলপাণির নয়ন হইতেই যেন উৎপন্ন হইল।

स तमालनिभे रिपौ सुराणां
घननीहार इवाविषक्तवेगः ।
भयविप्लुतमीक्षितो नभःस्थै-
र्जगतीं ग्राह इवापगां जगाहे ॥२४॥
सपदि प्रियरूपपर्वरेखः
सितलोहाग्रनखः खमाससाद ।
कुपितान्तकतर्जनाङ्गलिश्री-
र्व्यथयन् प्राणभृतः कपिध्वजेषुः ॥२५॥

अन्वयः । सः तमालनिभे सुराणां रिपौ घननीहारे इव अविषक्तवेगः ( सन् ) नभःस्थैः भयविप्लुतं यथा तथा ईक्षितः ( सन् ) आपगां ग्राह इव जगतीं जगाहे । वाच्य—तेन अविषक्तवेगेन ( सता ) ईक्षितेन ( सता ) आपगा ग्राहेण इव जगती जगाहे ॥ २४

अन्वयः । सपदि प्रियरूपपर्वरेखः सितलोहाग्रनख कुपितान्तकतर्जनाङ्गुलिश्रीः कपिध्वजेषुः प्राणभृतः व्यथयन् खम् आससाद । वाच्य— ।- पर्वरेखेण सितलोहाग्रनखेन कपिध्वजेषुणा व्यथयता खम् आसेदे ॥ २५

स इति । स बाणः तमालनिभे तमालप्रभे नीलाभे इति यावत् । सुराणां रिपौ वराहे घननीहारे सान्द्रतुहिने इव अविषक्तवेगोऽप्रतिबद्धवेगः सन् । तथा नभस्थैः खेचरैर्भयेन विप्लुतं विह्वलं यथा तथा ईक्षितः सन् । अपां सम्बन्धिवेग आपः, अपां समूहो वा आपमार्गेन गच्छतीति आपगा नदी तां गृह्णातीति ग्राहो जलग्राहः जलचर इति यावत्, "जलचर" इति वक्तव्यादविभाषया ग्राह इति णप्रत्ययः । स इव, जगतीं भूमिम् । "जगती विष्टपे भूम्या"मिति वैजयन्ती । जगाहे विवेश, अन्तर्हित इत्यर्थः ॥ २४

अथ अर्जुनबाणप्रयोगमाह—सपदीति । सपदि शिवबाणपातसमय एव प्रियाः रूपमाकृतिः पर्वाणि ग्रन्थयो रेखा रचनाश्च यस्य सः । अङ्गुलिपक्षे पर्वरेखाः प्रसिद्धाः । लोहाग्रमयःफलं तत् नखमिवेति उपमित-

২৩। শিবশর যখন ধনু হইতে নির্গত হইল, তখন শিবসন্নিকটস্থ নভশ্চরেরা, যখন শোভাসম্পন্ন হইল, তখন অন্তরালবর্ত্তী নভশ্চরেরা এবং যখন বরাহদেহে প্রবেশ করিল, তখন বরাহসন্নিকটস্থ নভশ্চরেরা এইরূপে সকলেই তাহা দর্শন করিল।

২৪। সেই সুরশত্রু বরাহের দেহ তমালবৎ নীলবর্ণ, তুহিনস্তূপবৎ কঠিন ; তাহাতে শিবশরের বেগ অপ্রতিহত হইল; নভশ্চরেরা উহা ভয়বিহ্বলভাবে নিরীক্ষণ করিল। এইভাবে গ্রাহ যেমন নদীতে প্রবেশ করে, তেমনি ঐ শর ভূগর্ভে প্রবেশ করিল।

परमास्त्रपरिग्रहोरुतेजः
स्फुरदुल्काकृति विक्षिपन् वनेषु।
स जवेन पतन् परःशतानां
पततां व्रात इवारवं वितेने ॥२६॥

अविभावितनिष्क्रमप्रयाणः
शमितायाम इवातिरंहसा सः।
सह पूर्वतरं नु चित्तवृत्ते-
रपतित्वा नु चकार लक्ष्यभेदम् ॥२७॥

अन्वयः। परमास्त्रपरिग्रहोरु स्फुरत् उल्काकृति तेजः वनेषु विक्षिपन् (सन्) जवेन पतन् सः परःशतानां पततां व्रात इव आरवं वितेने। वाच्य—विक्षिपता पतता तेन + व्रातेनेव आरवः वितेने ॥ २६

अन्वयः। अतिरंहसा अविभावितनिष्क्रमप्रयाणः शमितायाम इव (स्थितः) सः सह नु चित्त-

समासः। सितं लोहाग्रनखं यस्य सः, कुपितस्य अन्तकस्य मृत्योर्या तर्जनस्य अङ्गुलिः तर्जनाङ्गुलिः तस्याः श्रीरिव श्रीर्यस्य सः कपिध्वजेषुः अर्जुनबाणः प्राणभृतो व्यथयन् भीषयमाणः खमाकाशम् आससाद प्राप। उपमालङ्कारः ॥ २५

परमेति। परमास्त्रपरिग्रहेण दिव्यास्त्राधिष्ठानेन उरु महत् अतएव स्फुरत् उल्काकृति उल्कावत् दीर्घायमाणमित्यर्थः। तेजो वनेषु विक्षिपन् विकिरन् सन् जवेन पतन् धावन् स बाणः शतात्परे परःशताः तेषां शताधिकसंख्यकानामित्यर्थः। "परःशताद्यास्ते येषां परा संख्या शताधिकात्" इत्यमरः। "पञ्चमी" इति योगविभागात् समासः। "राजदन्तादिषु परम्" इति उपसर्जनस्य शतशब्दस्य परनिपातः, पारस्करादित्वात् सुडागमः। पततां पतत्रिणाम्। "पतत्पत्ररथाण्डजाः" इत्यमरः। व्रातः समूह इव आरवं वितेने विस्तारयामास ॥ २६

২৫। সেই একই সময়ে কপিধ্বজের বাণ প্রাণিপুঞ্জকে ব্যথিত করিয়া আকাশে উত্থিত হইল। ঐ বাণের আকৃতি ও পর্ব্ব সকলই সুন্দর; লৌহফলক নখবৎ তীক্ষ; এবং উহা কুপিত অন্তকের তর্জ্জনী অঙ্গুলির ন্যায় শোভমান।

২৬। সেই বাণ দিব্যাস্ত্রের অধিষ্ঠানে উদগ্র হইয়া বনরাজি মধ্যে স্ফুরিত উল্কাকৃতি তেজ বিকিরণ করত বেগে পতিত হইল এবং শত শত বিহঙ্গসমূহের ন্যায় শব্দ করিয়া উঠিল।

स वृषध्वजसायकावभिन्नं
जयहेतुः प्रतिकायमेषणीयम्।
लघु साधयितुं शरः प्रसेहे
विधिनेवार्थमुदीरितं प्रयत्नः ॥२८॥

अविवेकवृथाश्रमाविवार्थं
क्षयलोभाविव संश्रितानुरागम्।
विजिगीषुमिवानयप्रमादौ
अवसादं विशिखौ विनिन्यतुस्तम् ॥२९॥

वृत्तेः पूर्वतरं नु, अपतित्वा नु लक्ष्यभेदं चकार। वाच्य— + प्रयाणेन शमितायामेन इव तेन लक्ष्यभेदः चक्रे ॥ २७

अन्वयः। जयहेतुः सः वृषध्वजसायकावभिन्नम् एषणीयं प्रतिकायं विधिना उदीरितम् अर्थं प्रयत्न इव लघु साधयितुं प्रसेहे। वाच्य—जयहेतुना तेन प्रयत्नेन इव प्रसेहे ॥ २८

अविभावितेति। अतिरंहसा अतिवेगेन अविभावितं अलक्षितं निष्क्रमो गाण्डीवात् निःसरणं प्रयाणम् अन्तरागमनं च यस्य सः। तथा शमितायामः सङ्क्षिप्तदैर्घ्यं इव स्थित इति उपात्तवेगगुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा। स शरः। सह नु सह वा चित्तवृत्त्या इति शेषः। चित्तवृत्तेः पूर्वतरं नु प्रागेव वा, उभयत्रापि लक्ष्ये पतित्वा इति शेषः। अथवा अपतित्वा नु, लक्ष्य इति शेषः। लक्ष्यभेदं चकार। अत्र उपात्तवेगगुणनिमित्ता बाणस्य चित्तवृत्त्या सहपातपूर्वपतनाभावोत्प्रेक्षास्तिस्रः, उत्तरोत्तरोत्कर्षेण वेगातिशयव्यञ्जिकाः इत्यलङ्कारेण वस्तुध्वनिः ॥ २७

स इति। जयहेतुः स शरो वृषध्वजसायकावभिन्नं शिवशरविद्धम् एषणीयं वेध्यमिति शेषः। इषेरिच्छार्थादनीयरप्रत्ययः। प्रतिकायं प्रतिशरीरं प्रतिपक्षमिति यावत्। विधिना दैवेन [विधिवाक्येन] उदीरितं फलसाधनतया प्रतिपादितम् अर्थं योगादिकं प्रयत्नः पुरुषव्यापार इव। लघु अक्लेशेन यथा तथा साधयितुम्। स्वार्थणिजन्तात् तुमुन्, प्रसेहे शशाक। उपमालङ्कारः ॥२८

२৭। সেই অর্জ্জুন-বাণের এতই বেগ যে, তাহা কখন নিষ্ক্রমণ বা কখন প্রয়াণ করিল, কিছুই বুঝা গেল না, সে যেন সংক্ষিপ্তদৈর্ঘ্য (অতিখর্ব্ব) হইয়া চিত্তবৃত্তির সঙ্গে সঙ্গেই কিংবা চিত্তবৃত্তির পূর্ব্বেই অথবা লক্ষ্যে না পড়িয়াই লক্ষ্য ভেদ করিল।

২৮। পুরুষকার যেমন অনায়াসে দৈব-প্রতিপাদিত অর্থ সম্পাদন করিতে পারে, তেমনি সেই জয়সাধক শর শিবশরবিদ্ধ বেধনার্থ অন্বেষণীয় প্রতিপক্ষদেহ অতিক্রম্ত আয়ত্ত করিতে সমর্থ হইল।

अथ दीर्घतरं तमः प्रवेक्ष्यन्
सहसा रुग्णरयः स सम्भ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्व्यां
वलयीभूततरुं धराञ्च मेने॥३०॥

स गतः क्षितिमुष्णशोणिताद्रैः
खुरदंष्ट्राग्रनिपातदारिताश्मा।

अन्वयः। अविवेकवृथाश्रमौ अर्थम् इव क्षयलोभौ संश्रितानुरागम् इव, अनयप्रमादौ विजिगीषुम् इव विशिखौ तम् अवसादं विनिन्यतुः। वाच्य—अविवेकवृथाश्रमाभ्याम् अर्थः क्षयलोभाभ्यां संश्रितानुरागः, अनयप्रमादाभ्यां विजिगीषुः इव विशिखाभ्यां सः अवसादं निन्ये॥ २९

अन्वयः। अथ सः दीर्घतरं प्रवेक्ष्यन् सहसा रुग्णरयः सम्भ्रमेण उष्णरश्मिम् उर्व्यां निपतन्तम् इव धराञ्च वलयीभूततरुं मेने। वाच्य—तेन प्रवेक्ष्यता रुग्णरयेण उष्णरश्मिः निपतन् इव धरा च वलयीभूततरुः मेने॥ ३०

अविवेकेति। अविवेकः अन्तरानभिज्ञत्वं वृथाश्रमः निष्फलप्रयासः तौ अर्थं धनमिव। अस्थानविनियोगहेतुकत्वात् अनर्थाः धनहानिकरत्वमिति भावः। क्षयः अनुपचयो लोभः अदातृत्वं तौ संश्रितानाम् अनुजीविनाम् अनुरागमिव। अकिञ्चित्करे स्वामिनि अनुरागस्य अनवस्थानादिति भावः। अनयो दुर्नीतिः प्रमादः अनवधानता तौ विजिगीषुमिव। रन्ध्रभूयिष्ठस्य जयासिद्धेरिति भावः। विशिखौ शिवार्जुनबाणौ तं वराहमवसादं कार्श्य-शैथिल्यं विनिन्यतुः नीतवन्तौ। नयतिर्द्विकर्मकः। मालोपमेयम्॥ २९

अथेति। अथ स वराहः दीर्घतरं तमः दीर्घनिद्रां प्रवेक्ष्यन् मरिष्यन् इत्यर्थः। सहसा झटिति रुग्णरयः भग्नवेगः सम्भ्रमेण भ्रान्त्या। "सम्भ्रमो भ्रान्तिहावयोः" इति विश्वः। उष्णरश्मिम् उर्व्यां निपतन्तमिव मेने धराञ्च वलयीभूता मण्डलीभूतास्तरवो यस्याः तां तथा मेने तथा बभ्रामेत्यर्थः॥३०

২৯। যেমন অবিবেক এবং বৃথাশ্রম—অর্থকে, ক্ষয় ও লোভ—অনুজীবিজনের অনুরাগকে, এবং দুর্নীতি ও প্রমাদ—বিজিগীষু ব্যক্তিকে অবসন্ন করে, তেমনি শিব ও অর্জুন-কর্তৃক নিক্ষিপ্ত বাণদ্বয় সেই বরাহকে অবসাদগ্রস্ত করিল।

৩০। অনন্তর সেই বরাহ চিরনিদ্রায় অভিভূত হইবার জন্য বেগবিরহিত হইয়া ঘূর্ণনপ্রবৃত্ত হইল, এবং সে মনে করিল—সূর্য্যমণ্ডল যেন ধরণীতলে পতিত আর ভূমণ্ডল যেন মণ্ডলীভূত মহীরুহরাজিতে বিরাজিত হইতেছে।

असुभिः क्षणमीक्षितेन्द्रसूनु-
र्विहितामर्षगुरुध्वनिर्निरासे ॥३१॥
स्फुटपौरुषमापपात पार्थ-
स्तमथ प्राज्यशरः शरं जिघृक्षुः ।
न तथा कृतवेदिनां करिष्यन्
प्रियतामेति यथा कृतावदानः ॥३२॥

अन्वयः। क्षितिं गतः उष्णशोणिताद्रः क्षुरदंष्ट्राग्रनिपातदारिताश्मा क्षणम् ईक्षितेन्द्रसूनुः विहितामर्षगुरुध्वनिः सः असुभिः निरासे। वाच्य—गतं + शोणिताद्रं + दारिताश्मानं + सूनं + गुरुध्वनिं तम् असवः निरासुः ॥ ३१

अन्वयः। अथ पार्थः प्राज्यशरः (सन्नपि) स्फुटपौरुषं तं शरं जिघृक्षुः आपपात, कृतवेदिनां कृतावदानः यथा प्रियताम् एति, तथा करिष्यन् न (प्रियताम् एति)। वाच्य—पार्थेन प्राज्यशरेण जिघृक्षुणा आपेते, कृतावदानेन प्रियता ईयते, करिष्यता न ॥३२॥

स इति। क्षितिं गतः क्षितौ पतितः उष्णेन प्रत्यग्रत्वात् शोणितेन आर्द्रः प्लुतः, खुराणां दंष्ट्रयोश्च अग्राणां निपातेन आघातेन दारिताश्मा पाटितपाषाणो येन सः। किञ्च क्षणमीक्षितः इन्द्रसूनुर्येन सः। स्वार्थविघातरोषादिति भावः। अत एव विहितः कृतः अमर्षगुरुः क्रोधोद्धतो ध्वनिः क्रन्दितं येन सः तथोक्तः। स वराहः असुभिः प्राणैर्निरासे निरस्तः त्यक्तः। अस्यतेः कर्मणि लिट्। इयञ्च स्वभावोक्तिः ॥ ३१

स्फुटेति। अथ वराहपातानन्तरं पार्थः अर्जुनः प्राज्यशरः प्रभूतशरः सन्नपीत्यर्थः। "प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः। स्फुटपौरुषं व्यक्तविक्रमं वराहभेदिनं शरं जिघृक्षुः ग्रहीतुमिच्छुः। ग्रहेः सन्नन्तादुप्रत्ययः। आपपात आधावति स्म, कृतज्ञतया शरग्रहणं न तु लोभादित्यर्थः। ननु अन्येऽपि उपकर्त्तार एव किमित्यत्रैवादरस्तस्येत्यत आह—कृतवेदिनां कृतज्ञानां कृतावदानः कृतकर्मा। "अवदानं कर्म वृत्तम्" इत्यमरः। यथा प्रियताम् एति तथा करिष्यन् उपकरिष्यन् न प्रियतामेति। कृतकरिष्यमाणयोः कृतं बलीय इति न्यायादिति भावः ॥ ३२

৩১। বরাহ ক্ষিতিতলে পতিত হইয়া উষ্ণশোণিতে পরিপ্লুত হইল; তদীয় খুর এবং দংষ্ট্রার অগ্রভাগের আঘাতে পাষাণদেশ পাটিত হইল; সে ক্ষণেকের জন্য অর্জ্জুনকে দেখিয়া লইল; এবং ক্রোধোদ্ধত ধ্বনি করিতে করিতে প্রাণহীন হইয়া পড়িল।

৩২। পার্থ প্রভূত-শরসম্পন্ন হইলেও ঐ ঘটনার পর তিনি সেই বরাহ-ভেদে ব্যক্তপৌরুষ শরগাছটী

उपकार इवासति प्रयुक्तः
स्थितिमप्राप्य मृगे गतः प्रणाशम् ।
कृतशक्तिरधोमुखो गुरुत्वा-
ज्जनितव्रीड इवात्मपौरुषेण ॥३३॥

स समुद्धरता विचिन्त्य तेन
स्वरुचं कीर्त्तिमिवोत्तमां दधानः ।
अनुयुक्त इव स्ववार्त्तमुच्चैः
परिरेभे नु भृशं विलोचनाभ्याम् ॥३४॥

अन्वयः । असति प्रयुक्तः उपकार एव मृगे स्थितिम् अप्राप्य प्रणाशं गतः, तथा कृतशक्तिः गुरुत्वात् अधोमुखः (अतः) आत्मपौरुषेण जनितव्रीड इव (स्थितः)। वाच्य—प्रयुक्तेन उपकारेण इव प्रणाशं गतेन कृतशक्तिना अधोमुखेन (शरेण) जनितव्रीडेन (स्थितम्) ॥ ३३

अन्वयः । उत्तमां स्वरुचं कीर्त्तिम् इव दधानः विचिन्त्य समुद्धरता तेन उच्चैः स्ववार्त्तम् अनुयुक्त इव (स्थितः) सबाणः विलोचनाभ्यां भृशं परिरेभे नु ? वाच्य—दधानं समुद्धरन् सः अनुयुक्तम् इव (स्थितं) तं बाणं परिरेभे ॥ ३४

अथ युग्मेनाह—उपकार इति । असति नीचे प्रयुक्त उपकार इव मृगे स्थितिम् अप्राप्य प्रणाशम् अदर्शनं गत इत्युपमा । तथा कृतशक्तिः कृतपौरुषः गुरुत्वात् लोहभारात् गौरवाच्च अधोमुखो नम्रमुखः । अत एव आत्मपौरुषेण जनितव्रीड इव स्थित इति उत्प्रेक्षा ॥ ३३ ॥

स इति । उत्तमां स्वरुचं स्वकान्तिं कीर्त्तिमिव दधानेति उत्प्रेक्षा । किञ्च विचिन्त्य सर्वथा ग्राह्योऽयमिति विमृश्य समुद्धरता तेन अर्जुनेन उच्चैः स्ववार्त्तं स्वपाटवम् । "वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्" इति यादवः । अनुयुक्तः पृष्ट इव स्थित इत्युत्प्रेक्षा । आदरात् तथा प्रतीयत इत्यर्थः । "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः । स बाणः विलोचनाभ्यां नयनाभ्यां कृत्वा भृशं परिरेभे नु आलिङ्गितः किम् ? इत्युत्प्रेक्षा । तेन अत्यादरेण दृष्ट इत्यर्थः ॥ ३४

গ্রহণ করিবার আশয়ে ধাবিত হইলেন। বস্তুতঃ কৃতকর্ম্মা ব্যক্তি যেমন কৃতজ্ঞদিগের প্রিয় হয়, ভবিষ্যতে যে উপকার করিবে, সে সেরূপ প্রিয় হয় না।

৩৩। অর্জ্জুনের সেই শর অসাধুজনে প্রযুক্ত উপকারের ন্যায় মৃগদেহে স্থান না পাইয়া দৃষ্টির অগোচর হইল এবং পৌরুষ প্রকাশ করিয়া গুরুত্ববশতঃ অধোমুখে অবস্থান করত যেন লজ্জান্বিত হইয়াই রহিল।

तत्र कार्मुकभृतं महाभुजः
पश्यति स्म सहसा वनेचरम्।
सन्निकाशयितुमग्रतः स्थितं
शासनं कुसुमचापविद्विषः ॥३५॥

स प्रयुज्य तनये महीपते-
रात्मजातिसदृशीं किलाननतिम्।
सान्त्वपूर्वमभिनीतिहेतुकं
वक्तुमित्थमुपचक्रमे वचः ॥ ३६ ॥

अन्वयः। तत्र महाभुजः कुसुमचापविद्विषः शासनं सन्निकाशयितुम् अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा पश्यति स्म। वाच्य—महाभुजेन स्थितः, कार्मुकभृत् वनेचरः दृश्यते स्म ॥ ३५

अन्वयः। स महीपतेः तनये आत्मजातिसदृशीं किल आनतिं प्रयुज्य सान्त्वपूर्वम् अभिनीतिहेतुकं वचः इत्थं वक्तुम् उपचक्रमे। वाच्य—तेन + उपचक्रमे ॥ ३६

तत्रेति। तत्र प्रदेशे महाभुजः अर्जुनः। कुसुमचापविद्विषः स्मरारेः शिवस्य शासनं वक्ष्यमाणमादेशं सन्निकाशयितुं प्रकाशयितुं निवेदयितुमिति यावत्। अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा झटिति पश्यति स्म। इतः प्रभृति रथोद्धतावृत्तम्। "रो नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ३५ ॥

स इति। स वनेचरः महीपतेस्तनये राजपुत्रे अर्जुने आत्मजातिसदृशीं किरातजात्यनुरूपां किल। किलेति जातेरलीकतां दर्शयति, यतः परमार्थतः प्रमथ एव सः। आननतिं प्रणतिं प्रयुज्य सान्त्वपूर्वं सामपूर्वकम् "साम सान्त्वमुभे समे" इत्यमरः। अभिनीतिहेतुकं प्रिययुक्तिहेतुकं वचः। इत्थं वक्ष्यमाणप्रकारेण वक्तुमुपचक्रमे उद्युक्तवान् ॥ ३६ ॥

৩৪। অর্জ্জুনের সেই শর কীর্ত্তির ন্যায় স্বীয় উত্তম কান্তি ধারণপূর্ব্বক উচ্চৈঃস্বরে স্বীয় পটুতার বিষয় জিজ্ঞাসিত হইয়াই যেন অবস্থান করিতেছিল। বিশেষ চিন্তার পর সেই শরোদ্ধারেচ্ছু অর্জ্জুন তদীয় নয়নযুগলদ্বারা সেই শরকে যেন অতিমাত্র আলিঙ্গন করিতে লাগিলেন।

৩৫। তথায় মহাভুজ অর্জ্জুন সহসা দেখিলেন—স্মরবিপু হবের আদেশ বাক্য আবেদন করিবার জন্য সম্মুখে এক ধনুর্দ্ধারী বনেচর অবস্থান করিতেছে।

৩৬। সেই বনেচর রাজনন্দন অর্জ্জুনকে কিরাতজাতির সমুচিত প্রণতি করিয়া বিনীতভাবে প্রিয়-যুক্তিপুরঃসর এই বাক্য বলিতে লাগিল।—

शान्तता विनययोगि मानसं
भूरिधाम विमलं तपः श्रुतम्।
प्राह ते नु सदृशो दिवौकसा-
मन्ववायमवदातमाकृतिः ॥३७॥

दीपितस्त्वमनुभावसम्पदा
गौरवेण लघयन् महीभृतः।
राजसे मुनिरपीह कारय-
न्नाधिपत्यमिव शातमन्यवम् ॥ ३८ ॥

अन्वयः। शान्तता ते विनययोगि मानसं प्राह, भूरिधाम तपः विमलं श्रुतं प्राह, दिवौकसां सदृशी आकृतिः अवदातम् अन्ववायं प्राह। वाच्य—शान्ततया प्रोच्यते, भूरिधाम्ना तपसा प्रोच्यते, सदृश्या आकृत्या अवदातः अन्ववायः प्रोच्यते ॥ ३७

अन्वयः। त्वम् मुनिः अपि अनुभावसम्पदा दीपितः, गौरवेण महीभृतः लघयन् इह शातमन्यवम् आधिपत्यं कारयन् इव राजसे। वाच्य—मुनिना दीपितेन लघयता त्वया कारयता राज्यते ॥ ३८

तत्र तावच्चतुर्भिः सान्त्वमाह—शान्ततेति। शान्तता बहिरनौद्धत्यं ते तव विनययोगि अनौद्धत्ययुक्तं मानसं कर्म प्राह नु ब्रूते खलु। तथा भूरि बहु धाम तेजो यस्मिन् तत्तपः कर्त्तृ, विमलं सम्प्रदायशुद्धं श्रुतं प्राह। किञ्च द्यौर्दिवं वा ओको येषां तेषां दिवौकसां देवानाम्। पृषोदरादित्वात् साधुः। "दिवं स्वर्गेऽन्तरिक्षे च" इति विश्वः। सदृशी तुल्या आकृतिर्मूर्त्तिरवदातं शुद्धम् अन्ववायं वंशं प्राह। "वंशोऽन्ववायः सन्तान" इत्यमरः। शान्ततादिभिर्लिङ्गैर्विनयादय अनुमीयन्ते। अन्यथा तदसम्भवादिति भावः ॥ ३७ ॥

दीपित इति। मुनिरपि ऐश्वर्य्यरहितोऽपीत्यर्थः। अनुभावसम्पदा प्रभावातिशयेन दीपितः प्रकाशितः। "अनुभावः प्रभावे च" इत्यमरः। गौरवेण महत्तया महीभृतो राज्ञः लघयन् लघूकुर्वन् त्वम् इह अद्रौ शतमन्योरिदं शातमन्यवमैन्द्रम्। "तस्येदम्" इति अण्प्रत्ययः। "शतमन्युर्दिवस्पतिः" इत्यमरः। अधिपतेः कर्म्म आधिपत्यं त्रैलोक्यरक्षाधिकारम्।

৩৭। তোমার শান্ত ভাব মনের অনৌদ্ধত্য প্রকাশ করিতেছে, বিপুল তেজঃশালী তপস্যা, বিশুদ্ধ শাস্ত্রজ্ঞানের পরিচয় দিতেছে, অপিচ তোমার এই দেবতুল্য আকৃতি বিশুদ্ধ বংশ খ্যাপন করিতেছে।

तापसोऽपि विभुतामुपेयिवा-
नास्पदं त्वमसि सर्वसम्पदाम्।
दृश्यते हि भवतो विना जनै-
रन्वितस्य सचिवैरिव द्युतिः॥ ३९॥
विस्मयः क इव वा जयश्रिया
नैव मुक्तिरपि ते दवीयसी।
ईप्सितस्य न भवेदुपाश्रयः
कस्य निर्जितरजस्तमोगुणः॥ ४०॥

अन्वयः। विभुताम् उपेयिवान् (अतः) तापसोऽपि त्वं सर्वसम्पदाम् आस्पदम् असि। हि भवतो विना अपि सचिवैः अन्वितस्य इव द्युतिः दृश्यते। वाच्य—उपेयुषा तापसेन अपि त्वया आस्पदेन भूयते, द्युतिं पश्यामि॥३९

अन्वयः। जयश्रिया क इव वा विस्मयः? (अतः) मुक्तिः अपि ते दवीयसी न एव। निर्जितरजस्तमोगुणः कस्य ईप्सितस्य उपाश्रयः न भवेत्? वाच्य—मुक्त्या दवीयस्या न भूयते। ‑तमोगुणेन उपाश्रयेण न भूयते॥ ४०

ब्राह्मणादित्वात् ष्यञ्प्रत्ययः। कारयन्निव इन्द्रेणेति शेषः। राजसेतस्यापि उपजीव्य इति प्रतीयसे स्वमहिम्ना इत्यर्थः॥ ३८

तापस इति। विभोर्भावो विभुता तां विभुतां प्रभावम् उपेयिवान् उपगतः। अत एव तापसोऽपि त्वं सर्वसम्पदामास्पदं स्थानमसि। "आस्पदं प्रतिष्ठायाम्" इति निपातः। विभुतामेव समर्थयते—तथाहि भवतस्तव जनैर्विनापि एकाकिनाऽपीत्यर्थः। सचिवैरन्वितस्येव अमात्यादियुक्तस्येव द्युतिस्तेजो दृश्यते, अतः सर्वसम्पदाम् आस्पदत्वं युक्तमित्यर्थः॥ ३९

विस्मय इति। किञ्च जयश्रिया हेतुना प्राप्तयापीति शेषः। क इव वा विस्मयः किमाश्चर्य्यम्? न कश्चिदित्यर्थः। "विस्मयोऽद्भुतमाश्चर्य्यं चित्रम्" इत्यमरः। अतो मुक्तिरपि ते तव दवीयसी दूरतरा दुर्लभा न भवत्येव। "स्थूलदूर" इत्यादिना यणादिपरलोपः पूर्वगुणश्च। तथाहि

৩৮। তুমি মুনি হইয়াও প্রভাবাতিশয়ে দীপিত হইতেছ; তোমার গৌরবে সমুদায় রাজাই লঘু হইয়াছেন; এ পর্ব্বতে তুমি ইন্দ্রের ন্যায় আধিপত্য বিস্তার করিয়াই বিরাজ করিতেছ।

৩৯। তুমি প্রভাবসম্পন্ন, সুতরাং তাপস হইয়াও সর্ব্ব-সম্পদের আস্পদ। যেহেতু তুমি একাকী হইলেও তোমার দ্যুতি সচিবগণ-সমন্বিতের ন্যায় দেখা যাইতেছে।

क्षेपयन्नहिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः ।
हर्त्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥ ४१ ॥

स्मर्य्यते तनुभृतां सनातनं
न्याय्यमाचरणमुत्तमैर्नृभिः ।
ध्वंसते यदि भवादृशस्ततः
कः प्रयातु वद तेन वर्त्मना ॥ ४२ ॥

अन्वयः। त्विषा अहिमतेजसं क्षेपयन् उपपन्नपौरुषः सः त्वं वराहभेदिनम् एनम् अस्मदधिपस्य सायकम् इत्थं हर्त्तुं न अर्हसि। वाच्य—क्षेपयता उपपन्नपौरुषेण तेन त्वया अयं वराहभेदी सायकः न अर्ह्यते ॥ ४१

अन्वयः। उत्तमैः नृभिः तनुभृतां सनातनं न्याय्यम् आचरणं स्मर्य्यते। भवादृशः ततः यदि ध्वंसते तदा तेन वर्त्मना कः प्रयातु वद। वाच्य—उत्तमा नरः स्मरन्ति, भवादृशेन ध्वंस्यते, केन प्रयायताम् उच्यताम् ॥ ४२

निर्जितौ रजस्तमसौ एव गुणौ येन स भवत्सदृशः पुरुषः कस्य ईप्सितस्य वाञ्छितस्य उपाश्रयः आस्पदं न भवेदित्यर्थः ॥ ४०

अत आगमनप्रयोजनम् उपालम्भमुखेनाह—क्षेपयन्निति। त्विषा तेजसा अहिमतेजसम् उष्णतेजसं क्षेपयन् लज्जयन् उपपन्नपौरुषः सम्भावितपराक्रमः स प्रसिद्धः त्वं वराहभेदिनं कृतोपकारमित्यर्थः। एनं त्वत्कारगतम् अस्मदधिपस्य सायकं शरमित्थं साहसेन हर्त्तुं न अर्हसि ॥ ४१

अनर्हत्वमेवाह—स्मर्य्यत इति। उत्तमैर्नृभिः सत्पुरुषैर्मन्वादिभिः तनुभृतां शरीरिणां सनातनं नित्यं न्याय्यं न्यायादनपेतम् आचरणमाचारः स्मर्य्यते कर्त्तव्यतयेति शेषः। न तु अनाचार इत्यर्थः। तथापि अनाचरणे दोषमाह—ध्वंसत इति। भवानिव दृश्यत इति भवादृशः ततः सदाचाराद् ध्वंसते भ्रश्यते यदि तदा तेन वर्त्मना न्यायमार्गेण कः प्रयातु गच्छतु, वद कथय न कोऽपीत्यर्थः। तथाच सन्मार्ग एव शीलं कुर्य्यादिति भावः ॥ ४२

৪০। জয়শ্রী লাভ হইলেই বা বিস্ময়ের বিষয় কি? তোমার পক্ষে মুক্তিওতো দূরবর্ত্তিনী নহে; বস্তুতঃ ভবাদৃশ রজ ও তমোগুণজয়ী পুরুষ কোন্ অভীষ্ট বস্তুর আশ্রয় না হইয়া থাকে?

৪১। তেজে তুমি সূর্য্যকেও লজ্জিত করিতেছ; তোমার পরাক্রমও সম্ভাবিত, এহেন তুমি এরূপ সাহসের সহিত আমাদের প্রভুর এই বরাহভেদী শরটি হরণ করিও না।

आकुमारमुपदेष्टुमिच्छवः
सन्निवृत्तिमपथान्महापदः ।
योगशक्तिजितजन्ममृत्यवः
शीलयन्ति यतयः सुशीलताम् ॥ ४३ ॥
तिष्ठतां तपसि पुण्यमासजन्
सम्पदोऽनुगुणयन् सुखैषिणाम् ।
योगिनां परिणमन् विमुक्तये
केन नास्तु विनयः सतां प्रियः ॥ ४४ ॥

अन्वयः । योगशक्तिजितजन्ममृत्यवः यतयः आकुमारं महापदः अपथात् सन्निवृत्तिम् उपदेष्टुम् इच्छवः ( सन्तः ) सुशीलतां शीलयन्ति । वाच्य—...जन्ममृत्युभिः यतिभिः इच्छुभिः सुशीलता शील्यते ॥ ४३

अन्वयः । तपसि तिष्ठतां पुण्यम् आसजन् सुखैषिणां सम्पदः अनुगुणयन् योगिनां विमुक्तये परिणमन् विनयः केन सतां प्रियः न अस्तु ? । वाच्य—आसजता अनुगुणयता परिणमता विनयेन प्रियेण न भूयताम् ॥ ४४

आकुमारमिति । किञ्च योगशक्त्या आत्मज्ञानमहिम्ना जितो जन्ममृत्यू यैस्ते यतयो योगिनः । आकुमारेभ्यः आकुमारं कुमारादारभ्य इत्यर्थः । "आङ् मर्य्यादाभिविध्योः" इत्यव्ययीभावः । महत्य आपदो यस्मिन् तस्मान्महापदः महानर्थहेतोरित्यर्थः । अपथात् अमार्गात् । "पथो विभाषा" इति निषेधविकल्पात् समासान्तः । "अपथं नपुंसकम्" । सन्निवृत्तिम् अपगमम् उपदेष्टुमिच्छवः सन्तः सुशीलतां सद्वृत्तताम् । "शीलं स्वभावे सद्वृत्ते" इत्यमरः । शीलयन्ति अभ्यस्यन्ति । अतो न त्याज्यं शीलमित्यर्थः ॥ ४३

न केवलं सौशील्यादनर्थनिवृत्तिमात्रं किन्तु अर्थप्राप्तिरपीत्याह—तिष्ठतामिति । तपसि तिष्ठतां तपोनिष्ठानां धर्मार्थिनामित्यर्थः । पुण्यं धर्ममासजन् सम्पादयन् । "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः ।

৪৩। যাঁহারা আত্মজ্ঞান-বৈভবে জনন মরণ জয় করিয়াছেন, তথাবিধ মুনিগণ কুমারকাল হইতেই মহানর্থের হেতুভূত কুমার্গ হইতে নিবৃত্ত থাকিবার উপদেশ দানে ইচ্ছুক হইয়া সুশীলতা অভ্যাস করিয়া থাকেন।

न नूनमत्रभवतः शराकृतिं
सर्वथायमनुयाति सायकः ।
सोऽयमित्यनुपपन्नसंशयः
कारितस्त्वमपथे पदं यया ॥ ४५ ॥
अन्यदीयविशिखे न केवलं
निःस्पृहस्य भवितव्यमाहृते ।

अन्वयः । अयं सायकः अत्रभवतः शराकृतिं सर्वथा अनुयाति, यया त्वम् अनुपपन्नसंशयः ( सन् ) सोऽयमिति अपथे पदं कारितः । वाच्य—अनेन सायकेन शराकृतिः अनुयायते, या त्वां + सशयं पदं कारितवती ॥४५

सुखैषिणां सुखार्थिनां सम्पदः सुखसाधनभूतान् अर्थान् अनुगुणयन् अनुकूलयन् । अर्थकामयोरपि हेतुभूत इत्यर्थः । तथा योगिनां विमुक्तये अपवर्गाय परिणमन् सम्पद्यमानो विनयः सौशील्यं केन हेतुना सतां प्रियो न अस्तु ? सम्भावनायां लोट् । सर्वथा विनय एव चतुर्वर्गसाधनमित्यर्थः । अतस्त्वया न अस्मत्स्वामिशरचौर्य्यं कार्य्यमिति तात्पर्य्यम् ॥ ४४

अथवा किं भवादृशेषु अन्यसम्भावनया, यतो भ्रान्तिरपि सम्भाव्यत इति मृदूक्तिमवलम्ब्याह—नूनमिति । अयम् अस्मदीयः सायकः अत्रभवतः पूज्यस्य इत्यर्थः । "पूज्यस्तत्रभवानत्रभवान्" इति सज्जनः । "इतराभ्योऽपि दृश्यन्ते" इति सार्वविभक्तिकस्तसिल्प्रत्ययः, सुप्सुपेति समासः । शराकृतिं सर्वथा रूपेण रेखादिना च सर्वप्रकारेण अनुयाति अनुसरति अत्यन्तम् अनुकरोतीत्यर्थः । नूनमिति वितर्के । यया आकृत्या करण्या त्वम् अनुपपन्नसंशयोऽत्यन्तसादृश्यात् अनुत्पन्नस्वान्यदीयत्वसन्देहः सन् सोऽयमिति यः स्वकीयः स एव अयमिति भ्रान्त्या त्वया एवेति शेषः । अपथे अमार्गे शरापहरणरूपे पदं कारितः निधापित इत्यर्थः । "हृक्रोरन्यतरस्याम्" इत्यणिकर्त्तुः कर्मता । "ण्यन्ते कर्त्तुश्च कर्मणः" इति तत्रैव अभिहिते कर्मणि क्तः ॥४५

৪৪। বিনয় তপোনিষ্ঠগণের ধর্ম্মসম্পাদক, সুখার্থিগণের সুখসাধন অর্থের অনুকূল, এবং যোগিগণের অপবর্গ-নিমিত্তক। কেননা উহা সাধুগণের প্রিয় হইবে ?

৪৫। এই অস্মদীয় সায়ক সর্ব্বদা ভবদীয় শরাকৃতির অনুকরণ করিতেছে ; ঐ আকৃতির জন্যই আপনি নিঃসংশয় হইয়া 'সেই—এই' ইত্যাকার ভ্রমে শরাপহরণরূপ অপথে পদার্পণ করিয়াছেন।

निघ्नतः परनिबर्हितं मृगं
व्रीड़ितव्यमपि ते सचेतसः ॥ ४६ ॥
सन्ततं निशमयन्त उत्सुका
यैः प्रयान्ति मुदमस्य सूरयः।
कीर्त्तितानि हसितेऽपि तानि यं
व्रीड़यन्ति चरितानि मानिनम् ॥४७॥

अन्वयः। सचेतसः ते अन्यदीयविशिखे आहृते निस्पृहस्य केवलं न ( किन्तु ) परनिबर्हितं मृगं निघ्नतः व्रीड़ितव्यम् अपि। वाच्य—सचेतास्त्वं केवलं निःस्पृहो न भवः निघ्नन् व्रीड़ेथाः अपि ॥ ४६

अन्वयः। सूरयः अस्य यैः सन्ततम् उत्सुकाः ( सन्तः ) निशमयन्तः मुदं प्रयान्ति, तानि चरितानि हसिते अपि कीर्त्तितानि ( सन्ति ) यं मानिनं व्रीड़यन्ति। अधृष्टतागुणः सः अन्यदोषम् इव स्वकं गुणं

पुनरपि स्तेयमेव द्रढ़यन् दोषान्तरम् आपादयति—अन्यदीयेति। सह चेतसा वर्त्तत इति सचेतास्तस्य सचेतसो मनस्विनस्ते अन्यदीयविशिखे विषये यदाहृतमाहरणम्, भावे क्तः, तस्मिन्, अन्यदीयविशिखस्य आहरणे इत्यर्थः। निःस्पृहस्य केवलं निःस्पृहेणैव न भवितव्यं, किन्तु परनिबर्हितं परेण प्रहृतं मृगं निघ्नतः प्रहरतस्ते, निघ्नता त्वया इत्यर्थः। "कृत्यानां कर्त्तरि वा" इति षष्ठी। व्रीड़ितव्यं लज्जितव्यमपि। भावे तव्यप्रत्ययः। सम्प्रति तु त्वया परविद्धं मृगं विद्ध्वापि न व्रीड्यते, प्रत्युत स्तेयमेव क्रियत इत्यहो महत् साहसमित्यर्थः। मृगम् इत्यत्र शेषत्वाविवक्षणात् "जासि-निप्रहणनाटक्राथपिषां हिंसायाम्"मिति षष्ठी न भवति शेषाधिकारात्। निप्रहणेत्यत्र निप्रयोः सङ्घातव्यस्तविपर्य्यस्तानां ग्रहणात् ॥ ४६

अथास्मिन् कृतघ्नताभियोगाय स्वीयोपकारकत्वं वर्णयितुं विकत्थनदोषं तावत् युग्मेन परिहरन् आह—सन्ततमित्यादि। सूरयः विद्वांसः अस्य अस्मत्स्वामिनः सम्बन्धिभिः यैः चरितैः करणभूतैः सन्ततं सततम् उत्सुकाः सोत्कण्ठाः सन्तो निशमयन्तः चरितानि शृण्वन्तः मुदं प्रयान्ति। अत्र चरितानां मुत्प्राप्तौ साधकतमत्वात् करणत्वम्, अर्थात् निशमनकर्मत्वमिति विवेकः। तानि चरितानि हसितेऽपि परिहासेऽपि कीर्त्तितानि परैः उच्चारितानि सन्ति यं मानिनं व्रीड़यन्ति, मानित्वात् व्रीड़ा, न तु चरितदोषात् तेषा-मलङ्काररूपत्वात् इति भावः ॥ ४७ ॥

৪৬। তুমি মনস্বী, কেবল অন্যের শরাপহরণে নিঃস্পৃহ হইয়া রহিলেই তোমার পক্ষে যথেষ্ট হয় না; কিন্তু পরপ্রহৃত মৃগ নিহত করিয়া লজ্জিত হওয়াও তোমার উচিত।

अन्यदोषमिव स स्वकं गुणं
ख्यापयेत् कथमधृष्टताजडः ।
उच्यते स खलु कार्य्यवत्तया
धिग् विभिन्नबुधसेतुमर्थिताम् ॥ ४८ ॥

युग्मकम् ।

दुर्वचं तदथ मा स्म भून्मृगः
त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः
प्रत्यपत्स्यत सितेन पत्रिणा ॥ ४९ ॥

कथं ख्यापयेत्, (तथापि) कार्य्यवत्तया स उच्यते खलु विभिन्नबुधसेतुम् अर्थितां धिक् । वाच्य—सूरिभिः उत्सुकैः निशमयद्भिः मुदं प्रयाप्यते, तैः चरितैः कीर्त्तितैः यः मानी व्रीड्यते । अधृष्टताजडेन तेन अन्यदोष इव स्वकः गुणः ख्याप्येत, कथं नाम ।४७—४८

अन्वयः । वाहिनीपतिः सितेन पत्रिणा एनम् आशु न प्रत्यपत्स्यत यदि, असौ मृगः ओजसा त्वयि यत् अकरिष्यत् तत् दुर्वचम्,—अथ तत् मा स्म भूत् । वाच्य—वाहिनीपतिना एषः प्रत्यपत्स्यत, अमुना मृगेण यत् अकरिष्यत, तेन दुर्वचेन मा स्म भावि ॥ ४९

अन्येति । अधृष्टतया विकत्थनेन शालीनतया जडः स्तब्धः, अविकत्थन इत्यर्थः । सोऽस्मत्स्वामी अन्यदोषं परावरगुणम् इव स्वयं स्वकीयं गुणं कथं ख्यापयेत् प्रकटयेत् ? "आत्मप्रशंसां परगर्हामिव वर्जयेत्" इति स्मरणादिति भावः । तथापि कार्य्यवत्तया कार्य्यार्थितया इत्यर्थः । सः स्वगुणः उच्यते खलु, कार्य्यार्थिनः कुतो गर्व इति भावः । निर्विन्न इव आह—धिगिति । विभिन्नबुधसेतुम् अतिक्रान्तसुजनमर्य्यादाम् अर्थितां याचनां धिक्, निन्दामि इत्यर्थः । यत् अयमपि इत्थं विकत्थयितुं प्रवृत्त इति भावः । "धिङ्-निर्भर्त्सननिन्दयो" रित्यमरः । "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" ... "अभिसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीयाम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" इति द्वितीया ॥ ४८ ॥

৪৭—৪৮। বিদ্বদ্গণ সতত সমুৎসুক হইয়া এই প্রভুর যে সকল চরিত শ্রবণকরত প্রীত হইয়া থাকেন, সেই সকল চরিত পরিহাসব্যাপারেও কীর্ত্তিত হইলে যে মহামনা ব্যক্তিকে লজ্জিত করে, সেই আত্মপ্রশংসাবিরক্ত অস্মৎপ্রভু কিরূপে অন্যদোষবৎ স্বীয় গুণ প্রকাশ করিবেন? যদিও কার্য্যপ্রার্থীরাই নিজগুণ প্রকাশ করিয়া থাকে। (ইহাদের অবশ্য দোষ ঘটে না) বস্তুতঃ সজ্জনমর্য্যাদার অতিক্রমকারী সেই প্রার্থনাকে ধিক্!

को न्विमं हरितुरङ्गमायुध-
स्थेयसीं दधतमङ्गसंहतिम्।
वेगवत्तरमृते चमूपते:
हन्तुमर्हति शरेण दंष्ट्रिणम्॥ ५० ॥

मित्रमिष्टमुपकारि संशये
मेदिनीपतिरयं तथाच ते।
तं विरोध्य भवता निरासि मा
सज्जनैकवसति: कृतज्ञता॥ ५१ ॥

अन्वय:। हरितुरङ्गमायुधस्थेयसीम् अङ्गसंहतिं दधतं वेगवत्तरम् इमं दंष्ट्रिणं चमूपते: ऋते क: नु हन्तुम् अर्हति ?॥ वाच्य—केन अर्ह्यते॥ ५०

अन्वय:। तथाच अयं मेदिनीपति: ते संशये उपकारि इष्टं मित्रं, तं विरोध्य सज्जनैकवसति

सम्प्रति स्वकृतोपकारं दर्शयति—दुर्वचमिति। वाहिनीपति: सेनापति: अस्मत्स्वामी शितेन पत्रिणा शरेण एनं मृगम् आशु न प्रत्यपतिष्यत यदि न अभियुञ्जीत चेत् असौ मृग: ओजसा बलेन त्वयि विषये यत् अकरिष्यत् अनिष्टं कुर्य्यात् तत् दुर्वचं दुर्वाच्यम् अमङ्गलतया वक्तुं न शक्यते। तदनिष्टम् अथानन्तरमपि मा स्म भूदिति सौहार्दकथनं, तदुपेक्षणे स मृग: त्वां हन्यादिति भाव:। "लिङ्निमित्ते लृङ्क्रियातिपत्तौ" इति करोते: पचतेश्च लृङ्॥ ४८॥

ननु मयैव हतो मृगो न तु सेनापतिना तत्राह—क इति। हरितुरङ्गमायुधम् इन्द्रायुधं तद्वत् स्थेयसीं स्थिरतराम् वज्रकठिनामित्यर्थ:। स्थिरशब्दादियसुन्। "प्रियस्थिर—" इत्यादिना स्थादेश:। अङ्गसंहतिम् अवयवसङ्घातं दधतं धारयन्तम्। वेगवत्तरं दुर्वारवेगम् इमं दंष्ट्रिणं वराहं चमूपते: किरातवाहिनीपते: ऋते चमूपतिं विना। "अन्यारात्—" इत्यादिना पञ्चमी। को नु को वा शरेण एकेन इति भाव:। हन्तुम् अर्हति ? न कोऽपि इत्यर्थ:॥ ५०॥

৪৯। (আমাদের) সেনাপতি যদি নিশিত শরদ্বারা ক্ষিপ্রহস্তে এই বরাহকে বিনষ্ট না করিতেন, তাহা হইলে ঐ হিংস্রক তোমার প্রতি বল প্রকাশ করিয়া যাহা করিত, সে অশুভ কথা উচ্চারণ করিতে-পারিতেছি না; ঐ অশুভ যেন ইহার পরেও তোমার কখন না ঘটে!

৫০। এই দুর্ব্বার-বেগ বরাহ ইন্দ্রায়ুধবৎ সুদৃঢ় আকৃতি ধারণ করিতেছিল; একমাত্র কিরাতপতি ব্যতীত কে ইহাকে একটিমাত্র বাণে বিনাশ করিতে সমর্থ হয়?

लभ्यमेकसुकृतेन दुर्लभाः
रक्षितारमसुरक्ष्य[क्ष]भूतयः ।
स्वन्तमन्तविरसा जिगीषतां
मित्रलाभमनु लाभसम्पदः ॥ ५२ ॥

कृतज्ञता भवता मा निरासि। वाच्य—अनेन मेदिनीपतिना उपकारिणा इष्टेन मित्रेण (भूयते॥) भवान् × वसतिं कृतज्ञतां निरास्यत् ॥ ५१

अन्वयः। जिगीषतां दुर्लभाः असुरक्ष्यभूतयः अन्तविरसाः लाभसम्पदः एकसुकृतेन लभ्यं रक्षितारं स्वन्तं मित्रलाभम् अनु। वाच्य—दुर्लभाभिः असुरक्ष्यभूतिभिः अन्तविरसाभिः लाभसम्पद्भिः भूयते ॥ ५२

अस्तु स एव मृगस्य हन्ता, ततः किम्? अत आह—मित्रमिति। तथाच तस्य एव मृगहन्तृत्वे सति इत्यर्थः। अयं मेदिनीपतिः किरातभूपतिः, ते तव संशये प्राणसङ्कटे उपकारि उपकारकारकम् इष्टं मित्रम्। ततोऽपि किम् तत्राह—तमिति। तं मित्रभूतं विरोध्य सज्जनैकवसतिः भवादृशसुजनमात्राधारा कृतज्ञता उपकारवेदित्वं मा निरासि न निराक्रियतां भवता। अन्यथा जगति कृतज्ञता अस्तमियात्, कृतघ्नता च ते भवेदित्यर्थः। अस्यतेः कर्म्मण्याशिषि माङि लुङ् ॥ ५२ ॥

ननु सर्वस्य अर्थभूतत्वात् स एवास्तु, किं मित्रेण, इत्याशङ्क्य मित्रस्य सर्वाधिक्यं युग्मेनाह—लभ्यमिति। जिगीषतां जेतुमिच्छताम्। जयतेः सन्नन्तात् शतृप्रत्ययः। दुर्लभाः कृच्छ्रेण अपि लब्धुमशक्यास्तथापि असुरक्ष्य[क्ष]भूतयः रक्षितुम् अशक्यमहिमानः। तथापि नित्यं रक्षणादिक्लेशावहाश्च इति भावः। अन्तविरसाः गत्वर्य्य इत्यर्थः। लभ्यन्ते इति लाभाः अर्थाः तेषां सम्पदः। एकसुकृतेन एकोपकारेण लभ्यं सुलभं न तु दुर्लभं रक्षितारं न तु रक्ष्यं स्वन्तं शुभावसानं न त्वन्तविरसं मित्रलाभम् अनु मित्रलाभात् हीनाः निकृष्टा इत्यर्थः। 'हीने' इत्यनोः कर्मप्रवचनीयसंज्ञा, तद्योगे द्वितीया। अत्र उपमेयस्य मित्रलाभस्य लाभान्तरं प्रति आधिक्याभिधानाद्व्यतिरेकालङ्कारः ॥ ५२ ॥

৫১। বরাহ-বধ করিয়া কিরাতভূপতি তোমার প্রাণসঙ্কটে পরম উপকারী মিত্র হইয়াছেন। তুমি সেই মিত্রস্বরূপ ভূপতির সহিত বিরোধ করিয়া সজ্জনৈকাধার কৃতজ্ঞতাকে নষ্ট করিও না।

৫২। লাভ-সম্পত্তিসকল অতিকষ্টেও লাভকরা যায় না, করিলেও নিত্য রক্ষণাদি ব্যাপারে তাহা ক্লেশাবহ ও পরিণামবিরস-নশ্বর। সুতরাং একোপকার-লভ্য, রক্ষাকর, পরিণামশুভ মিত্রলাভ হইতে উহা নিকৃষ্ট।

चञ्चलं वसु नितान्तमुन्नताः
मेदिनीमपि हरन्त्यरातयः ।
भूधरस्थिरमुपेयमागतं
मावमंस्त सुहृदं महीपतिम् ॥ ५३ ॥
जेतुमेव भवता तपस्यते
नायुधानि दधते मुमुक्षवः ।
प्राप्स्यते च सकलं महीभृता
सङ्गतेन तपसः फलं त्वया ॥ ५४ ॥

अन्वयः । वसु नितान्तं चञ्चलं, मेदिनीम् अपि उन्नता अरातयः हरन्ति । भूधरस्थिरम् उपेयम् आगतं महीपतिं सुहृदं मावमंस्त । वाच्य—वसुना नितान्तेन चञ्चलेन भूयते, उन्नतैः अरातिभिः मेदिनी अपि ह्रियते, भवता भूधरस्थिरः उपेयः आगतः, महीपतिः सुहृत् मावमानि ॥ ५३

अन्वयः । भवता जेतुम् एव तपस्यते, मुमुक्षवः आयुधानि न दधते, महीभृता सङ्गतेन त्वया सकलञ्च तपसः फलं प्राप्स्यते । वाच्य—भवान् तपस्यति, मुमुक्षुभिः आयुधानि न धीयन्ते, सङ्गतः त्वं फलं प्राप्स्यसि ॥ ५४

चञ्चलमिति । किं च वसु धनं नितान्तं चञ्चलं, मेदिनीमपि उन्नताः प्रबलाः अरातयो हरन्ति । मित्रं तु न तथा इत्याह—भूधर इति । भूधरवत् स्थिरमुपेयम् अन्विष्य गन्तव्यम् आगतं स्वतःप्राप्तम् अपि महीपतिं सर्वधुरीणमित्यर्थः । सुहृदं मित्रं मावमंस्त मावज्ञासीत् । भवानिति शेषः । अन्यश्लोकगतो वा भवच्छब्दो विभक्तिविपरिणामेण अत्र द्रष्टव्यः । अन्यथा मध्यमपुरुषः स्यात् । मन्यतेः कर्त्तरि माङि लुङ् । अलङ्कारस्तु व्यतिरेक एव भूधरस्थिरमिति उपमासङ्गतिसङ्करः ॥ ५३ ॥

ननु मुमुक्षोः किं मित्रसंग्रहेण इत्यत्राह—जेतुमिति । भवता जेतुं जयार्थम् एव तपस्यते तपश्चर्य्यते । "कर्मणो रोमन्थ—" इत्यादिना चरणे क्यङ्, ततो भावे लट् । कुतः ? मुमुक्षवः मोक्षार्थिनः आयुधानि न दधते न धारयन्ति । अतः मित्रसंग्रहः कार्य्य इति भावः । तथापि किं भवत्-स्वामिसख्येन तत्राह—प्राप्स्यत इति । महीभृता सह सङ्गतेन त्वया सकलञ्च तपसः फलं प्राप्स्यते । अतः ते सखा अस्मत्स्वामी युक्त इत्यर्थः ॥५४

৫৩। ধন নিতান্ত চঞ্চল ; প্রবল অরাতিগণ মেদিনীকেও হরণ করে। (অতএব) ভূধরবৎ স্থির, স্বতঃপ্রাপ্ত ভূপতিকে সুহৃৎ প্রাপ্ত হইয়া অবমাননা করিও না।

वाजिभूमिरिभराजकानन
सन्ति रत्ननिचयाश्च भूरिशः ।
काञ्चनेन किमिवास्य पत्रिणा
केवलं न सहते विलङ्घनम् ॥ ५५ ॥

सावलेपमुपलिप्सिते परै-
रभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान् समीहते
जीवितं किमु धनं धनायितुम् ॥ ५६ ॥

अन्वयः । (तस्य भूपतेः) वाजिभूमिः इभराजकाननं भूरिशः रत्ननिचयाश्च सन्ति । अस्य काञ्चनेन पत्रिणा किम् इव ? परन्तु केवलं विलङ्घनं न सहते । वाच्य—वाजिभूम्या इभराजकाननेन रत्ननिचयैश्च भूयते, विलङ्घनं न सह्यते ॥ ५५

अन्वयः । महान् (अयं) रजसि परैः सावलेपम् उपलिप्सिते (सति) विकृतिम् अभ्युपैति, अर्थितः जीवितं धनायितुं न उत्सहते, धनं किमु ? वाच्य--महता विकृतिः अभ्युपेयते, अर्थितेन न उत्सह्यते ॥ ५६

ननु अकिञ्चनः कुत्रोपयुज्यते तत्राह—वाजीति । तस्य भूपतेः वाजिभूमिः अश्वाकरः इभराजानां काननं गजोत्पत्तिस्थानं भूरिशो रत्ननिचयाश्च सन्तीति शेषः । ननु ईदृगाढ्यः किम् एकस्मै काञ्चनपत्रकाण्डाय कलहायते ? तत्राह—अस्य काञ्चनेन सौवर्णेन पत्रिणा शरेण किमिव ? न किञ्चित् प्रयोजनम् अस्तीत्यर्थः । परन्तु केवलं विलङ्घनं व्यतिक्रमं न सहते । नायं शरलुब्धः, किन्तु अधिक्षेपासहिष्णुरित्यर्थः । अत्र प्रथमार्द्धे समृद्धिमद्वस्तुवर्णनात् उदात्तालङ्कारः ॥ ५५ ॥

ननु ईदृग्लुब्धः किम् उपकर्त्ता तत्राह—सावलेपमिति । महानयं रजसि अपि धूलौ अपि परैः सावलेपं सगर्वम् उपलिप्सिते उपलब्धुमिष्टे जिघृक्षिते सति विकृतिमभ्युपैति, प्रकुप्यति इत्यर्थः । अर्थितो याचितस्तु जीवितं धनायितुं धनीकर्त्तुम् । क्यजन्तात्तुमुन् । न समीहते न उत्सहते,

৫৪। তুমি জয়ের নিমিত্তই তপস্যা করিতেছ; কারণ মুমুক্ষুগণ কখনও আয়ুধ ধারণ করেন না। তুমি কিরাতভূপতির সহিত মিলিত হইলে সমগ্র তপঃফলই প্রাপ্ত হইবে।

৫৫। সেই ভূপতির অশ্বোৎপত্তিস্থান, গজোৎপত্তিস্থান এবং প্রভূত রত্নরাশি রহিয়াছে। একটা স্বর্ণময় শরদ্বারা তাঁহার কোন্ প্রয়োজন সাধিত হইবে? তবে কথা এই যে, তিনি কেবল পরকৃত অধিক্ষেপই সহিতে পারেন না।

तत्तदीयविशिखातिसर्जनात्
अस्तु वां गुरु यदृच्छयागतम्।
राघवप्लवगराजयोरिव
प्रेम युक्तमितरेतराश्रयम्॥ ५७॥
नाभियोक्तुमनृतं त्वमिष्यसे
कस्तपस्विविशिखेषु चादरः।
सन्ति भूभृति शरा हि नः परे
ये पराक्रमवसूनि वज्रिणः॥५८॥

अन्वयः। तत् तदीयविशिखातिसर्जनात् वां राघवप्लवगराजयोः इव यदृच्छया आगतं गुरु युक्तम् इतरेतराश्रयं प्रेम अस्तु। वाच्य—आगतेन गुरुणा युक्तेन इतरेतराश्रयेण प्रेम्णा भूयताम्॥ ५७

अन्वयः। त्वम् अनृतम् अभियोक्तुं न इष्यसे, तपस्विविशिखेषु कः आदरः? हि नः भूभृति परे अपि शराः सन्ति ये वज्रिणः पराक्रमवसूनि। वाच्य—त्वाम् अभियोक्तुं न इच्छामः, केन आदरेण (भूयते), परैः शरैः भूयते, यैः पराक्रमवसुभिः (भूयते)॥ ५८

जीवितमपि आत्मनो न इच्छति, किन्तु अर्थितः प्रयच्छति इत्यर्थः। तर्हि धनं किम्? धनमात्मन एषितुं धनायितुमिति विग्रहः। अत्र इच्छामात्रमर्थः, अन्यथा धनमित्यनेन पौनरुक्त्यं स्यात्। सुप आत्मनः क्यच्। "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु" इति निपातनादाकारः॥ ५६

उक्तमर्थं निगमयति—तदिति। तत् तस्मात् तदीयविशिखस्य अतिसर्जनात् प्रत्यर्पणात् वां युवयोः। "षष्ठीचतुर्थीद्वितीयास्थयोर्वां नावौ" इति वामादेशः। राघवप्लवगराजयोः रामसुग्रीवयोरिव यदृच्छया दैवात् आगतं गुरु महत् युक्तमनुरूपमितरेतराश्रयम् अन्योन्यविषयं प्रेम सख्यमस्तु॥ ५७

ननु शरलोभात् मिथ्याभियुज्यसे इत्याह—नेति। त्वमनृतं मिथ्या अभियोक्तुम् अभ्याख्यातुम्। ब्रूञोऽर्थग्रहणाद् द्विकर्मकता। "मिथ्याभियोगोऽभ्याख्यानम्" इत्यमरः। अस्माभिरिति शेषः। न इष्यसे न इष्टोऽसि, कुतः? तपस्वी मुनिः शोच्यश्च। "मुनिशोच्यौ तपस्विनौ" इति शाश्वतः।

৫৬। অন্যে যদি গর্ব্বের সহিত লইতে ইচ্ছা করে, তবে সেই মহাত্মা সামান্য ধূলিকণাতেও বিকৃত হইয়া থাকেন; কিন্তু যদি কেহ তাঁহার নিকট প্রার্থনা করে, তবে তিনি নিজের জীবনও দান করিতে পারেন; ধনের আর কথা কি?

৫৭। অতএব তদীয় বাণ প্রত্যর্পণ কর, তাহাতে রাম ও সুগ্রীবের ন্যায় তোমাদের দৈবাগত পরস্পরাশ্রয় অনুরূপ মহাসখ্য প্রতিভাত হউক।

मार्गणैरथ तव प्रयोजनं
नाथसे किमु पतिं न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं
किं न यच्छति विजित्य मेदिनीम् ॥ ५९ ॥

तेन सूरिरुपकारिताधनः
कर्त्तुमिच्छति न याचितं वृथा ।
सीदतामनुभवन्निवार्थिनां
वेद यत् प्रणयभङ्गवेदनाम् ॥ ६० ॥

अन्वयः । अथ तव मार्गणैः प्रयोजनं (तर्हि) भूभृतः पतिं किम् न नाथसे सः त्वद्विधं सुहृदम् अर्थिनम् एत्य मेदिनीं विजित्य न यच्छति किम् ? वाच्य—भूभृतः पतिः न नाथ्यते । तेन दीयते ॥ ५९

अन्वयः । तेन सूरिः (अतः) उपकारिताधनः (सः) याचितं वृथा कर्त्तुं न इच्छति (कुतः) यत् सीदताम् अर्थिनां प्रणयभङ्गवेदना स्वयम् अनुभवन् इव वेद । वाच्य—सूरिणा उपकारिताधनेन तेन न इष्यते । स्वयम् अनुभवता इव विद्यते ॥ ६०

तस्य विशिखेषु कः आदरः का आस्था न काचिदित्यर्थः । हि यस्मात् नोऽस्माकं भूभृति शैले परिऽन्येऽपि शराः सन्ति, ये शराः वज्रिणः शक्रस्य पराक्रमवसूनि पराक्रमधनानि, शौर्य्यसर्वस्वभूता इत्यर्थः । वज्रिग्रहणात् वज्रादपि अतिरिच्यन्त इति सूच्यते । अत्र शरेषु पराक्रमसाधनेषु पराक्रमरूपेण वस्तु व्यज्यते ॥ ५८

अथ ते शरापेक्षा चेत् तर्हि तथा उच्यतामित्याह—मार्गणैरिति । अथ उत तव मार्गणैः शरैः प्रयोजनं कार्य्यं तर्हि भूभृतो गिरेः पतिं प्रभुं किमु न नाथसे ? किमिति न याचसे । "नाधृ नाथृ याच्ञोपतापैश्वर्य्याशीःषु" इति धातोर्लट् । न च याच्ञाभङ्गशङ्का कार्य्येत्याह—त्वदिति । सोऽस्मत्स्वामी तवेव विधा प्रकारो यस्य तं त्वद्विधं तादृशं महानुभावमित्यर्थः । तथापि सुहृदं मित्रभूतमर्थिनम् एत्य लब्ध्वा मेदिनीं विजित्य न यच्छति ? न ददाति किं ? किन्तु दास्यति एव । किं पुनः शरानिति भावः ॥ ५९

৫৮। তোমাকে আমরা মিথ্যা অভিযুক্ত করিতে ইচ্ছা করি না, কেননা, তপস্বীর শরে (আমাদের) আস্থা কি ? দেখ, আমাদের শৈলে এরূপ আরও বহু শর আছে, যাহারা ইন্দ্রের শৌর্য্যসর্ব্বস্বস্বরূপ।

৫৯। আচ্ছা, তোমার যদি শরে প্রয়োজন থাকে, তবে শৈলপতির নিকট প্রার্থনা কর না কেন ? তিনি তোমার ন্যায় সুহৃৎকে অর্থিরূপে পাইয়া মেদিনী জয় করিয়াও কি দান করেন না ?

शक्तिरर्थपतिषु स्वयङ्ग्रहं
प्रेम कारयति वा निरत्ययम्।
कारणद्वयमिदं निरस्यतः
प्रार्थनाधिकबले विपत्फला ॥ ६१ ॥

अस्त्रवेदमधिगम्य तत्त्वतः
कस्य चेह भुजवीर्य्यशालिनः।
जामदग्न्यमपहाय गीयते
तापसेषु चरितार्थमायुधम् ॥ ६२ ॥

अन्वयः। अर्थपतिषु शक्तिः स्वयंग्रहं कारयति, वा निरत्ययं प्रेम स्वयङ्ग्रहं कारयति, इदं कारणद्वयं निरस्यतः (पुंसः) अधिकबले प्रार्थना विपत्फला। वाच्य—शक्त्या स्वयङ्ग्रहः कार्य्यते, निरत्ययेन प्रेम्णा कार्य्यते ॥ ६१

यदुक्तम् "त्वद्विधम्" इत्यादि तत्र उपपत्तिमाह—तेनेति। तेन कारणेन सूरिर्विद्वान् अत एव उपकारितावनः उपकारकत्वमात्रधनः स किरातभूपतिः। याचितं याच्ञां वृथा व्यर्थं कर्त्तुं न इच्छति। कुतः? यद्‌येन कारणेन सोढ़तां क्लिश्यतामर्थिनां प्रणयभङ्गवेदनां याच्ञाभङ्गदुःखं स्वयमनुभवन् इव वेद वेत्ति, अतो न वैफल्यशङ्का कार्य्या इत्यर्थः ॥ ६०

ननु स्वयंग्राहिणः किं याच्ञादैन्यं तत्राह—शक्तिरिति। अर्थपतिषु विषये शक्तिः सामर्थ्यं स्वयंग्रहं स्वाम्यनुज्ञां विना ग्रहणं कारयति। यद्वा निरत्ययम् अपराधेऽपि अविकारि प्रेम कर्त्तृ स्वयंग्रहं कारयति, प्रबलः प्रियो वा परस्य धनं स्वयं गृह्णातीत्यर्थः। अन्यथा दोषमाह। इदं पूर्व्वोक्तं कारणद्वयं निरस्यतस्त्यजतः पुंस इति शेषः। अधिकबले प्रबले विषये प्रार्थना तद्धनजिघृक्षा विपत्फला अनर्थफलिका अशक्तस्य अप्रियस्य सतः प्रबलधनग्रहणाशा फणिशिरोमणिग्रहणसाहसवत् अनर्थाय कल्पत इत्यर्थः ॥ ६१

৬০। সেই কারণে সেই বিজ্ঞ পরোপকারী কিরাত-ভূপতি প্রার্থনা ব্যর্থ করিতে ইচ্ছা করেন না; যেহেতু তিনি ক্লেশভাগী প্রার্থিগণের প্রণয়ভঙ্গজনিত দুঃখ স্বয়ং অনুভব করিয়া অবগত আছেন।

৬১। সামর্থ্য থাকিলে স্বয়ং গ্রহণ করা যায়, আর যদি নিরবচ্ছিন্ন প্রেম থাকে, তাহাতেও স্বয়ং গ্রহণ করা যাইতে পারে। উল্লিখিত কারণদ্বয় পরিত্যাগপূর্ব্বক প্রবলের ধনগ্রহণে ইচ্ছা করিলে পুরুষের বিপদ্ ঘটিয়া থাকে।

अभ्यघानि मुनिचापलात् त्वया
यन्मृगः क्षितिपतेः परिग्रहः।
अक्षमिष्ट तदयं प्रमाद्यतां
संवृणोति खलु दोषमज्ञता ॥ ६३ ॥

अन्वयः। इह तापसेषु जामदग्न्यम् अपहाय अस्त्रवेद तत्त्वतः अधिगम्य भुजवीर्य्यशालिनः कस्य वा आयुधं चरितार्थं गीयते? वाच्य—गायन्ति ॥ ६२

अन्वयः। त्वया मुनिचापल्यात् क्षितिपतेः परिग्रहः मृगः यत् अभ्यघानि, तत् (हननम्) अयम् अक्षमिष्ट एव (तथाहि) प्रमाद्यतां दोषम् अज्ञता संवृणोति। वाच्य—त्वं मृगम् अभ्यवधीः, तत् (हननम्) अनेन अक्षमि, अज्ञतया दोषः संव्रियते ॥ ६३

अथ शस्त्रार्थसम्पत्त्या शक्तत्वाभिमानस्तत्राह—अस्त्रवेदमिति। इह जगति तापसेषु तपस्विनां मध्ये। "यतश्च निर्धारणम्" इति सप्तमी। जमदग्नेरपत्यं पुमान् जामदग्न्यः। "गर्गादिभ्यो यञ्" तम् अपहाय परशुरामं विना इत्यर्थः। अस्त्रवेदं तत्त्वतोऽधिगम्य भुजवीर्य्येण शालते इति भुजवीर्य्यशालिनः। उभयसम्पन्नस्य इत्यर्थः। शालनक्रियापेक्षया समानकर्त्तृकत्वात् क्त्वानिर्देशः। कस्य वा आयुधं, चरितः प्राप्तः अर्थो येन तच्चरितार्थं सार्थकं गीयते? न कस्यापीत्यर्थः। अतस्तत्रापि तापसत्वात् अकिञ्चित्करस्य तेन सह सख्यमेव मुख्यमिति भावः ॥ ६२

ननु युष्मन्मृगवधशरहरणाभ्यां द्रोहिणो मम तेन कथं सख्यं स्यात्? इत्याशङ्क्य सत्यं तथापि तावत् मृगवधापराधः क्षमिष्यत इत्याह—अभ्यघानीति। त्वया मुनिचापलाद् ब्राह्मणचापल्यादित्यर्थः। क्षितिपतेरस्मत्स्वामिनः परिगृह्यत इति परिग्रहः तेन स्वीकृत इत्यर्थः। "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः। यत् मृगः अभ्यघानि अभिहत इति। हन्तेः कर्म्मणि लुङ्। यद्धननमयमस्मत्स्वामी अक्षमिष्ट सोढ़वान् एव। तथाहि प्रमाद्यताम् अविमृश्यकारिणामित्यर्थः। दोषमपराधम् अज्ञता अज्ञानिता संवृणोति आच्छादयति। न अज्ञस्य अपराधो गण्यत इत्यर्थः ॥ ६३

৬২। এ জগতে তাপসগণের মধ্যে একমাত্র পরশুরাম ব্যতীত সম্যক্ অস্ত্রবেদ-বেদী ভুজবীর্য্যশালী অপর কাহার বা অস্ত্র চরিতার্থ বলিয়া গীত হইয়া থাকে?

৬৩। তুমি ব্রাহ্মণোচিত চাপলবশে আমাদের প্রভুর পরিগৃহীত মৃগ হনন করিয়াছ, এই মৃগ-হনন অস্মৎপ্রভু ক্ষমা করিয়াছেন। (বস্তুতঃ) অবিমৃশ্যকারীদিগের দোষ অজ্ঞতাই আবৃত করিয়া রাখে।

जन्मवेष-[श्र]तपसां विरोधिनीं
मा कृथाः पुनरमूमपक्रियाम्।
आपदेत्युभयलोकदूषणी
वर्त्तमानमपथे हि दुर्मतिम् ॥६४॥

यष्टुमिच्छसि पितॄन् न साम्प्रतं
संवृतोऽर्चिचयिषुर्दिवौकसः।
दातुमेव पदवीमपि क्षमः
किं मृगेऽङ्ग विशिखं न्यवीविशः ॥ ६५ ॥

अन्वयः। जन्मवेष-[श्र]तपसां विरोधिनीम् अमूम् अपक्रियां पुनः मा कृथाः, हि अपथे वर्त्तमानं दुर्मतिम् उभयलोकदूषणी आपत् एति। वाच्य:—विरोधिनी अमी अपक्रिया मा कारि। वर्त्तमानः दुर्मतिः उभयलोकदूषण्या आपदा ईयते ॥ ६४

अन्वयः। साम्प्रतं पितॄन् यष्टुं न इच्छसि (यतः) संवृतः। (तथा) दिवौकसः अर्चिचयिषुः (न असि) अङ्ग! दातुम् एव क्षमः (सन्) अपि किं मृगे विशिखं न्यवीविशः। वाच्य—न इष्यन्ते, संवृतेन (भूयते) अर्चिचयिषुणा (भूयते) त्वया न विशिखः न्यवेशि ॥ ६५

अथ सुहृद्भावेन हितमुपदिशति—जन्मेति। जन्म सत्कुले प्रसूतिः, वेषो जटावल्कलादिः, तपो नियमः, तेषां विरोधिनीं विरुद्धाममूम् एवंविधाम् अपक्रियामपकारं पुनः इतःपरमित्यर्थः। मा कृथाः मा कुरु। करोतेः कर्त्तरि माङि लुङ्। "वयोबुद्ध्यर्थवाग्वेषश्रुताभिनयकर्मणाम्। आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा॥" इति स्मरणात्। उक्तवैपरीत्ये दोषमाह—आपदिति। हि यस्मात् अपथे वर्त्तमानं दुर्मतिं पुरुषमिति शेषः। उभौ लोकौ दूषयति हन्तीति उभयलोकदूषणी। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। आपत् एति प्राप्नोति। समासविषये उभशब्दस्थाने उभयशब्दप्रयोग एव साधुः। यदाह कैयटः—"उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो मा भूत्। उभशब्दस्यैव रूपं यथा स्यादित्युभयतेत्यादि भवति" इति ॥ ६४

यदुक्तम् "अभ्यधानि" इति तदेव स्फुटयति—यष्टुमिति। साम्प्रतं सम्प्रति। "सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः। पितॄन् कव्यवाडादीन् यष्टुम् अर्चयितुं न इच्छसि, यतः संवृतः एकान्ते स्थितः। तथा दिवौकसः

৬৪। এই জন্ম, বেশ ও তপস্যার বিরোধী অপকার তুমি আর করিও না। কেননা, বিপথগামী দুর্ম্মতি পুরুষকে উভয়লোকনাশিনী আপদ্ আসিয়া আক্রমণ করিয়া থাকে।

सज्जनोऽसि विजहीहि चापलं
सर्वदा क इव वा सहिष्यते ।
वारिधीनिव युगान्तवायवः
क्षोभयन्त्यनिभृता गुरूनपि ॥६६॥
अस्त्रवेदविदयं महीपतिः
पर्वतीय इति मावजीगणः ।

अन्वयः । (त्वं) सज्जनः असि (अतः) चापलं विजहीहि, सर्वदा क इव वा सहिष्यते । अनिभृताः गुरून् अपि युगान्तवायवः वारिधीन् इव क्षोभयन्ति । वाच्य—सज्जनेन भूयते, चापलं हीयतां, केन सहिष्यते । अनिभृतैः गुरवः अपि युगान्तवायुभिः वारिधय इव क्षोभ्यन्ते ॥ ६६

देवान् अर्चिचयिषुरपि पर्चयितुमिच्छुरपि नासि । अतो न पित्रर्थं इयं हिंसा नापि देवतार्था तदाराधने तद्विहितत्वादिति भावः । अथ "सर्वत आत्मानं गोपायीत" इति श्रुतेः आत्मरक्षार्थमिति चेत् न इत्याह—दातु-मिति । हे अङ्ग पदवीं मार्गं दातुमेव न तु हन्तुं मुनित्वादिति भावः । क्षमोऽपि योग्यः सन्नपि किं किमर्थं मृगे शिलीमुखं न्यवीविशः निवेशितवान् । विशतेर्ण्यन्ताल्लुङ् । अभिधावतो मृगान् अपसरणेनैव आत्मरक्षणे कर्त्तव्ये यदवधीः तत् चापलमेव । "मा हिंस्यात् सर्वाभूतानि" इति श्रुतिनिषेधा-दिति भावः ॥ ६५

किं बहुना परमार्थः श्रूयतामित्याह—सज्जन इति । सज्जनोऽसि अत-एव चापलं चपलस्य कर्म विजहीहि त्यज । जहातेर्लोट् । "आ च हौ" इतीकारः । सर्वदा क इव वा को वा सहिष्यते । इवशब्दो वाक्यालङ्कारे । वाशब्दोऽवधारणे । असहने कारणमाह—वारिधीनिति । अनिभृताः, चपलाः पुनरकार्य्यकारिणो गुरून् धैर्य्ययुक्तानपि युगान्तवायवः प्रलयपवनाः, गुरून् विशालानपि वारिधीनिव समुद्रानिव क्षोभयन्ति । उपमानुप्राणितो-ऽयमर्थान्तरन्यासः ॥ ६६

৬৫। সম্প্রতি তুমি পিতৃযজ্ঞ করিতে অভিলাষী নহ ; যেহেতু, নির্জ্জনে তোমার অবস্থিতি ; অপিচ তুমি যে দেবার্চ্চনা করিতে সমুৎসুক, তাহাও নহে। সুতরাং মার্গদানে সমর্থ হইয়াও কিজন্য তুমি মৃগদেহে বাণ নিক্ষেপ করিলে ?

৬৬। তুমি সজ্জন, অতএব চাপল্য পরিত্যাগ কর। সর্ব্বদা কেই বা সহ্য করিবে। দেখ, প্রলয়পবন যেমন বিশাল বারিধিকেও ক্ষুভিত করে, তেমনি অকার্য্যকারীরা ধৈর্য্যশালীদিগেরও ক্ষোভ জন্মাইয়া থাকে।

गोपितुं भुवमिमां मरुत्वता
शैलवासमनुनीय लम्भितः ॥ ६७ ॥
तत्तितिक्षितमिदं मया मुने-
रित्यवोचत वचश्चमूपतिः।
बाणमत्रभवते निजं दिशन्
आप्नुहि त्वमपि सर्वसम्पदः ॥६८॥

अन्वयः। अयं महीपतिः अस्त्रवेदवित् (अतः) पर्वतीय इति मावज्ञीगणः मरुत्वता इमां भुवं गोपितुम् अनुनीय शैलवास लम्भितः। वाच्य—अनेन महीपतिना अस्त्रवेदविदा (भूयते) मरुत्वान् शैलवासं लम्भितवान् ॥ ६७

अन्वयः। तत् मुनेः इदं मया तितिक्षितम् इति चमूपतिः अवोचत। अत्रभवते निजं बाणं दिशन् त्वमपि सर्वसम्पदः आप्नुहि। वाच्य—इदम अहं तितिक्षितवान् इति चमूपतिना अवाचि। त्वया दिशता सर्वसम्पदः आप्यन्ताम् ॥ ६८

नन्वयं किरातः क्षुभितः किं करिष्यति? तत्राह—अस्त्रेति। अयं महीपतिः अस्त्रवेदवित् निग्रहानुग्रहसमर्थ इति भावः। अतः पर्वते भवः पर्वतीयः। "पर्वताच्च" इति छप्रत्ययः। इति हेतोर्मावज्ञीगणः वनेचरबुद्ध्या मावज्ञासीरित्यर्थः। गणयतेर्माङि लुङ्। "ई च गणः" इतीकारः। ननु ईदृशश्चेत् किमित्ययं वने वसति? तत्राह—गोपितुमिति। मरुत्वता इन्द्रेण इमां भुवं गोपितुं रक्षितुम्। "आयादय आर्द्धधातुके वा" इति विकल्पात् "गुपुधूप" इत्यादिना न आयप्रत्ययः। अनुनीय प्रार्थ्य शैलवासं लम्भितः प्रापितः। "ण्यन्ते कर्त्तुश्च कर्मणः" इति वचनाण्णिकर्त्तृकर्मणि क्तः। "गतिबुद्धि" इत्यादिना अणिकर्त्तुः कर्मत्वम् ॥ ६७

उपसंहरति—तदिति। तत् तस्मात् मुनिचापलात् मुनेः सम्बन्धि इदं मृगवधरूपं मया तितिक्षितं सोढमिति वचः चमूपतिः अवोचत। शर-द्रोहस्य प्रत्यर्पणमेव प्रतीकार इत्याह—अत्रभवते पूज्याय स्वामिने। अत्र-भवान् व्याख्यातः। निजं बाणं तदीयमेव शरं दिशन् प्रत्यर्पयन् त्वमपि सर्व-सम्पदः आप्नुहि सख्येन इति भावः ॥ ६८

৬৭। এই কিরাত-মহীপতি অস্ত্রবেদে পণ্ডিত; ইঁহাকে পার্ব্বত্যবোধে অবজ্ঞা করিও না। ইন্দ্র এই পৃথিবী রক্ষার জন্য অনুনয় করিয়া ইঁহাকে পর্ব্বতে বাস করাইয়াছেন।

৬৮। 'আমি তোমার এই চাপল্য সহ্য করিলাম।' চমূপতি এই বাক্য বলিয়া দিয়াছেন। যা হউক, তুমিও পূজ্য প্রভুকে তদীয় শর প্রত্যর্পণ করিয়া সর্ব্বসম্পৎ প্রাপ্ত হও।

आत्मनीनमुपतिष्ठते गुणाः
सम्भवन्ति विरमन्ति चापदः ।
इत्यनेकफलभाजि मा स्म भू-
दर्थिता कथमिवार्य्यसङ्गमे ॥ ६९ ॥

दृश्यतामयमनोकहान्तरे
तिग्महेतिपृतनाभिरन्वितः ।
साहिवीचिरिव सिन्धुरुद्धतो
भूपतिः समयसेतुवारितः ॥ ७० ॥

अन्वयः । आत्मनीनम् उपतिष्ठते, गुणाः सम्भवन्ति, आपदश्च विरमन्ति इति अनेकफलभाजि आर्य्यसङ्गमे अर्थिता कथमिव मा स्म भूत् ? वाच्य—आत्मनीनेन उपस्थीयते, गुणैः सम्भूयते, आपद्भिः विरम्यते, अर्थितया मा भावि ॥ ६९

अन्वयः । तिग्महेतिपृतनाभिः अन्वितः साहिवीचिः सिन्धुः इव उद्धतः ( किन्तु ) समयसेतुवारितः ( सन् ) अयं भूपतिः अनोकहान्तरे दृश्यताम् । वाच्य—अन्वितं साहिवीचिं सिन्धुम् इव उद्धतं ... वारितम् इमं भूपतिं पश्य ॥ ७०

ननु मह्यमेतत् सख्यमेव न रोचते किं पुनस्तन्मूलाः सम्पदः ? तत्राह—आत्मनीनमिति । आत्मने हितमात्मनीनम् । "आत्मन्विश्वजनभोगोत्तरपदात् खः" उपतिष्ठते सङ्गच्छते । "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु" इति वक्तव्यात् आत्मनेपदम् । गुणाः विनयादयः सम्भवन्ति आपदश्च विरमन्ति । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । इत्यनेकफलभाजि आर्य्यसङ्गमे साधुसङ्गतौ अर्थिता अपेक्षा कथमिव मा स्म भूत् ? सर्वदा भवत्येव ॥ ६९

न चायं दूरे वर्त्तते इत्याह—दृश्यतामिति । तिग्महेतिभिः तीक्ष्णायुधाभिः । "हेतिर्ज्वालास्त्रसूर्य्यांशुषु" इति हेमचन्द्रः । पृतनाभिः वाहिनीभिः "वाहिनी पृतना चमूः" इत्यमरः । अन्वितः भूपतिः । साहयः ससर्पाः वीचयो यस्य स सिन्धुः समुद्र इव उद्धतः किन्तु समयो मर्य्यादा सेतुरिव समयसेतुः तेन वारितः सन् । हस्तेन निर्द्दिशन् आह—अयमनोकहान्तरे द्रुमान्तर्धाने वर्त्तत इति शेषः । दृश्यताम् । "अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः" इत्यमरः ॥ ७०

৬৯। যাহাতে আত্মহিত সংঘটিত, বিনয়াদি সদ্গুণ সমুদ্ভূত, এবং আপৎসকল তিরোহিত হয়, এ হেন বহুফলজনক সাধুসঙ্গম কেনই বা প্রার্থনীয় না হইবে ?

सज्यं धनुर्वहति योऽहिपतिस्थवीयः
स्थेयान् जयन् हरितुरङ्गमकेतुलक्ष्मीम्।
अस्यानुकूलय मतिं मतिमन्ननेन
सख्या सुखं समभियास्यसि चिन्तितानि ॥७१॥

इति किरातार्जुनीये दूतवाक्यं नाम त्रयोदशः सर्गः ॥ १३ ॥

---

अन्वयः। स्थेयान् यः चमूपतिः हरितुरङ्गमकेतुलक्ष्मीं जयन् अहिपतिस्थवीयः सज्यं धनुः वहति हे मतिमन्! अस्य मतिम् अनुकूलय, सख्या अनेन सुखं चिन्तितानि समभियास्यसि। वाच्य—स्थेयसा येन चमूपतिना जयता धनुः उह्यते, मतिः अनुकूल्यतां चिन्तितानि समभियास्यन्ते ॥ ७१

---

अथास्य विज्ञापनमेवाह सज्यमिति। स्थेयान् स्थिरतरः। "प्रियस्थिर" इत्यादिना स्थादेशः। यश्चमूपतिः हरितुरङ्गमकेतोः इन्द्रध्वजस्य लक्ष्मीं शोभां जयन् अहिपतिः शेष इव स्थवीयः स्थूलतरम् "स्थूलदूर" इत्यादिना पूर्वगुणयणादिपरलोपौ। सह ज्यया सज्यं धनुः वहति। हे मतिमन्! अस्य चमूपतेः मतिम् अनुकूलय अनुकूलां कुरु सख्यं कुर्वित्यर्थः। मतिमत्तायाः फलमेतदिति भावः। कुतः? सख्या अनेन चमूपतिना हेतुना सुखम् अक्लेशेन चिन्तितानि मनोरथान् समभियास्यसि प्राप्स्यसि। वसन्ततिलकावृत्तम् ॥ ७१

इति किरातार्जुनीये त्रयोदशसर्गव्याख्या समाप्ता ॥ १३

---

৭০। সসর্প উর্ম্মিমালাশোভিত সিন্ধুর ন্যায় উদ্ধত,—কিন্তু সময়রূপ সেতু দ্বারা বারিত, ঐ দেখ—তীক্ষ্ণ আয়ুধ ও সেনাসমন্বিত কিরাত ভূপতি বৃক্ষান্তরালে অবস্থান করিতেছেন।

৭১। যে স্থিরচিত্ত চমূপতি ইন্দ্রধ্বজ-শোভা জয় করিয়া শেষনাগবৎ স্থূলতর জ্যাযুক্ত ধনুর্ধারণ করিতেছেন; হে মতিমন্! তুমি এই সেই চমূপতির মতি (তোমার প্রতি) অনুকূল কর; ইহার সহিত সখ্য স্থাপিত হইলে সমস্ত মনোরথ তোমার অনায়াসে অধিগত হইবে।

# चतुर्दशः सर्गः ।

—:o:—

ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्य्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥ १ ॥
सलेशमुल्लिङ्गितशात्रवेङ्गितः
कृती गिरां विस्तरतत्त्वसंग्रहे ।
अयं प्रमाणीकृतकालसाधनः
प्रशान्तसंरम्भ इवाददे वचः ॥ २ ॥

अन्वयः । ततः उद्धतैः किरातस्य वचोभिः अर्णवाम्बुभिः शैल इव पराहतः ( अतः ) कुपितोऽपि पाण्डवः धैर्य्यं न जहौ । तथाहि साधवः सुदुर्ग्रहान्तःकरणाः । वाच्य—शैलेन इव पराहतेन कुपितेन पाण्डवेन धैर्य्यं न जहे, साधुभिः -- करणैः ( भूयते ) ॥ १

अन्वयः । सलेशम् उल्लिङ्गितशात्रवेङ्गितः गिरां विस्तरतत्त्वसंग्रहे कृती, प्रमाणीकृतकालसाधनः अयं प्रशान्तसंरम्भ इव वचः आददे । वाच्य—...शात्रवेङ्गितेन कृतिना -- साधनेन अनेन प्रशान्तसंरम्भेण इव वच आददे ॥ २

तत इति । ततः किरातवाक्यानन्तरम् उद्धतैः प्रगल्भैः किरातस्य वचोभिः अर्णवाम्बुभिः शैल इव पराहतोऽभिहतः अत एव कुपितोऽपि पाण्डवः धैर्य्यं निर्विकारचित्तत्वं न जहौ न तत्याज । उत्पन्नमपि कोपं स्तम्भयामास इत्यर्थः । तथाहि—साधवः सज्जनाः सुदुर्ग्रहं सुष्ठु दुरासदम् अप्रतिकुप्यमन्तःकरणं येषां ते सुदुर्ग्रहान्तःकरणा हि । अर्थान्तरन्यासः ॥१

सलेशमिति । सह लेशैः सलेशं सकलं यथा तथा उल्लिङ्गितम् उद्भूतलिङ्गं कृतं, लिङ्गैः तद्वाक्यभङ्गीभिरिव सम्यगवगतमित्यर्थः । शत्रुरेव शात्रवः । स्वार्थे अण्प्रत्ययः । तस्य इङ्गितम् अभिप्रायः तत् उल्लिङ्गितं येन सः ।

১। অনন্তর পাণ্ডুনন্দন অর্জ্জুন, সাগরজলে শৈলের ন্যায় কিরাতের উদ্ধত বাক্যে পরাহত—সুতরাং কুপিত হইয়াও ধৈর্য্য পরিত্যাগ করিলেন না। বস্তুতঃ সাধুগণের অন্তঃকরণ একান্তই দুর্বিজ্ঞেয়।

**विविक्तवर्णाभरणा सुखश्रुतिः**
**प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्त्तते नाकृतपुण्यकर्म्मणां**
**प्रसन्नगम्भीरपदा सरस्वती ॥३॥**

अन्वयः। विविक्तवर्णाभरणा सुखश्रुतिः द्विषाम् अपि हृदयानि प्रसादयन्ती प्रसन्नगम्भीरपदा सरस्वती अकृतपुण्यकर्म्मणां न प्रवर्त्तते। वाच्य—विविक्तवर्णाभरणया सुखश्रुत्या प्रसादयन्त्या प्रसन्नगम्भीरपदया सरस्वत्या न प्रवृत्यते ॥ ३

गिरां वाचां सम्बन्धिनि विस्तरे तत्त्वसंग्रहे अर्थसङ्क्षेपे। वैभाषिकौ द्वन्द्वैकवद्भावः। कृतौ कुशलः प्रमाणीकृतं प्रधानीकृतं काल एव साधनं येन सः, अवसरोचितं विदन्नित्यर्थः। अथ पाण्डवः प्रशान्तसंरम्भः सङ्क्षोभरहित इव वचः आददे उवाचेत्यर्थः ॥ २

सान्त्वपूर्व्वकमेवाह—विविक्तेति। विविक्ताः संयोगादिना अश्लिष्टाः स्फुटोच्चारिता वर्णाः अक्षराणि एव आभरणानि यस्याः सा। अन्यत्र तु विविक्तानि शुद्धानि वर्णः रूपम् आभरणानि च यस्याः सा। "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे" इत्युभयत्राप्यमरः। सुखा श्रुतिः श्रवणं यस्याः सा सुखश्रुतिः श्राव्येत्यर्थः। अन्यत्र श्रूयत इति श्रुतिः वाक् सा सुखा यस्याः सा मञ्जुभाषिणीत्यर्थः। द्विषामपि हृदयानि प्रसादयन्ती किं पुनः सुहृदामिति भावः। प्रसन्नानि वाचकानि गम्भीराणि अर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा। अन्यत्र तु प्रसन्ना विमला गम्भीरपदा अलसचरणा सरस्वती वाक्, स्त्रीरत्नं च। तथाचोक्तं—"सरस्वती सरिद्भेदे गोवाग्देवतयोरपि। स्त्रीरत्ने" च इति। न कृतं पुण्यकर्म्म यैस्तेषां न प्रवर्त्तते न प्रसरति, किन्तु सुकृतिनामेवेत्यर्थः। भवद्वाणी च एवंविधेति धन्यो भवानिति भावः। अत्र काचित् नायिका वाग्देवता च प्रतीयते। तत्रादौ समासोक्तिरलङ्कारः विशेषणमात्रसाम्येन अप्रस्तुतप्रतीतिः, अतएव न श्लेषः ॥ ३

২। অর্জ্জুন—শক্রর সমস্ত অভিপ্রায় অবগত হইলেন। তিনি বাক্যের প্রপঞ্চ ও সংক্ষেপ রচনায় কুশল এবং অবসরোচিত বাক্য বলিতে সমুৎসুক। অর্জুন এক্ষণে একপ ভাবে বাক্য বলিতে লাগিলেন, যেন তাঁহার কিঞ্চিন্মাত্র সংক্ষোভ নাই।

৩। যাহা বিবিক্ত বর্ণাভরণশালিনী ও সুখশ্রুতিময়ী হইয়া শত্রুগণেরও হৃদয় প্রসন্ন করিয়া থাকে, এ হেন প্রসন্ন-গম্ভীরপদা সরস্বতী (বাণী, পক্ষান্তরে—নায়িকা) অপুণ্যকর্ম্মাদিগের প্রবর্ত্তিত হয়েন না, ফলে যাঁহারা সুকৃতিশালী, তাঁহাদিগেরই প্রবর্ত্তিত হইয়া থাকেন। (অলঙ্কারানুরোধে এরূপ অনুবাদ হইল)।

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम्॥ ४

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः॥ ५

अन्वयः। विपश्चितां (मध्ये) ते सभ्यतमाः भवन्ति, ये मनोगतं वाचि निवेशयन्ति; तेषु अपि उपपन्ननैपुणाः कतिचित् (एव) गभीरम् अर्थं प्रकाशतां नयन्ति। वाच्य—तैः सभ्यतमैः भूयते, यैः मनोगतं निवेश्यते; उपपन्ननैपुणैः अर्थः प्रकाशतां नीयते॥ ४

अन्वयः। (किञ्च केचित्) गुर्वीम् अभिधेयसम्पदं स्तुवन्ति। अपरे विपश्चितः उक्तेः विशुद्धिं (स्तुवन्ति)। इति प्रतिपूरुषं रुचौ स्थितायां (सत्यां) सर्वमनोरमाः गिरः सुदुर्लभाः। वाच्य—गुर्वी अभिधेयसम्पत् स्तूयते। अपरैः विपश्चिद्भिः विशुद्धिः (स्तूयते) सर्वमनोरमाभिः गिर्भिः सुदुर्लभाभिः (भूयते)॥ ५

भवन्तीति। ते पुरुषाः विपश्चितां विदुषाम्। "विद्वान् विपश्चिद्दोषज्ञः" इत्यमरः। मध्ये सभ्यतमाः सभायां साधुतमा निपुणतमाः। "साधुः समर्थो निपुणश्च" इति काशिकायाम्। भवन्ति। ये मनोगतं मनसा गृहीतमर्थं वाचि निवेशयन्ति, वाचा उद्गिरन्तीत्यर्थः। तेषु वक्तृषु अपि उपपन्ननैपुणाः सम्भावितकौशलाः कतिचिदेव गभीरं निगूढम् अर्थं प्रकाशतां स्फुटतां नयन्ति। लोके तावद् ज्ञातार एव दुर्लभाः, तत्रापि वक्तारः, तत्रापि निगूढार्थप्रकाशकाः। त्वयि सर्वमस्तीति स्तुतिः। वनेचरवाक्यरहस्यं ज्ञातमिति स्वयमपि तादृश एवेति हृदयम्॥ ४

स्तुवन्तीति। किञ्च केचित् गुर्वीम् अभिधेयसम्पदम् अर्थसम्पत्तिं स्तुवन्ति। अपरे विपश्चितः उक्तेः शब्दस्य विशुद्धिं सामर्थ्यं स्तुवन्ति। इति प्रतिपूरुषं रुचौ प्रीतौ स्थितायां व्यवस्थितायां सर्वमनोरमाः सर्वेषां शब्दार्थ-

৪। যাঁহারা মনের ভাব কথায় প্রকাশ করিতে পারেন, তাঁহারাই বিদ্বন্মণ্ডলীমধ্যে সভাপদবাচ্য হইয়া থাকেন। তাদৃশ ব্যক্তিগণের মধ্যে আবার কতিপয় নৈপুণ্যশালী ব্যক্তিই নিগূঢ়ার্থ প্রকাশ করিয়া বলিতে পারেন।

समस्य सम्पादयता गुणैरिमां
त्वया समारोपितभार भारतीम्।
प्रगल्भमात्मा धुरि धुर्य्य वाग्मिनां
वनेचरेणापि सताधिरोपित: ॥६

प्रयुज्य सामाचरितं विलोभनं
भयं विभेदाय धिय: प्रदर्शितम्।
तथाभियुक्तश्च शिलीमुखार्थिना
यथेतरन्न्याय्यमिवावभासते ॥७

अन्वय:। हे धुर्य्य ! हे समारोपितभार ! इमां भारतीं गुणै: समस्य प्रगल्भं (यथा स्यात् तथा) सम्पादयता त्वया वनेचरेणापि सता आत्मा वाग्मिनां धुरि अधिरोपित:। वाच्य— (- सम्पादयन् त्वं वनेचरोऽपि सन् आत्मानम् (- अधिरोपितवान् ॥ ६

अन्वय:। साम प्रयुज्य विलोभनम् आचरितम् ; (तथा) धिय: विभेदाय भयं प्रदर्शितम्, (किञ्च) शिलीमुखार्थिना (त्वया) तथा अभियुक्त: यथा इतरत् न्याय्यम् इव अवभासते। वाच्य— : विलोभनम् आचरितवान्, भयं प्रदर्शितवान्, शिलीमुखार्थी (त्वं) तथा अभियुक्तवान्, यथा इतरत् न्याय्यं न इव अवभास्यते ॥ ७

रुचीनां पुंसां मनोरमा: गिर: सुदुर्लभा:। त्वद्गिरस्तु सर्वमनोरमा उक्तसर्वगुणसम्पत्त्या इति भाव: ॥ ५

समस्येति। धुरं वहतीति धुर्य्य: तत्सम्बोधने हे धुर्य्य ! हे कार्य्यनिर्वाहक ! "धुरो यड्ढकौ" इति यत्प्रत्यय:। अतएव समारोपितभार ! स्वामिना निहितसन्ध्यादिकार्य्यभार हे। तदाह मनु: —"दूते सन्धिविपर्य्ययौ" इति। इमां शान्ततावितययोगीत्यादिकां भारतीं वाचं गुणैर्विविक्तवर्णत्वादिभि: समस्य संयोज्य प्रगल्भं निर्भीकं यथा तथा सम्पादयता रचयता व्याहरता इत्यर्थ:। त्वया वनेचरेणापीत्यर्थ:। सता। अपिशब्दो विरोधद्योतनार्थम्। आत्मा स्वयं वाग्मिनां वाचोयुक्तिपटूनाम्। "वाचोयुक्तिपटुर्वाग्मी" इत्यमर:। "वाचो ग्मिनि:" इति मत्वर्थीयो ग्मिनिप्रत्यय:।

৫। কেহ কেহ গভীর অর্থসম্পত্তিরই প্রশংসা করিয়া থাকেন, অপর অনেক পণ্ডিত শব্দবিশুদ্ধিরই সুখ্যাতি করেন। প্রত্যেক পুরুষের রুচি এইরূপ বিভিন্ন হওয়ায় সর্ব্বজন-মনোরম বাক্য একান্তই বিরল।

৬। হে বনেচর! তুমি কার্য্য-নির্ব্বাহক, তাই তোমারই উপর কার্য্যভার অর্পিত হইয়াছে। তুমি এই গুণযুক্ত ভারতী নির্ভীকভাবে ব্যক্ত করিয়া, হও না তুমি বনেচর—তথাচ নিজেকে বাগ্‌বিন্যাসপটু ব্যক্তিগণের অগ্রবর্ত্তী করিয়াছ।

विरोधि सिद्धेरिति कर्त्तुमुद्यतः
स वारितः किं भवता न भूपतिः।
हिते नियोज्यः खलु भूतिमिच्छता
सहार्थनाशेन नृपोऽनुजीविना॥ ८

अन्वयः। (किन्तु) सिद्धेः विरोधि इति कर्म्म उद्यतः स भूपतिः भवता किं न वारितः? भूतिम् इच्छता सहार्थनाशेन अनुजीविना नृपः हिते नियोज्यः खलु। वाच्य— + उद्यतं न भूपतिं भवान् किं न वारितवान्? भूतिम् इच्छन् सहार्थनाशः अनुजीवी नृपं हिते नियुञ्जीत खलु॥ ८

धुर्य्यग्रे अधिरोपितः स्थापित इत्यर्थः। "कृद्धः पोऽन्यतरस्याम्" इति पकारः। अत्र मनुः—"वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते" इति॥ ६

वाग्मितामेवाह—प्रयुज्येति। शान्ततविनययोगीत्यादिना साम सान्त्वम्। "साम सान्त्वमुभे समे" इत्यमरः। प्रयुज्य नियुज्य विलोभनं प्रलोभनम् "मित्रमिष्टम्" इत्यादिना आचरितं सम्पादितम्। तथा धियो बुद्धेर्विभेदाय व्यामोहनार्थम् "शक्तिरर्थपतिषु" इत्यादिना भयं प्रदर्शितम्, किञ्च शिलीमुखार्थिना न तु न्यायार्थिनेति भावः। त्वयेति शेषः। "नाभियोक्तुम्" इत्यादिना तथाभियुक्तं कथितं यथा इतरत् न्यायादन्यत् अन्याय्यमित्यर्थः। न्याय्यं न्यायादनपेतमिव अवभासत इत्युपमा। अनेन वाग्मिनामग्रेसरोऽसीति भावः॥ ७

ततः किमत आह—विरोधीति। किन्तु सिद्धेः फलस्य विरोधि विघातकमिति इदम् अस्मदास्कन्दनरूपं कर्म्म कर्त्तुम् उद्यतः स भूपतिः महीपतिः भवता धर्म्येणेति भावः। किं न वारितो निवर्त्तितः। निवारणे हेतुमाह—भूतिमिच्छता इहामुत्र च श्रेयोऽर्थिना सह सहचरितो अर्थनाशो स्वार्थानर्थौ यस्य तेन समानसुखदुःखिनेत्यर्थः। अनुजीविना भृत्येन नृपः स्वामी हिते नियोज्यः नियम्यः खलु। अन्यथा स्वामिद्रोहपातको श्रेयसो भ्रष्टः स्यादिति भावः॥ ८

৭। তুমি সাম প্রয়োগ করিয়া প্রলোভন দেখাইয়াছ, বুদ্ধিমোহ উৎপাদনের জন্য ভীতি প্রদর্শন করিয়াছ, বাগ্মী হইয়া তুমি একপ বাক্যবিন্যাস করিয়াছ, যাহা অন্যায্য হইলেও ন্যায্যের ন্যায় প্রতিভাত হইয়াছে।

৮। কিন্তু সিদ্ধির বিরোধী এই কার্য্য করিতে উদ্যত—তোমার ভূপতিকে তুমি কেন নিবারণ করিলে না? দেখ, হিতৈষী সম-সুখ-দুঃখভাগী অনুজীবিজনের স্বীয় প্রভুকে হিতে নিয়োগ করাই কর্ত্তব্য।

ध्रुवं प्रणाश: प्रहितस्य पत्रिण:
शिलोच्चये तस्य विमार्गणं नय:।
न युक्तमत्रार्य्यजनातिलङ्घनं
दिशत्यपायं हि सतामतिक्रम: ॥ ९

अतीतसंख्या विहिता ममाग्निना
शिलीमुखा: खाण्डवमत्तुमिच्छता।
अनादृतस्यामरसायकेष्वपि
स्थिता कथं शैलजनाशुगे धृति: ॥ १०

अन्वय:। प्रहितस्य पत्रिण: प्रणाश: ध्रुवम्, तस्य शिलोच्चये विमार्गणं नय:। अत्र आर्य्यजनातिलङ्घनं न युक्तं; हि सताम् अतिक्रम: अपाय दिशति। वाच्य— + प्रणाशेन ध्रुव (भूयते)। + विमार्गणेन नयेन (भूयते); आर्य्यजनातिलङ्घनेन न युक्तेन (भूयते)। + अतिक्रमेण अपाय: दिश्यते ॥ ९

अन्वय:। खाण्डवम् अत्तुम् इच्छता अग्निना मम अतीतसंख्या: शिलीमुखा: विहिता:। (अत:) अमरसायकेषु अपि अनादृतस्य (मम) कथं शैलजनाशुगे धृति: स्थिता? वाच्य— + + इच्छता अग्नि: + अतीतसंख्यान् शिलीमुखान् + धृत्या स्थितम् ॥ १०

तर्हि नो बाण: क्व गत: किमत्र वा न्याय्यं तत्राह—ध्रुवमिति। प्रहितस्य प्रयुक्तस्य पत्रिण: शरस्य प्रणाशोऽदर्शनं ध्रुवं निश्चितम्। प्रहितश्चेदिति भाव:। तस्य नष्टस्य पत्रिण: शिलोच्चये शैले। "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया:" इत्यमर:। विमार्गणम् अन्वेषणं नयो न्याय्य:। "अन्वेषणं विचयनं मार्गणं मृगणा मृग:" इत्यमर:। अत्र विषये आर्य्यजनातिलङ्घनं सज्जनव्यतिक्रमो न युक्तम्। हि यस्मात् कारणात् सतामतिक्रम: अपायम् अनर्थं दिशति ददाति ॥ ९

यदुक्तम् "हर्त्तुमर्हसि" इति तत्रोत्तरमाह—अतीतेति। खाण्डवम् इन्द्रवनम् अत्तुं भक्षयितुमिच्छता अग्निना मम अतीतसङ्ख्या असङ्ख्या: शिलीमुखा: शरा: विहिता: दत्ता:। खाण्डवदाहे अक्षयतूणीरदानमुक्तं भारते। अत: अमरसायकेष्वपि अनादृतस्य आदररहितस्य। भावे क्त:, ततो नञा बहुव्रीहि:। मम कथं शैलजनाशुगे किरातबाणे धृति:

৯। নিক্ষিপ্ত শর যে চক্ষুর অগোচর হইবে, তাহা নিশ্চিতই। সেই নষ্টশরের অনুসন্ধান শৈলপ্রদেশে করাই সমুচিত। এ বিষয়ে সজ্জনাতিক্রম সমীচীন নহে; কারণ, তাহা অনর্থ ঘটাইয়া থাকে।

यदि प्रमाणीकृतमार्य्यचेष्टितं
किमित्यदोषेण तिरस्कृता वयम्।
अयातपूर्वा परिवादगोचरं
सतां हि वाणी गुणमेव भाषते॥ ११

गुणापवादेन तदन्यरोपणाद्-
भृशाधिरूढ़स्य समञ्जसं जनम्।
द्विधेव कृत्वा हृदयं निगूहतः
स्फुरन्नसाधोर्विवृणोति वागसिः॥ १२

अन्वयः। आर्य्यचेष्टितं प्रमाणीकृतं यदि (तर्हि) अदोषेण वयं किम् इति तिरस्कृताः। हि परिवादगोचरम् अयातपूर्वा सतां वाणी गुणम् एव भाषते। वाच्य—आर्य्यचेष्टितेन प्रमाणीकृतेन (भूयते) यदि, + अस्माभिः + तिरस्कृतैः (भूयते)। अयातपूर्वया वाण्या गुण एव भाष्यते॥ ११

अन्वयः। गुणापवादेन तदन्यरोपणात्, समञ्जसं जनं भृशाधिरूढस्य निगूहतः असाधोः हृदयं स्फुरन् वागसिः द्विधा कृत्वेव विवृणोति। वाच्य— + स्फुरता वागसिना विव्रियते॥ १२

आस्था स्थिता? न कथञ्चिदित्यर्थः। अतो न अपहारशङ्का कार्य्या इत्यर्थः॥ १०

यदुक्तम् "स्मर्य्यते तनुभृताम्" इत्यादिना सदाचारः प्रमाणमिति, तत्रोत्तरमाह—यदीति। आर्य्यचेष्टितं सच्चरितं प्रमाणीकृतं यदि साधुत्वेन अङ्गीकृतं यदीत्यर्थः। तर्हि अदोषेण दोषाभावेऽपि। "क्वचित्-प्रसज्यप्रतिषेधेऽपि नञ्समासः।" इति भाष्यकारः। उपलक्षणे तृतीया। वयं किमिति तिरस्कृताः न युक्तमित्यर्थः। हि यस्मात् परिवादगोचरं पर-निन्दास्पदम् अयातपूर्वा सतां वाणी गुणमेव भाषते न दोषम्, अतस्ते मृषादोषभाषिणो न सदाचारप्रामाण्यबुद्धिरिति भावः। पूर्वं न याता इति अयातपूर्वा। सुप्सुपेति समासः। परत्वात् सर्वनाम्नो निष्ठायाः पूर्वनिपातः। "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः पूर्वलिङ्गता च। अर्थान्तरन्यासालङ्कारः॥ ११

১০। খাণ্ডববনভক্ষণেচ্ছু অগ্নি আমাকে অসংখ্য শর অর্পণ করিয়াছেন। সুতরাং অন্যের শরেও আমার আগ্রহ নাই। একৈক কিরাতের শরে আমি আস্থাবান্ হইব, এ কিরূপ কথা!

১১। যদি আর্য্যজনের আচরণই প্রমাণীকৃত হয়, তবে আমরা বিনা দোষে তিরস্কৃত হই কেন? দেখ, যাহা পূর্ব্বে কখনো পরনিন্দাব্যাপারে ব্যাপৃত হয় নাই, তাদৃশ সজ্জন-বাণী গুণই প্রকাশ করিয়া থাকে।

वनाश्रयाः कस्य मृगाः परिग्रहाः
शृणाति यस्तान् प्रसभेन तस्य ते ।
प्रहीयतामत्र नृपेण मानिता
न मानिता चास्ति भवन्ति च श्रियः ॥ १३

अन्वयः । वनाश्रयाः मृगाः कस्य परिग्रहाः ? यः तान् प्रसभेन शृणाति, ते मृगाः तस्य । अत्र नृपेण मानिता प्रहीयताम्, मानिता च अस्ति श्रियश्च भवन्ति ( इति ) न । वाच्य—वनाश्रयैः मृगैः कस्य परिग्रहैः ( भूयते ) । येन ते + शीर्य्यन्ते, तैः मृगैः तस्य ( भूयते ) । + नृपः मानिता प्रजह्यात्, मानितया च भूयते श्रीभिश्च भूयते ( इति ) न ॥ १३

ननु अप्रत्यक्षा परबुद्धिः कथं दृष्टेति निश्चीयत तत्राह—गुणेति । गुणापवादेन विद्यमानगुणापह्नवेन तदन्यारोपणात् तस्मात् गुणात् अन्यस्य दोषस्य अविद्यमानस्यैव आरोपणाच्च समञ्जसं जनं सुजनं भृशादि-रूढस्य अतिमात्रमाक्रम्य स्थितस्य अभिचिन्तितस्येत्यर्थः । कर्त्तरि क्तः । निगूहतो हृदयं संवृण्वतोऽपि असाधोः अनार्य्यस्य हृदयं कर्म स्फुरन् विलसन् वाग्वाणैः द्विधा कृत्वा भिन्नेव विवृणोति । दुष्टया वाचैव तत्पूर्व्विकायाः बुद्धेरपि दौष्ट्यमनुमीयत इति भावः । वागसिरित्यत्र रूपकं द्विधाकरण-रूपकसाधकम् ॥ १२

यदुक्तम् "अभ्यघानि" इति तत्रोत्तरमाह वनेति । वनाश्रयाः अत एव मृगाः कस्य परिग्रहाः ? न कस्यापीत्यर्थः । किन्तु यस्तान् मृगान् प्रसभेन बलात्कारेण शृणाति हिनस्ति । "शॄ हिंसायाम्" इति धातोर्लट् । ते मृगास्तस्य हन्तुः परिग्रहाः परिग्राह्याः । हन्ता च अहमेवेति भावः । ननु ममायमिति अभिमानात् नृपस्य स्वत्वमित्याशङ्क्याह—अत्रेति । अत्र मृगे नृपेण मानिता ममेति अभिमानः प्रहीयतां त्यज्यताम् । कुत इत्याशङ्क्याह—नेति । मानिता च अस्ति, श्रियः स्वानि च भवन्ति इति न, किन्तु न भवन्त्येव सत्याम् अभि-मानितायामित्यर्थः । अभिमानमात्रेण स्वत्वेऽतिप्रसङ्गादिति भावः ॥ १३

১২। অসাধু জন বিদ্যমান গুণ গোপন করিয়া, অবিদ্যমান দোষ আরোপণপূর্ব্বক সুজন লোককে একান্ত অভিভূত করিয়া থাকে। কিন্তু সে তাহার হৃদয়ের ভাব গোপন করিয়া রাখিলেও তাহার দুষ্ট বাক্যরূপ অসি তাহার হৃদয়কে দ্বিধা ভিন্ন করিয়াই যেন প্রকাশ করিয়া দেয়।

১৩। মৃগগণ বনে বাস করে, তাহারা কাহার নিজস্ব? যে তাহাদিগকে বলপ্রয়োগে বিনষ্ট করে, তাহারা তাহারই গ্রহণযোগ্য হইয়া থাকে। তোমার রাজা এ মৃগে অভিমান পরিত্যাগ করুন। অভিমানও বজায় থাকিবে, সম্পত্তিও হইবে—ইহা অসম্ভব।

न वर्त्म कस्मैचिदपि प्रदीयताम्
इति व्रतं मे विहितं महर्षिणा।
जिघांसुरस्मान्निहतो मया मृगो
व्रताभिरक्षा हि सतामलङ्क्रिया॥ १४

मृगान् विनिघ्नन्मृगयुः स्वहेतुना
कृतोपकारः कथमिच्छतां तपः।
कृपेति चेदस्तु मृगः क्षतः क्षणा-
दनेन पूर्वं न मयेति का गतिः १५

अन्वयः। कस्मैचित् अपि वर्त्म न प्रदीयताम्; इति व्रतं महर्षिणा मे विहितम्। अस्मात् जिघांसुः मृगः मया निहतः। हि व्रताभिरक्षा सताम् अलंक्रिया। वाच्य— न वर्त्म न प्रदेहि (प्रदद्यात् वा) इति व्रतं महर्षिः .. विहितवान्। जिघांसुं मृगम् अहं निहतवान्। व्रताभिरक्षया न अलंक्रियया (भूयते)॥ १४

अन्वयः। स्वहेतुना मृगान् विनिघ्नन् मृगयुः तपः इच्छतां कथं कृतोपकारः? कृपा इति चेत्, अस्तु मृगः क्षणात् क्षतः। अनेन पूर्वं मया न, इति का गतिः। वाच्य—विनिघ्नता मृगयुना (भूयते)। न कृतोपकारिणा (भूयते) भूयतां मृगेण क्षतेन। अयं (हतवान्) अहं न (हतवान्) इति कया गत्या (भूयते)॥ १५

"यष्टुमिच्छसि पितॄन्" इत्यादिना यत् निष्कारणमवधीरिति उपालम्भि तत्रोत्तरमाह—नेति। कस्मैचिदपि वर्त्म न प्रदीयतामित्येवं व्रतं महर्षिणा व्यासेन मे मह्यं विहितमुपदिष्टमित्यर्थः। अस्मात् कारणात्। जिघांसुः हन्तुमिच्छुः आपतन् अभिधावन् अयं मृगो मया निहतः। हि यस्मात् व्रताभिरक्षा सताम् अलङ्क्रिया न तु दोषः, अत आत्मरक्षणार्थमस्य वधो न निष्कारणमित्यर्थः॥ १४

"दुर्वचं तत्" इत्यादिना यत् सञ्जातं बन्धुत्वमुक्तं तत्राचष्टे—मृगानिति। स्वमात्मा एव हेतुस्तेन स्वहेतुना स्वार्थमित्यर्थः। "सर्व्वनाम्नस्तृतीया च" इति तृतीया। मृगान् विनिघ्नन् प्रहरन्। मृगान् यातीति मृगयुर्व्याधः। "मृगयुर्व्याधश्च" इत्यौणादिको युप्रत्ययान्तो निपातः। "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः। तपः इच्छतां तपस्विनां कथं

১৪। 'তুমি কাহাকেও পথ ছাড়িয়া দিও না' মহর্ষি ব্যাস আমার এইরূপ ব্রতেরই উপদেশ দিয়াছিলেন। এই কারণেই আমি এই জিঘাংসু মৃগকে সংহার করিয়াছি। ব্রতরক্ষা সাধুজনের দোষাবহ নহে; প্রত্যুত উহা তাঁহাদের অলঙ্কারস্বরূপ।

अनायुधे सत्त्वजिघांसिते मुनौ
कृपेति वृत्तिर्महतामकृत्रिमा ।
शरासनं बिभ्रति सज्यसायकं
कृतानुकम्पः स कथं प्रतीयते ? ॥ १६
अथो शरस्तेन मदर्थमुज्झितः
फलञ्च तस्य प्रतिकायसाधनम् ।

अन्वयः अनायुधे सत्त्वजिघांसिते मुनौ कृपा इति वृत्तिः महताम् अकृत्रिमा। सज्यसायकं शरासनं बिभ्रति ( मयि ) स कथं कृतानुकम्पः प्रतीयते। वाच्य— १- कृपा इति वृत्त्या अकृत्रिमया भूयते। × न कृतानुकम्पं प्रत्येमि ॥ १६

कृतोपकारः ? न कथञ्चिदित्यर्थः। अथ कृपेति चेत् व्याधस्यापीति शेषः। अस्तु किं शुष्ककलहेनेति भावः। परन्तु यदुक्तम् "निघ्नतः परनिवर्हितम्" इत्यादिना तस्य प्रथमप्रहर्त्तृत्वं तदयुक्तमित्याह—मृगः क्षणात् क्षतः, आवाभ्यां युगपदेव विद्ध इत्यर्थः। एवं सति अनेन नृपेणैव पूर्वं हतः, मया तु न इत्यत्र का गतिः किं प्रमाणं पौर्वापर्य्यस्य दुर्निश्चयत्वादिति भावः। तथाच यदुक्तम् "व्रीडितव्यम्" इत्युपालम्भः तस्यैव किं न स्यादिति भावः ॥ १५

पूर्वं "कृपेति चेदस्तु" इत्युक्तं, सम्प्रति तदपि असहमान आह—अनायुध इति। अनायुधे निरायुधे सत्त्वेन केनचित् प्राणिना जिघांसिते हन्तुमिष्टे। हन्तेः सन्नन्तात् कर्मणि क्तः। मुनौ विषये कृपेति वृत्तिः व्यवहारो महतां महात्मनाम् अकृत्रिमा अकपटा। सह ज्यया सज्यः सायको यस्मिन् तत् शरासनं धनुर्बिभ्रति दधति मयि स नृपः कथं कृतानुकम्पः मया प्रतीयते ज्ञायते। इणः कर्मणि लट्। अत्रसे कृपा विहिता न तु क्षम इत्यर्थः ॥ १६

১৫। ব্যাধ নিজের জন্য মৃগের প্রাণসংহার করিয়া তপস্বিগণের উপকার সাধন করে, সে কিরূপ কথা ? আর যদি বল, আমার প্রতি কৃপা করিয়াই এই মৃগকে নিহত করা হইয়াছে, তবে তাহাই হউক ( শুষ্ক কলহে প্রয়োজন কি ? )। মৃগকে আমরা যুগপৎ বাণবিদ্ধ করিয়াছি। এ অবস্থায় তোমাদের রাজাই পূর্ব্বে মারিয়াছেন, আর আমি যে পূর্ব্বে মারি নাই, ইহার প্রমাণ কি ?

১৬। নিরস্ত্র মুনিজনে কোন জন্তু হিংসা পোষণ করিলে, তৎপ্রতি অকৃত্রিম দয়া প্রকাশই মহাত্মগণের কার্য্য। কিন্তু আমি এই সগুণ-শর-শরাসন ধারণ করিতেছি, আমার প্রতি তিনি সদয়, কিরূপে একথা প্রত্যয় করিব ?

अविचते तच मयात्मसात्कृते
कृतार्थता नन्वधिका चमूपतेः॥ १७
यदात्थ कामं भवता स याच्यता-
मिति चमं नैतदनल्पचेतसाम्।
कथं प्रसह्याहरणैषिणां प्रियाः
परावनत्या मलिनीकृता श्रियः?॥ १८

अन्वयः। अथ तेन मदर्थं शरः उज्झितः, तस्य फलञ्च प्रतिकायसाधनम्, अविचते तत्र मया आत्मसात्कृते (सति) चमूपतेः अधिका कृतार्थता ननु। वाच्य—स शरम् उज्झितवान्, फलेन प्रतिकायसाधनेन (भूयते)॥ १७

अन्वयः। स कामं भवता याच्यताम् इति यत् आत्थ, एतत् अनल्पचेतसां न चमम्। (कुतः) प्रसह्य आहरणैषिणां परावनत्या मलिनीकृताः श्रियः कथं प्रियाः? वाच्य—तं + भवान् याचताम् इति यत् उच्यते एतेन । न चमेण (भूयते)। + मलिनीकृताभिः श्रीभिः कथं प्रियाभिः (भूयते)॥ १८

अथ कृपामभ्युपगम्याह—अथो इति। अथो प्रश्ने। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। तेन नृपेण मदर्थं यथा तथा। अर्थेन सह नित्यसमासः। शरः उज्झितः त्यक्तः तस्य फलञ्च प्रतिकायस्य प्रतिपक्षस्य साधनं वधः। "साधनं निवृतौ मेढ्रे सैन्ये सिद्धौ वधे गतौ" इति विश्वः। अविचते अखण्डिते तत्र तस्मिन् फले मया आत्मसात्कृते स्वाधीनीकृते सति। "तदधीनवचने" इति सातिप्रत्ययः। चमूपतेरधिका कृतार्थता साफल्यम् ननु खलु। स्वायुधस्य परत्राणशत्रुवधपात्रप्रतिपादनाय एककृत्यया सिद्धेरित्यर्थः। तथापि अयं शरलोभ इति कृपालुताया मूलान्यपि निकृन्ततीति भावः॥ १७

"मार्गणैरथ तव प्रयोजनम्" इत्यादिना यदुक्तं तन्निराचष्टे—यदिति। स नृपः कामं भवता याच्यतामिति यदात्थ मामिति शेषः। एतदनल्पचेतसां मनस्विनां न चमं न युक्तम्। कुतः प्रसह्य बलात् आहरणैषिणाम् आहर्त्तुमिच्छूनाम्। "चत्रियस्य विजितम्" इति स्मरणादिति भावः। परावनत्या याच्ञादैन्येन मलिनीकृताः श्रियः कथं प्रियाः, न कथञ्चिदित्यर्थः॥ १८

১৭। ধরিয়া লইলাম, তিনি আমারই জন্য শর ক্ষেপণ করিয়াছেন; কিন্তু তাহার ফল তো প্রতিপক্ষ-সংহার। সেই অখণ্ডিত ফল আমি আত্মসাৎ করিলে তোমাদের সেনাপতিরই তো অধিক সাফল্য নিশ্চিত।

अभूतमासज्य विरुद्धमीहितं
बलादलभ्यं तव लिप्सते नृपः ।
विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ॥ १९

असिः शरा वर्म धनुश्च नोच्चकै-
र्विविच्य किं प्रार्थितमीश्वरेण ते ? ।
अथास्ति शक्तिः कृतमेव याच्ञया ?
न दूषितः शक्तिमतां स्वयङ्ग्रहः ॥ २०

अन्वयः । तव नृपः अभूतम् आसज्य अलभ्यं विरुद्धम् ईहितं बलात् लिप्सते । हि अनयस्य रौद्रतां विजानतोऽपि मतिः अपाये परिमोहिनी भवति । वाच्य— (- नृपेण -) अलभ्यं विरुद्धम् ईहितं लिप्स्यते । (- मत्या परिमोहिन्या ( भूयते ) ॥ १९

अन्वयः । असिः शराः वर्म उच्चकैः धनुश्च ते ईश्वरेण विविच्य किं न प्रार्थितम् ? अथ शक्तिः अस्ति, याच्ञया कृतम् एव । यतः शक्तिमतां स्वयंग्रहः न दूषितः । वाच्य—असिं शरान् वर्म उच्चकैः धनुश्च ईश्वरः (- किं न प्रार्थितवान् ? शक्त्या भूयते -) स्वयंग्रहेण न दूषितेन ( भूयते ) ॥ २०

अथ परिङ्गितमुद्घाट्य भयं दर्शयति—अभूतमिति । तव नृपोऽभूतमनृतमासज्य मिथ्याभियुज्येत्यर्थः । "युक्ते क्ष्मादावृते भूतम्" इत्यमरः । अलभ्यं लब्धुम् अशक्यं विरुद्धं विपरीतफलकम् ईहितं मनोरथं, बलात् लिप्सते लब्धुमिच्छति । न च एतच्चित्रम् इत्याह—हि यस्मात् अनयस्य दुर्नयस्य रौद्रतां भयङ्करत्वं विजानतोऽपि पुरुषस्य मतिः बुद्धिः अपाये विनाशकाले परिमोहिनी भवति । परिमुह्यतीति परिमोहिनी संपृचादिसूत्रेण ताच्छील्ये त्रिनुणप्रत्ययः । तथाचोक्तम्—"विनिर्मितः केन न दृष्टपूर्वः हेम्नः कुरङ्गो न च कुत्र वार्त्ता । तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥" इति । तस्मात् विनाशकाले बलात् विपरीतबुद्धिः भवतीति भावः ॥ १९

১৮। "সেই রাজার নিকট যথেষ্ট প্রার্থনা কর" এই যাহা তুমি আমায় বলিয়াছ, মনস্বিগণের পক্ষে ইহা যুক্তিযুক্ত নহে। কেননা, যাহারা সবলে আহরণ করিতে সমুৎসুক, যাচ্ঞা দৈন্য-মলিনীকৃত সম্পত্তি তাহাদের প্রিয় হইবে কেন ?

১৯। তোমার রাজা একটা মিথ্যাভিযোগ করিয়া বিপরীতফলজনক অলভ্য বস্তু সবলে লাভ করিতে চাহেন। (ফলে) দুর্নয়ের ভীষণতা জানিয়া শুনিয়াও বিনাশকালে লোকের মতি মোহিত হইয়া থাকে।

सखा स युक्तः कथितः कथं त्वया ?
यदृच्छयाऽसूयति यस्तपस्यते ।
गुणार्जनोच्छ्रायविरुद्धबुद्धयः
प्रकृत्यमित्रा हि सतामसाधवः ॥ २१ ॥

अन्वयः । स कथं त्वया योग्यः सखा कथितः, यः तपस्यते यदृच्छया असूयति ? हि गुणार्ज्जनोच्छ्रायविरुद्धबुद्धयः असाधवः सतां प्रकृत्यमित्राः ( भवन्ति ) । वाच्य—तं त्वं योग्य सखायं कथितवान्, येन + असूय्यते । दुर्बुद्धिभिः असाधुभिः ( भूयते ) ॥ २१

अथ सर्वथा लभ्यस्ते शरः तर्हि किमनेन सुष्टु विश्रब्धं याच्यतां शरोऽन्यद्वेत्याह—असिरिति । असिः खड्गः, शराः, वर्म, कवचम् उच्चकैः उत्कृष्टं धनुश्च धनुर्व्वा ते तव ईश्वरेण स्वामिना विविच्य एकैकशः विभज्य किं न प्रार्थितं ? न याचितं, येन प्रयोजनं तद्दास्यामीति भावः । नपुंसकैकशेषः । अथास्य वीराभिमानिनो नृपस्य शक्तिरस्ति चेदिति शेषः । याच्ञया कृतमेव अलमेव । साध्याभावात् न याचितव्यमेवेत्यर्थः । गम्यमानक्रियापेक्षया करणत्वात् तृतीयेत्युक्तं प्राक् । कृतमिति निषेधार्थमव्ययम् । यतः शक्तिमतां स्वयङ्ग्रहः बलाद्ग्रहणं न दूषितः, किन्तु भूषणमेव वीराणामिति भावः । क्षत्रियाणां प्रसह्य वित्तापहरणं न दूषितमिति भारतोक्तम् ॥ २०

“राघवप्लवगराजयोरिव” इत्यादिना उपदिष्टं सख्यं प्रत्याचष्टे—सखेति । स नृपः कथं त्वया युक्तो योग्यः सखा कथितः ? न कथञ्चित् कथनीय इत्यर्थः । कुतः ? यो नृपः तपस्यते तपस्विने, अनपराधिने इत्यर्थः । “क्रुधद्रुह” इत्यादिना सम्प्रदानत्वात् चतुर्थी । यदृच्छया स्वैरवृत्त्या । “यदृच्छा स्वैरिता” इत्यमरः । असूयति असूयां करोति । “असूया तु दोषारोपो गुणिष्वपि” इत्यमरः । प्रत्युत शत्रुरेवायमित्याह—हि यस्मात् गुणानामर्जने यः उच्छ्राय उत्कर्षः तस्य विरुद्धा विमुखा बुद्धिर्येषां ते तथा असाधवो दुष्टाः सतां सज्जनानां प्रकृत्यमित्राः प्रकृत्या शत्रवः । “द्विड्-विपक्षाहितामित्रदस्युशात्रवशत्रवः” इत्यमरः ॥ २१

২০। তোমার প্রভু খড়্গ, শর, বর্ম বা উত্তম ধনু—ইহার যে কোন একটী প্রার্থনা করুন না কেন ? ( যাহা প্রয়োজন হয়, আমি দান করিব ) অথবা তাঁহার শক্তি থাকে, প্রার্থনায় প্রয়োজন নাই। শক্তিশালীদিগের বলপূর্ব্বক গ্রহণ দূষণীয় নহে।

২১। যিনি তপস্বী জনে স্বেচ্ছায় অসূয়া প্রকাশ করেন, সেই রাজাকে তুমি কিরূপে যোগ্য সখা বলিয়া উল্লেখ করিলে ? ফলে, গুণার্জ্জনের উৎকর্ষে যাহারা বিরুদ্ধ বুদ্ধি পোষণ করে, তাদৃশ অসাধুগণ তো স্বভাবতই সাধুগণের অমিত্র।

वयं क्व वर्णाश्रमरक्षणोचिताः ?
क्व जातिहीना मृगजीवितच्छिदः ? ।
सहापकृष्टैर्महतां न सङ्गतं
भवन्ति गोमायुसखा न दन्तिनः ॥ २२

परोऽवजानाति यदज्ञताजड़-
स्तदुन्नतानां न विहन्ति धीरताम् ।
समानवीर्य्यान्वयपौरुषेषु यः
करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ २३

अन्वयः । वर्णाश्रमरक्षणोचिताः विशुद्धवृत्तयः वयं क्व ? जातिहीनाः मृगजीवितच्छिदः क्व ? अपकृष्टैः सह महतां सङ्गतं न । (तथाहि) दन्तिनः गोमायुसखाः न भवन्ति । वाच्य—वर्णाश्रमरक्षणोचितैः विशुद्धवृत्तिभिः अस्माभिः क्व (भूयते), जातिहीनैः मृगजीवितच्छिद्भिः क्व (भूयते) । × × सङ्गतेन न (भूयते) । दन्तिभिः गोमायुसखैः न भूयते ॥ २२

अन्वयः । अज्ञताजडः परः अवजानाति यत् तत् उन्नतानां धीरतां न विहन्ति । (किन्तु) समानवीर्य्यान्वयपौरुषेषु (मध्ये) यः अतिक्रान्तिं करोति (सेत्) असौ तिरस्क्रिया । वाच्य—अज्ञताजडेन परेण अवज्ञायते यत् तेन धीरता न विहन्यते । × येन अतिक्रान्तिः क्रियते, असुया तिरस्क्रियया (भूयते) ॥२३

हीनजातिवृत्तित्वात् सख्यानर्हः स इत्याह—वयमिति । वर्णाश्रमरक्षणोचिता विशुद्धवृत्तयो वयं राजानः क्व । जातिहीना मृगजीवितच्छिदो हिंसाजीविनो व्याधाः क्व । फलितमाह—सह अपकृष्टैः उक्तरीत्या जात्या वृत्त्या च निकृष्टैः सह महतां जात्या वृत्त्या च उत्कृष्टानां सङ्गतं सख्यं न घटत इति शेषः । तथाहि—दन्तिनो गजा गोमायूनां शृगालानां सखायो गोमायुसखा न भवन्ति । "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः । शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः" इत्यमरः । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २२ ॥

नीचसख्यं कथमधिक्षिप्यत इति चेत्तत्राह—पर इति । अज्ञताजड़ो मोहान्धः परोऽवजानाति यत्तदवज्ञानम् उन्नतानां महतां धीरतां न विहन्ति न विकारं जनयति इत्यर्थः । क्रोष्टेव सिंहस्य इति भावः ।

২২। বর্ণাশ্রমরক্ষক মাদৃশ ক্ষত্রিয়জাতিই বা কোথায়? আর জাতিহীন হিংসাজীবী ব্যাধবর্গই বা কোথায়? ফলে নিকৃষ্টদিগের সহিত উৎকৃষ্টদিগের সখ্য সম্ভবপর নহে।—গজগণ কখনো গোমায়ুদিগের সখা হয় না।

यदा विगृह्णाति हतं तदा यशः
करोति मैत्रीमथ दूषिता गुणाः ।
स्थितिं समीक्ष्योभयथा परीक्षकः
करोत्यवज्ञोपहतं पृथग्जनम् ॥ २४

मया मृगान् हन्तुरनेन हेतुना
विरुद्धमाक्षेपवचस्तितिक्षितम् ।
शरार्थमेष्यत्यथ लप्स्यते गतिं
शिरोमणिं दृष्टिविषाज्जिघृक्षतः ॥ २५

अन्वयः । यदा विगृह्णाति, तदा यशः हतम्, अथ ( यदा ) मैत्रीं करोति ( तदा ) गुणाः दूषिताः । ( इति ) उभयथा स्थितिं समीक्ष्य परीक्षकः पृथग्जनम् अवज्ञोपहतं करोति । वाच्य—यदा विगृह्यते, तदा यशसा हतम्, अथ मैत्री क्रियते ( तदा ) गुणैः दूषितैः ( भूयते ) । । परीक्षकेण पृथग्जनः अवज्ञोपहतः क्रियते ॥ २४

अन्वयः । अनेन हेतुना मया मृगान् हन्तुः विरुद्धम् आक्षेपवचः तितिक्षितम् । अथ शरार्थम् एष्यति दृष्टिविषात् शिरोमणिं जिघृक्षतः गतिं लप्स्यते । वाच्य— + अहं तितिक्षितवान् + × एष्यते × गतिः लप्स्यते ॥ २५

किन्तु समानानि तुल्यानि वीर्य्यान्वयपौरुषाणि शक्तिकुलविक्रमा येषां तेषु मध्ये । निर्द्धारणे सप्तमी । यः कश्चिदित्यर्थः । अतिक्रान्तिमतिक्रमं करोति चेदसौ सद्यजनातिक्रमस्तिरस्क्रिया तिरस्कारः । यथा सिंहे सिंहस्य इति भावः ॥ २३ ॥

तर्हि नीचे कीदृशी वृत्तिः इत्याशङ्क्य सोपपत्तिकमाह—यदेति । यदा विगृह्णाति विरुणद्धि पृथग्जनेन इति शेषः । तदा यशो हतं नाशितं भवेत् । अथ यदा मैत्रीं करोति तदा गुणा दूषिता भवेयुरिति शेषः । इति उभयथा स्थितिं समीक्ष्य प्रतर्क्य विमृश्य परीक्षको विवेचकः पृथग्जनं नीचजनम् अवज्ञया अनादरेणोपहतं तिरस्कृतं करोति उपेक्षत इत्यर्थः ॥ २४ ॥

২৩। মোহান্ধ নীচ ব্যক্তি যে অবজ্ঞা করে, তাহাতে মহদ্ব্যক্তির ধীরত্ব নষ্ট হয় না। কিন্তু কুল, বীর্য্য ও বিক্রম যাহাদের সমান, তাহাদের মধ্যে যদি কেহ কোনরূপ ব্যতিক্রম করে, তবে তাহাই বটে তিরস্কার।

২৪। নিকৃষ্ট ব্যক্তির সহিত ভদ্রব্যক্তি যখন বিগ্রহ করে, তখনই তাহার যশঃ নষ্ট হয়; আর যখন মৈত্রীবন্ধন করে, তখনই গুণরাশি দূষিত হইয়া থাকে, এইরূপ উভয় প্রকারেই মর্য্যাদাহানি আলোচনা করিয়া বিবেচক ব্যক্তি নীচ জনকে অবজ্ঞার সহিত উপেক্ষা করিয়া থাকেন।

इतीरिताकूतमनीलवाजिनं
जयाय दूतः प्रतितर्ज्य तेजसा ।
ययौ समीपं ध्वजिनीमुपेयुषः
प्रसन्नरूपस्य विरूपचक्षुषः ॥ २६

ततोऽपवादेन पताकिनीपते-
श्चचाल निर्ह्रादवती महाचमूः ।
युगान्तवाताभिहतेव कुर्वती
निनादमम्भोनिधिवीचिसंहतिः ॥ २७

अन्वयः। इति ईरिताकूतम् अनीलवाजिनम् अर्जुनं दूतः जयाय तेजसा प्रतितर्ज्य ध्वजिनीम् उपेयुषः प्रसन्नरूपस्य विरूपचक्षुषः समीपं ययौ। वाच्य— × दूतेन × समीपं ययै ॥ २६

अन्वयः। ततः पताकिनीपतेः अपवादेन निर्ह्रादवती महाचमूः युगान्तवाताभिहता निनादं कुर्वती अम्भोनिधिवीचिसंहतिरिव चचाल। वाच्य—निर्ह्रादवत्या महाचम्वा युगान्तवाताभिहतया निनादं कुर्वत्या अम्भोनिधिवीचिसंहत्येव चेले ॥ २७

उपसंहरन्नाह—मयेति। अनेन हेतुना सन्धिविग्रहानर्थत्वेन कारणेन मया मृगान् हन्तुः व्याधस्य सम्बन्धि। हन्तेः तृन्प्रत्ययः। अत एव "न लोक" इत्यादिना षष्ठीप्रतिषेधः। विरुद्धम् अतिपरुषम् आक्षेपवचः तिरस्कारवचनं तितिक्षितं सोढम्। ननु सख्यानङ्गीकारे बलात् शरं ग्रहीष्यति इत्याशङ्क्याह—शरेति। अथ शरार्थमेष्यति (चेत्) दृष्टौ विषं यस्य तस्मात् दृष्टिविषात् सर्पविशेषात् शिरोमणिं जिघृक्षतो ग्रहीतुमिच्छतो गतिं दशां लप्स्यते प्राप्स्यति ॥ २५ ॥

इतीति इतीत्थम् ईरिताकूतम् उक्ताभिप्रायम् अनीलवाजिनं श्वेताश्वम् अर्जुनं दूतो जयाय तेजसा प्रतापेन प्रतितर्ज्य, अस्मान् जित्वा क्व गमिष्यसीति भीषयित्वा इत्यर्थः। ध्वजिनीम् उपेयुषः सेनासङ्गतस्य प्रसन्नरूपस्य अर्जुनं प्रति इति शेषः। विरूपचक्षुषः त्र्यम्बकस्य समीपं ययौ ॥ २६ ॥

২৫। এই জন্যই আমি মৃগঘাতী ব্যাধের রুক্ষ তিরস্কার বাক্য সহ্য করিয়াছি। তবে যদি তিনি শরগ্রহণার্থ আগমন করেন, তাহা হইলে দৃষ্টি-বিষ-সর্পের শিরোমণি-গ্রহণাভিলাষী ব্যক্তির যে দশা হইয়া থাকে, তাহাকেও সেই দশা প্রাপ্ত হইতে হইবে।

২৬। অর্জ্জুন এইরূপে স্বীয় অভিপ্রায় ব্যক্ত করিলে, কিরাতদূত তাঁহাকে জয়ার্থ প্রতাপ প্রকাশপূর্ব্বক তর্জ্জন করিয়া সেনাসমন্বিত প্রসন্নরূপী বিরূপাক্ষের সমীপে গমন করিল।

रणाय जैत्रः प्रदिशन्निव त्वरां
तरङ्गितालम्बितकेतुसन्ततिः ।
पुरो बलानां सघनाम्बुशीकरः
शनैः प्रतस्थे सुरभिः समीरणः ॥ २८

जयारवक्ष्वेडितनादमूर्च्छितः
शरासनज्यातलवारणध्वनिः ।
असम्भवन् भूधरराजकुक्षिषु
प्रकम्पयन् गामवतस्तरे दिशः ॥ २९

अन्वयः । जैत्रः तरङ्गितालम्बितकेतुसन्ततिः सघनाम्बुशीकरः सुरभिः समीरणः रणाय त्वरां प्रदिशन्निव बलानां पुरः शनैः प्रतस्थे । वाच्य—जैत्रेण सन्ततिना, शीकरेण, सुरभिणा, समीरणेन × प्रदिशता इव × शनैः प्रतस्थे ॥ २८

अन्वयः । जयारवक्ष्वेडितनादमूर्च्छितः शरासनज्यातलवारणध्वनिः भूधरराजकुक्षिषु असम्भवन् (अत एव) गां प्रकम्पयन् दिशः अवतस्तरे । वाच्य—मूर्च्छितेन ध्वनिना × असम्भवता + प्रकम्पयता दिशः अवतस्तिरिरे ॥ २९

तत इति । ततः पताकिनीपतेः सेनापतेः अपवादेन आदेशेन । "अपवादोऽपि आदेशः" इति सज्जनः । निर्ह्रादवती शब्दवती महाचमूः सेना । युगान्तवातैरभिहता अत एव निनादं कुर्वती अम्भोनिधिवीचिसंहतिः अर्णवोर्मिसमूह इव चचाल ॥ २७

रणायेति । जेता एव जैत्रो जयनशीलः अनुकूल इत्यर्थः । जयतेः तृन्नन्तात् प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः । तरङ्गितं सञ्जाततरङ्गं यथा तथा आलम्बिता अवस्थिताः केतुसन्ततयो येन सः । सह घनैः सान्द्रैः अम्बुशीकरैः वर्त्तमानः सघनाम्बुशीकरः सुरभिः समीरणः वायुः रणाय त्वरां प्रदिशन्निव त्वरयन्निव बलानां सैन्यानां पुरः अग्रे शनैः प्रतस्थे प्रस्थितः ववौ इत्यर्थः ॥ २८

जयेति । जयारवैः बन्दिनां जयजयेति शब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितो वर्द्धितः शरासनज्यानां धनुर्गुणानां तलवारणानाञ्च

২৭। অনন্তর কিরাত-সেনাপতির আদেশে নিনাদকারিণী মহতী সেনা, যুগান্তবাতাভিহত সশব্দ সাগরোর্ম্মিমালার ন্যায় ধাবিত হইল।

২৮। তখন জয়ানুকূল তরঙ্গিত কেতুরাজি-সমালম্বী—ঘনাম্বুশীকরবাহী সুরভি সমীরণ যুদ্ধার্থ সত্বর হইয়াই যেন সৈন্যশ্রেণীর অগ্রে চলিতে লাগিল।

निशातरौद्रेषु विकाशतां गतैः
प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहैः
विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥

अन्वयः। निशातरौद्रेषु वनेसदां हेतिषु भिन्नविग्रहैः (अत एव) विकाशतां गतैः (अत एव) ककुभाम् अन्तरं प्रदीपयद्भिः इव रश्मिमतः मरीचिभिः विपुस्फुरे। वाच्य— × भिन्नविग्रहाः गताः × प्रदीपयन्तः × मरीचयः विपुस्फुरुः ॥ ३०

ध्वनिः भूधरराजकुक्षिषु गिरिगुहासु असम्भवन् अमान्,अवकाशम् अलभमान इत्यर्थः। अत एव गां भुवं प्रकम्पयन्। एतेन बलानां बाहुल्यमुक्तम्। दिशोऽवतस्तरे व्यानशे। "ऋतश्च संयोगादेर्गुणः" इति गुणः। अत्र मूर्च्छापदार्थस्य विशेषणगत्या असम्भवनहेतुत्वात् काव्यलिङ्गरूपम्। गिरिकुक्षिरूपापेक्षया ध्वनेराधेयस्य आधिक्योक्तेरधिकालङ्कारस्य, तेभ्यश्च इयमसम्भवन्निति व्यञ्जकं विना उत्थाप्यमानोपात्तमूर्च्छागुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा, तैरङ्गाङ्गिभावेन सङ्कीर्य्येत इति सङ्करः (?) ॥ २९

निशातेति। निशातास्तीक्ष्णा अत एव रौद्राः भीषणाश्च ये तेषु निशातरौद्रेषु। विशेष्यविशेषणयोरन्यतरविशेष्यत्वविवक्षायामिष्टत्वाद्विशेषणसमासः। वने सीदन्ति इति वनेसदां वनेचराणाम्। "सत्सूद्विष—" इत्यादिना क्विप्। "तत्पुरुषे कृति बहुलम्" इत्यलुक्। हेतिषु आयुधेषु। "हेतिः शस्त्रेऽपि पुंस्त्रियोः" इति केशवः। भिन्नविग्रहैः संक्रान्तमूर्त्तिभिः अत एव विकाशतां विस्तृततां गतैः अत एव ककुभां दिशामन्तरं अवकाशं प्रदीपयद्भिः प्रज्वालयद्भिरिव स्थितैरिति उत्प्रेक्षा। रश्मिमतः सूर्य्यस्य। "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मतुपो मकारस्य न वकारः। मरीचिभिः करैः। "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः। विपुस्फुरे बभासे। स्फुरतेर्भावे लिट् ॥ ३०

২৯। ধনুর্গুণ ও তলবারণ (ঢাল) সমূহের ধ্বনি বন্দিগণের জয় জয় শব্দে এবং সৈন্যগণের সিংহনাদে বর্দ্ধিত হইয়া গিরিগুহাভ্যন্তরেও অবকাশ না পাইয়া ভূতল প্রকম্পিত করত দিক্‌সমূহে পরিব্যাপ্ত হইল।

৩০। বনেচরগণের তীক্ষ্ণ ভীষণ আয়ুধপুঞ্জে প্রতিফলিত—সুতরাং সর্ব্বতোবিস্তৃত রবিকরনিকর, দিগ্‌দিগন্তর প্রদীপিত করিয়াই যেন প্রতিভাত হইতে লাগিল।

उदूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ।
वितत्य पक्षद्वयमाततं बभौ
विभुर्गणानामुपरीव मध्यगः ॥ ३१ ॥

सुगेषु दुर्गेषु च तुल्यविक्रमै-
र्जवादहंपूर्विकया यियासुभिः ।
गणैरविच्छेदनिरुद्धमाबभौ
वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ ३२ ॥

अन्वयः । उदूढवक्षःस्थगितैकदिङ्मुखः विकृष्टविस्फारितचापमण्डलः विभुः आयतं पक्षद्वयं वितत्य गणानां मध्यगः (अपि) उपरि (स्थितः) इव बभौ । वाच्य— × दिङ्मुखेन × मण्डलेन विभुना × मध्यगेन × बभे ॥ ३१

अन्वयः । सुगेषु दुर्गेषु च तुल्यविक्रमैः जवात् अहंपूर्विकया यियासुभिः गणैः अविच्छेदनिरुद्धं (अत एव) आकुलाकुलं वनं निरुच्छ्वासम् इव आबभौ । वाच्य— × अविच्छेदनिरुद्धेन आकुलाकुलेन वनेन निरुच्छ्वासेन × आबभे ॥ ३२

उदूढेति । उदूढेन उन्नतेन वक्षसा स्थगितम् आच्छादितम् एकम् । एकतरं दिङ्मुखं येन सः, विकृष्टम् आकृष्टम् अत एव विस्फारितं निर्घोषितं चापमण्डलं येन सः, विभुः शिवः आयतं विस्तृतं पक्षद्वयं पार्श्वद्वयं वितत्य स्वमहिम्ना व्याप्य । "पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु" इति वैजयन्ती । गणानां मध्यगो मध्यस्थोऽपि उपरि स्थित इव बभौ । सर्व्वोन्नतत्वात् तथा लक्षित इत्यर्थः ॥ ३१

सुगेष्विति । सुखेन दुःखेन च गच्छन्ति एषु इति सुगेषु सुगमेषु दुर्गेषु दुर्गमेषु च समविषमदेशेषु इत्यर्थः । सुदुरोरधिकरणार्थे डो वक्तव्यः, अत एव टिलोपः । तुल्यविक्रमैः लाघवात् समसञ्चारैः । जवादहंपूर्विकया अहमहमिकया । "अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्" इत्यमरः । यियासुभिः यातुमिच्छुभिः । यातेः सन्नन्तादुप्रत्ययः । गणैः प्रमथैः । मनोज्ञादित्वाद् वुञ्प्रत्ययः । पृषोदरादित्वाद् वृद्ध्यभावः । "गणाः प्रमथसङ्घाः" इति वैजयन्ती । अविच्छेदेन निरु-

৩১। শিব স্বপ্রভাবে সুবিস্তৃত পার্শ্বদ্বয় ব্যাপিয়া প্রমথগণের মধ্যস্থিত হইয়াও যেন তাহাদের উপরি অবস্থান করিতে লাগিলেন। তাঁহার উন্নত বক্ষঃস্থলে সম্মুখবর্ত্তী দিগ্‌দেশ আচ্ছাদিত হইয়া গেল। তিনি চাপমণ্ডল আকর্ষণপূর্ব্বক বিস্ফারিত করিলেন।

तिरोहितश्वभ्रनिकुञ्जरोधसः
समश्नुवानाः सहसातिरिक्तताम् ।
किरातसैन्यैरपिधाय रेचिता
भुवः क्षणं निम्नतयेव भेजिरे ॥ ३३ ॥

पृथूरुपर्य्यस्तबृहल्लताततिर्-
जवानिलाघूर्णितशालचन्दना ।
गणाधिपानां परितः प्रसारिणी
वनान्यवाञ्चीव चकार संहतिः ॥ ३४ ॥

अन्वयः । किरातसैन्यैः तिरोहितश्वभ्रनिकुञ्जरोधसः (अत एव) भुवः सहसा अतिरिक्तताम् समश्नुवानाः अपिधाय रेचिताः क्षणं निम्नतया भेजिरे इव । वाच्य—किरातसैन्यानि रोधसः भुवः समश्नुवानाः × रेचिताः भेजुः ॥ ३३

अन्वयः । पृथूरुपर्य्यस्तबृहल्लताततिः जवानिलाघूर्णितशालचन्दना परितः प्रसारिणी गणाधिपानां संहतिः वनानि अवाञ्चि इव चकार । वाच्य—× तया × चन्दनया प्रसारिण्या संहत्या वनानि अवाञ्चि चक्रिरे ॥ ३४

डम् अत एव आकुलाकुलम् आकुलप्रकारम् । "प्रकारे गुणवचनस्य" इति द्विर्भावः । वनं निरुच्छ्वासं निरुद्धप्राणमिव आबभौ इति उत्प्रेक्षा ॥ ३२

तिरोहितेति । किरातसैन्यैस्तिरोहितानि छन्नानि श्वभ्रनिकुञ्जरोधांसि गर्त्तकुञ्जतटानि यासां ताः, अत एव भुवः प्रदेशाः सहसा अतिरिक्तताम् उत्तानतां समश्नुवानाः आप्नुवत्यः । अपिधाय आच्छाद्य रेचिता रिक्तीकृताः मुक्ताः क्षणं निम्नतया गाम्भीर्य्येण भेजिरे इव प्राप्ता इवेत्युत्प्रेक्षा । सैन्यैः या भुवो व्याप्तास्ता उत्तानाः प्रतीयन्ते, तैर्मुक्तास्ता एव निम्नाः प्रतीयन्ते इत्यर्थः ॥ ३३

पृथ्विति । पृथुभिर्विशालैः ऊरुभिः सक्थिभिः पर्य्यस्ताः क्षिप्ताः बृहत्यो लताततयो यया सा, जवानिलेन वेगमारुतेन आघूर्णिताः भ्रमिताः

৩২। প্রমথ-সৈন্যগণ—সুগম দেশেই কি, আর দুর্গম দেশেই কি, সর্ব্বত্রই সমসঞ্চার : তাহারা বেগে অহমহমিকায় গমনেচ্ছু হইল। বনপ্রদেশ তাহাদের দ্বারা নিরন্তর নিরুদ্ধ হইয়া যেন নিরুচ্ছ্বাসবৎ একান্ত আকুল হইয়া পড়িল।

৩৩। কিরাত-সৈন্যে গর্ত্ত, কুঞ্জ ও তটদেশ আচ্ছাদিত হওয়ায় ভূভাগ সহসা উত্তানভাব ধারণ করিল, এবং আচ্ছাদন করিয়া সৈন্যগণ চলিয়া যাওয়ায় উহা যেন সেইক্ষণে নিম্নাকারে প্রতীত হইতে লাগিল।

ततः सदर्पं प्रतनुं तपस्यया
मदस्रुतिक्षाममिवैकवारणम्।
परिज्वलन्तं निधनाय भूभृतां
दहन्तमाशा इव जातवेदसम्॥ ३५॥
अनादरोपात्तधृतैकसायकं
जयेऽनुकूले सुहृदीव सस्पृहम्।
शनैरपूर्णप्रतिकारपेलवे
निवेशयन्तं नयने बलोदधौ॥ ३६॥

अन्वयः। ततः सदर्पं तपस्यया प्रतनुं (अत एव) मदस्रुतिक्षामम् एकवारणम् इव (पुनः) भूभृतां निधनाय परिज्वलन्तं (अत एव) आशा दहन्तं जातवेदसम् इव (स्थितम्)। वाच्य—×सदर्पः × प्रतनुः मदस्रुतिक्षामः एकवारण इव × परिज्वलन् आशा दहन् जातवेदा इव (स्थितः)॥ ३५

अन्वयः। (पुनश्च) अनादरोपात्तधृतैकसायकम् अनुकूले सुहृदि इव जये सस्पृहम् अपूर्णप्रतिकारपेलवे बलोदधौ शनैः नयने निवेशयन्तम्। वाच्य—×सायकः × सस्पृहः × निवेशयन्॥ ३६

शालाः सर्जतरवः चन्दनानि च यया सा। "प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः" इति शाश्वतः। परितः सर्वत्र प्रसारिणी प्रसरणशीला गणाधिपानां संहतिः समूहो वनानि अवाञ्चि न्युब्जानीव नीचानीव चकार इत्युत्प्रेक्षा। अवाञ्चति अधोभवति, अवपूर्वादञ्चतेः क्विप्। "स्यादवाङ्प्यधोमुखः" इत्यमरः॥ ३४

अथ अष्टभिः श्लोकैरर्जुनं विशेषयन् गणानां तदभियोगमाह—तत इत्यादि। ततः सदर्पं सगर्वं सान्तःसारं तपस्यया तपश्चर्यया। तपस्यतेः क्यजन्तात् स्त्रियामप्रत्यये टाप्। प्रतनुं कृशम् अत एव मदस्रुत्या मदक्षरणेन क्षामं कृशम्। "क्षायो मः" इति निष्ठातकारस्य मकारः। एकवारणम् एकाकिनं गजमिव स्थितम् इत्युपमा। पुनः भूभृतां राज्ञां निधनाय नाशाय परिज्वलन्तं तेजस्विनम् अत एव आशा दिशो दहन्तं जातवेदसम् अग्निमिव स्थितम्, इत्युपमालङ्कारः। "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः॥ ३५

৩৪। সর্ব্বত্র সঞ্চরণশীল প্রমথগণ বিশাল উরুদেশ দ্বারা বৃহৎ বৃহৎ লতাজাল বিপর্য্যস্ত করিতে লাগিল, তাহাদের বেগবায়ুতে শাল ও চন্দনতরু সকল ঘুরিতে লাগিল। তাহারা সমগ্র বনপ্রদেশ যেন নিম্ন করিয়া তুলিল।

निषण्णमापत्प्रतिकारकारणे
शरासने धैर्य्य इवानपायिनि।
अलङ्घनीयं प्रकृतावपि स्थितं
निवातनिष्कम्पमिवापगापतिम् ॥ ३७ ॥

उपेयुषीं बिभ्रतमन्तकद्युतिं
वधाददूरे पतितस्य दंष्ट्रिणः।
पुरः समावेशितसत्पशुं द्विजैः
पतिं पशूनामिव हूतमध्वरे ॥ ३८ ॥

अन्वयः। (पुनश्च) आपत्प्रतिकारकारणे अनपायिनि शरासने धैर्य्ये इव निषण्णं प्रकृतौ स्थितम् अपि अलङ्घनीयम् (अत एव) निवातनिष्कम्पम् आपगापतिम् इव (स्थितम्)। वाच्य—न निषण्ण× स्थितः अलङ्घनीयः निवातनिष्कम्पः आपगापतिः इव (स्थितः) ॥ ३७

अन्वयः। (पुनश्च) अदूरे पतितस्य दंष्ट्रिणः वधात् उपेयुषीम् अन्तकद्युतिं बिभ्रतं (तथाच)

अनादरेति। पुनश्च अनादरेण अवगणनया उपात्तो निषङ्गात् उद्धृतो धृतश्च एकः सायको येन तं तथानुकूले सुहृदीव जये सस्पृहं जयमिच्छन्तमित्यर्थः। पुनरपूर्णो न्यूनः प्रतिकारो बाणाहरणप्रत्यर्पणरूपो यस्य सः, अत एव पेलवो लघुः तस्मिन् अपूर्णप्रतिकारपेलवे बलोदधौ सेनासमुद्रे शनैरसम्भ्रमेण नयने दृष्टी निवेशयन्तमिति वीरस्वभावोक्तिः। बलम् उदधिरिवेति उपमितसमासः। "पेषंवासवाहनधिषु च" इत्युदकस्य उदादेशः ॥२६

निषण्णमिति। पुनश्च आपदां प्रतिकारस्य कारणे साधने अनपायिनि स्थिरे शरासने एवम्भूते धैर्य्ये इव निषण्णं स्थितं प्रकृतौ स्वभावे स्थितमपि निर्विकारमपीत्यर्थः। अत एव अलङ्घनीयम् अनतिक्रमणीयम्, अत एव निवातनिष्कम्पं वाताभावान्निश्चलम्। "निवातावाश्रयावातौ" इत्यमरः। आपगापतिं समुद्रमिव स्थितम् ॥ ३७

৩৫। ৩৬। এদিকে অর্জ্জুন তপস্যায় কৃশ; কিন্তু অন্তঃসারপূর্ণ,—যেন মদক্ষরণক্ষীণদেহ অদ্বিতীয় গজের ন্যায় অবস্থিত; অপিচ উপতিকুলের নাশের জন্য যেন দিগ্‌দাহোদ্যত তেজস্বী হুতাশনরূপে বিরাজিত। তিনি অবহেলার সহিত একটী শর নিষঙ্গ হইতে তুলিয়া ধারণ করিয়াছেন, অনুকূল সুহৃদের ন্যায় জয়ে স্পৃহয়ালু হইয়াছেন; আর বাণাহরণের প্রতীকার পূর্ণ না হওয়ায় খিন্নমনাঃ সেনাসমুদ্রে অসম্ভ্রমে দৃষ্টিপাত করিতেছেন, আপৎপ্রতীকারসম্বল অবিচল ধৈর্য্যের ন্যায় গাণ্ডীব ধনু অবলম্বন করিতেছেন এবং বিকারশূন্য হইলেও অন্যের অলঙ্ঘনীয়, সুতরাং যেন নিবাত-নিষ্কম্প জলধির ন্যায় অবস্থিত।

निजेन नीतं विजितान्यगौरवं
गभीरतां धैर्य्यगुणेन भूयसा।
वनोदयेनेव घनोरुवीरुधा
समन्धकारीकृतमुत्तमाचलम्॥ ३९॥

महर्षभस्कन्धमनूनकन्धरं
बृहच्छिलावप्रघनेन वक्षसा।
समुज्जिहीर्षुं जगतीं महाभरां
महावराहं महतोऽर्णवादिव॥ ४०॥

द्विजैः अध्वरे हुतं समाविशितसत्पशुं पशूनां पतिम् इव ( स्थितम् )। वाच्य— × बिभ्रत् × हुतः समाविशितसत्पशुः पशूनां पतिः इव ( स्थितः )॥ ३८

अन्वयः। ( पुनश्च ) निजेन भूयसा धैर्य्यगुणेन विजितान्यगौरवं ( यथा तथा ) गभीरतां नीतम ( अत एव ) घनोरुवीरुधा वनोदयेन समन्धकारीकृतम् उत्तमाचलम् इव ( स्थितम )। वाच्य— + नीतः + समन्धकारीकृतः उत्तमाचल इव ( स्थितः )॥ ३९

उपेयुषीमिति। पुनश्च अदूरे समीपे पतितस्य दंष्ट्रिणो वराहस्य। व्रीह्यादित्वादिनिप्रत्ययः। वधात् हेतोः उपेयुषीं प्राप्ताम् अन्तकस्येव यमस्येव द्युतिस्तां बिभ्रतं धारयन्तम्। तथाच द्विजैः ब्राह्मणैः अध्वरे यज्ञे। "यज्ञः सवोऽध्वरो यागः" इत्यमरः। हुतम् आहूतं, पुरः अग्रे समाविशितः स्थापितः सत्पशुः यज्ञियपशुः यस्य तं पशूणां पतिं रुद्रमिव स्थितम्॥ ३८

निजेनेति। पुनश्च निजेन नैसर्गिकेण भूयसा बहुलेन धैर्य्यमेव गुणस्तेन विजितम् अन्येषां गौरवं गाम्भीर्य्यं यस्मिन् कर्मणि तथा गभीरतां दुरवगाहत्वं नीतम्। अत एव घनाः सान्द्रा उरवश्च महत्यो वीरुधो लताश्च यस्मिन् तेन घनोरुवीरुधा वनोदयेन अरण्यप्रादुर्भावेण समन्धकारीकृतं दुरवगाहीकृतम् उत्तमाचलमिव स्थितम्। समन्ततोऽन्धकारो यस्य स इति विग्रहः॥ ३९

৩৮। ৩৮। তাঁহার অদূরে বরাহরূপী দানব পতিত রহিয়াছে, তদীয় বধসাধনে তিনি যেন অন্তকের দ্যুতি ধারণ করিয়াছেন; সুতরাং দ্বিজগণকর্তৃক যজ্ঞের নিমিত্ত অগ্রপ্রদত্ত যজ্ঞপশু বিশিষ্ট পশুপতির ন্যায় তাঁহাকে দেখা যাইতেছিল।

৩৯। তিনি আপনার অপরিসীম ধৈর্য্যগুণে অন্যের গৌরব অভিভূত করিয়া আপনাকে গাম্ভীর্য্যপদে উপনীত করিয়াছেন; সুতরাং সান্দ্র সুদীর্ঘ ব্রততীবহুল বনরাজি-বৈভবে দুরবগাহীকৃত উত্তমাচলের ন্যায় তিনি প্রতিভাত হইতেছিলেন।

हरिन्मणिश्याममुदग्रविग्रहं
प्रकाशमानं परिभूय देहिनः।
मनुष्यभावे पुरुषं पुरातनं
स्थितं जलादर्श इवांशुमालिनम् ॥ ४१ ॥

अन्वयः। महर्षभस्कन्धम् अनूनकन्धरं बृहच्छिलावप्रघनेन वक्षसा (उपलक्षितं) महतः अर्णवात् महाभरां जगतीं समुज्जिहीर्षुं महावराहम् इव (स्थितम्)। वाच्य—+स्कन्धः कन्धरः×समुज्जिहीर्षुः महावराह इव (स्थितः)॥ ४०

अन्वयः। (पुनश्च) हरिन्मणिश्यामम् उदग्रविग्रहं देहिनः परिभूय प्रकाशमानं जलादर्शे अंशुमालिनम् इव मनुष्यभावे स्थितं पुरातनं पुरुषम्। वाच्य—×श्यामः×विग्रहः×प्रकाशमानः अंशुमाली इव × स्थितः पुरातनः पुरुषः॥ ४१

महर्षभेति। महर्षभस्य महावृषभस्य स्कन्ध इव स्कन्धौ अंसौ यस्य तम्। उपमानपूर्वपदत्वात् उत्तरस्कन्धलोपः। "ऋषभो वृषभो वृषः" इत्यमरः। "स्कन्धो भुजशिरोऽंसोऽस्त्री" इत्यमरः। अनूनकन्धरं स्थूलग्रीवम्। "अथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः। बृहच्छिलावप्रं महाशिलातटं तद्वद् घनेन कठिनेन वक्षसा उपलक्षितम्। महाभरां दुष्टैरतिभारवतीं जगतीं महीं समुज्जिहीर्षुं दुष्टराजकार्णवात् समुद्धर्त्तुमिच्छुम्। अत एव महतोऽर्णवात् जगतीं समुज्जिहीर्षुम् उक्तविशेषणविशिष्टञ्च महावराहमिव स्थितम्। अर्थसाधर्म्यादियमुपमा न श्लेषः, शब्दमात्रसाधर्म्येण तस्य विधानादिति रहस्यम् ॥ ४०

हरिदिति। पुनश्च हरिन्मणिश्यामं मरकतमणिश्यामलम् उदग्रविग्रहमुदारमूर्त्तिं देहिनः सत्त्वान् परिभूय तिरस्कृत्य प्रकाशमानं, जलमेव आदर्शः मुकुरः तस्मिन्, अंशुमालिनं सूर्य्यमिव। मनुष्यभावे मनुष्यरूपे स्थितं पुरातनं पुरुषं, यो बदरीतपोवननिवासी नारायणसहचरो नरो नाम स एवायमित्यर्थः॥ ४१

৪০। তিনি মহাবৃষস্কন্ধ ও স্থূলগ্রীব; তাঁহার বক্ষঃস্থল মহাশিলাতটবৎ কঠিন; তিনি অতিভারবতী পৃথিবীর উদ্ধারসাধনে সমুৎসুক; সুতরাং মহার্ণব হইতে ধরণীর উদ্ধার-সাধনেচ্ছু মহাবরাহের ন্যায় অবস্থিত।

৪১। তিনি মরকতমণির ন্যায় শ্যামলাভ, তাঁহার উদার মূর্ত্তি দেহিগণকে অভিভূত করিয়া দেদীপ্যমান; জলরূপ মুকুরে যেমন অংশুমালী, সেইরূপ মনুষ্যরূপে অবস্থিত সেই পুরাণ পুরুষ (নর) তিনিই।

गुरुक्रियारम्भफलैरलङ्कृतं
गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं
तपात्यये तोयघना घना इव ॥ ४२ ॥

कुलकम् ।

यथास्वमाशंसितविक्रमाः पुरा
मुनिप्रभावक्षततेजसः परे ।
ययुः क्षणादप्रतिपत्तिमूढ़तां
महानुभावः प्रतिहन्ति पौरुषम् ॥ ४३ ॥

अन्वयः । गुरुक्रियारम्भफलैः अलङ्कृतं जगत्प्रमाथिनः प्रतापस्य गतिम् अनीलवाजिनं गणाः तपात्यये तोयघना घना इव ( महाचलं ) समासेदुः । वाच्य—+अलङ्कृतः × गतिः अनीलवाजी गणैः × तोयघनैः घनैः इव समासेदे ॥ ४२

अन्वयः । पुरा यथास्वम् आशंसितविक्रमाः परे मुनिप्रभावक्षततेजसः ( सन्तः ) अप्रतिपत्तिमूढ़तां ययुः । ( तथाहि ) महानुभावः पौरुषं प्रतिहन्ति । वाच्य—×विक्रमैः परैः—तेजोभिः × मूढ़ता ययै । महानुभावेन पौरुषं प्रतिहन्यते ॥ ४३

गुर्विति । गुरुभिः क्रियारम्भाणां फलैः अलङ्कृतं सफलकर्मारम्भमित्यर्थः । जगत्प्रमाथिनो जगद्विजयिनः प्रतापस्य तेजसो गतिं स्थानमतोऽस्य बहूनामेकलक्ष्यत्वञ्च युज्यते इति सन्दर्भाभिप्रायः । पूर्वोक्तविशेषणविशिष्टम् अनीलवाजिनं श्वेताश्वम् अर्जुनं गणाः प्रमथादयः तपात्यये तोयघनाः तोयभरिता वार्षिका इत्यर्थः, घना मेघा इव, महाचलमिति शेषः । समासेदुः अवापुरित्यर्थः ॥ ४२

यथास्वमिति । पुरा पूर्वं स्वं स्वम् अनतिक्रम्य यथास्वम् अहमेवैनं जेष्यामीति आशंसिताः काङ्क्षिताः कथिता वा विक्रमा यैः ते परे शत्रवः मुनिप्रभावात् क्षततेजसो हतप्रभावाः सन्तः अप्रतिपत्तिमूढ़तां मोहान्धतां ययुः । तथाहि महानुभावोऽतिप्रतापः पौरुषं पुरुषस्य चेष्टितं प्रतिहन्ति नाशयति ॥ ४३

৪২। তাঁহার কর্ম্মারম্ভ কথনও বিফল হইবার নহে। তিনি বিশ্ববিজয়ী তেজের আধারস্থল। যেমন বর্ষাকালীন মেঘদল মহাচলে উপস্থিত হয়, তেমনি প্রমথসেনাগণ তখন সেই অর্জ্জুনের নিকট উপস্থিত হইল।

ततः प्रजह्रे सममेव तत्र तै-
रपेक्षितान्योन्यबलोपपत्तिभिः।
महोदयानामपि सङ्घवृत्तितां
सहायसाध्याः प्रदिशन्ति सिद्धयः ॥ ४४ ॥

किरातसैन्यादुरुचापनोदिताः
समं समुत्पेतुरुपात्तरंहसः।
महावनादुन्मनसः खगा इव
प्रवृत्तपत्रध्वनयः शिलीमुखाः ॥ ४५ ॥

अन्वयः। ततः अपेक्षितान्योन्यबलोपपत्तिभिः तैः तत्र समं प्रजह्रे। (तथाहि) सहायसाध्याः सिद्धयः महोदयानाम् अपि सङ्घवृत्तितां प्रदिशन्ति। वाच्य—बलोपपत्तयः ते। प्रजह्रुः साध्याभिः सिद्धिभिः + वृत्तिता प्रदिश्यते ॥ ४४

अन्वयः। उरुचापनोदिताः उपात्तरंहसः प्रवृत्तपत्रध्वनयः शिलीमुखाः महावनात् उन्मनसः खगाः इव किरातसैन्यात् समं समुत्पेतुः। वाच्य—नोदितैः उपात्तरंहोभिः + ध्वनिभिः शिलीमुखैः + उन्मनोभिः खगैः इव + समुत्पेते ॥ ४५

तत इति। ततः एकैकस्य अशक्त्या अपेक्षिता वाञ्छिता अन्योन्यबलोपपत्तिः अन्योन्यशक्त्यवष्टम्भः यैः तैः प्रमथैः तत्र अर्जुने। क्रियाधारत्वात् सप्तमी। समं युगपदेव प्रजह्रे प्रहृतम्। भावे लिट्। तथाहि सहायसाध्याः सिद्धयः कार्य्यसिद्धयो महोदयानां महानुभावानामपि। सङ्घेन वृत्तिः व्यापारो येषां तेषां भावस्तत्ता तां सङ्घवृत्तितां सम्भूयकारितां प्रदिशन्ति। अतो गणानामपि सम्भूयकारित्वं न दोष इति भावः ॥ ४४

किरातेति। उरुभिः बृहद्भिः चापैः नोदिताः प्रक्षिप्ता उपात्तरंहसः

৪৩। পূর্ব্বে শত্রুগণের প্রত্যেকেই আস্ফালন করিয়াছিল যে, আমিই গিয়া উহাকে জয় করিব; কিন্তু মুনিবেশী পার্থের প্রভাবে সকলেই এক্ষণে হতপ্রভাব হইয়া মোহান্ধ হইল। বস্তুতঃ মহানুভবতায় পুরুষকার নষ্ট হইয়া থাকে। মহানুভব অর্জ্জুনকে দেখিয়া প্রমথগণেরও তাহাই হইল।

৪৪। অনন্তর প্রমথগণ পরস্পর পরস্পরের শক্তি আশ্রয় করিয়া একযোগে অর্জ্জুনের প্রতি বাণ নিক্ষেপ করিতে লাগিল। (বস্তুতঃ) সহায়সাধ্য সিদ্ধি সকল মহানুভবদিগকেও সমবেত ভাবে কার্য্য করিতে প্রেরণ করিয়া থাকে। (সুতরাং প্রমথগণেরও এই সমবেত চেষ্টা দোষাবহ নহে)।

गभीररन्ध्रेषु भृशं महीभृतः
प्रतिस्वनैरुन्नमितेन सानुषु।
धनुर्निनादेन जवादुपेयुषा
विभिद्यमाना इव दध्वनुर्दिशः ॥ ४६ ॥

विधूनयन्ती गहनानि भूरुहां
तिरोहितोपान्तनभो दिगन्तरा।
महीयसी वृष्टिरिवानिलेरिता
रवं वितेने गणमार्गणावलिः ॥ ४७ ॥

अन्वयः। गभीररन्ध्रेषु महीभृतः सानुषु प्रतिस्वनैः उन्नमितेन जवात् उपेयुषा धनुषां निनादेन दिशः विभिद्यमाना इव दध्वनुः। वाच्य— + दिग्भिः विभिद्यमानाभिः इव दध्वने ॥ ४६

अन्वयः। भूरुहां गहनानि विधूनयन्ती तिरोहितोपान्तनभोदिगन्तरा गणमार्गणावलिः अनिलेन ईरिता महीयसी वृष्टिः इव रवं वितेने। वाच्य— + विधूनयन्त्या दिगन्तरया गणमार्गणावल्या + ईरितया महीयस्या वृष्ट्या इव रवो वितेने ॥४७

प्राप्तवेगाः प्रवृत्तपत्रध्वनयः सञ्जातपक्षस्वनाः शिलीमुखा बाणाः। महावनात् उन्मनसः क्वापि गन्तुमुत्सुकाः तथा उक्तविशेषणविशिष्टाश्च खगाः पक्षिण इव किरातसैन्यात् समं समन्ततः समुत्पेतुः ॥ ४५ ॥

गभीरेति। गभीररन्ध्रेषु गम्भीरगह्वरेषु महीभृतः सानुषु ये प्रतिस्वनाः तैः भृशमुन्नमितेन उत्थापितेन दीर्घीकृतेन जवादुपेयुषा प्राप्तवता धनुषां निनादेन दिशो विभिद्यमाना विदीर्यमाणा इव दध्वनुः ध्वनिं चक्रुः ॥ ४६

विधूनयन्तीति। भूरुहां गहनानि वनानि। "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः। विधूनयन्ती कम्पयन्ती तिरोहितानि छादितानि उपान्तानि प्रान्तानि नभोऽन्तरीक्षं दिगन्तराणि च यया सा गणमार्गणावलिः प्रमथशरसंहतिः अनिलेन वायुना ईरिता प्रेरिता महीयसी वृष्टिरिव रवं वितेने विस्तारयामास ॥ ৪৭

৪৫। বৃহৎ বৃহৎ ধনু দ্বারা নিক্ষিপ্ত পক্ষশব্দযুত বেগশালী শরসকল মহাবন হইতে কোথাও গমনোৎসুক পক্ষিসমূহের ন্যায় কিরাতসৈন্যশ্রেণী হইতে চতুর্দ্দিকে উৎপতিত হইতে লাগিল।

৪৬। পর্ব্বতের গভীর গহ্বরশালী সানুসমূহে যে সকল প্রতিধ্বনি উত্থিত হইতে লাগিল, বেগাগত ধনুর্নিনাদ তাহাতে অতিমাত্র উত্থিত হইয়া দিঙ্মণ্ডল বিদারণ করিয়াই যেন শব্দ করিতে লাগিল।

त्रयीमृतूनामनिलाशिनः सतः
प्रयाति पोषं वपुषि प्रहृष्यतः।
रणाय जिष्णोर्विदुषेव सत्वरं
घनत्वमीये शिथिलेन वर्मणा ॥ ४८ ॥

पतत्सु शस्त्रेषु वितत्य रोदसी
समन्ततस्तस्य धनुर्दुधूषतः।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥ ४९ ॥

अन्वयः। ऋतूनां त्रयीम् अनिलाशिनः सतः (तथापि) रणाय प्रहृष्यतः जिष्णोः वपुषि पोषम् प्रयाति (सति) शिथिलेन वर्म्मणा विदुषा इव सत्वरं घनत्वम् ईये। वाच्य—+शिथिलं वर्म्म विद्वदिव+घनत्वम् इयाय ॥४८

अन्वयः। शस्त्रेषु रोदसी समन्ततः वितत्य पतत्सु (सत्सु) धनुः दुधूषतः तस्य (सम्बन्धिनी) भीषणा विनिपातशंसिनी दृष्टिः उल्का इव बलेषु सरोषं पपात। वाच्य—+भीषणया...शंसिन्या दृष्ट्या उल्कया इव+पेते ॥ ४९

त्रयीमिति। ऋतूनां त्रयीं षण्मासान्। "कालाध्वनोरत्यन्तसंयोगे" द्वितीया। अनिलाशिनो वायुभक्षकस्य, कृशस्य इत्यर्थः। सतः तथापि रणाय रणं कर्त्तुं प्रहृष्यतः उत्सहमानस्य "क्रियार्थोप" इत्यादिना चतुर्थी। जिष्णोः अर्जुनस्य वपुषि पोषम् उपचयं प्रयाति गच्छति सति शिथिलेन प्रथममिति शेषः। वर्म्मणा कवचेन विदुषा इव अनन्तरकरणीयं जानता इवेति उत्प्रेक्षा। सत्वरं शीघ्रं घनत्व दृढ़त्वमीये प्राप्तम्, अन्यथानुपयोगादिति भावः। इणः कर्मणि लिट् ॥ ४८

पतत्स्विति। शस्त्रेषु रोदसी द्यावापृथिव्यौ। "द्यावापृथिव्यौ रोदस्यौ" इत्यमरः। समन्ततो वितत्य पतत्सु सत्सु धनुः दुधूषतः कम्पयितुमिच्छतः, आस्फालयत इत्यर्थः। धूञः सन्नन्तात् शतृप्रत्ययः। "स्वरतिसूतिसूयति-धूञूदितो वा" इति विकल्पादिड़भावः। तस्य अर्जुनस्य सम्बन्धिनी भीष-

৪৭। প্রমথগণের শররাজি বৃক্ষবন বিকম্পিত করিয়া—প্রান্তার্ত্তী নভোমণ্ডল ও দিগন্তরাল আচ্ছাদিত করিয়া বায়ুপ্রেরিত মহীয়সী বৃষ্টির ন্যায় শব্দ করিতে লাগিল।

৪৮। অর্জ্জুন ছয় মাস যাবৎ বায়ুভক্ষণে কৃশ হইয়াছেন, তথাচ যুদ্ধার্থ তাঁহার প্রহর্ষ হইল,—দেহ উপচিত হইয়া উঠিল। সুতরাং তদীয় পূর্ব্ব শিথিল বর্ম্ম, বিজ্ঞজনের ন্যায় সত্বর সুদৃঢ়ভাব প্রাপ্ত হইল।

দিশঃ সমূহন্নিব বিক্ষিপন্নিব
প্রভাং রবেরাকুলয়ন্নিবানিলম্।
মুনিশ্চচাল ক্ষয়কালদারুণঃ
ক্ষিতিং সশৈলাং চলয়ন্নিবেষুভিঃ॥ ৫০ ॥

বিমুক্তমাশংসিতশত্রুনির্জ্জয়ৈ-
রনেকমেকাবসরং বনেচরৈঃ।
স নির্জ্জঘানায়ুধমন্তরা শরৈঃ
ক্রিয়াফলং কাল ইবাতিপাতিতঃ॥ ৫১ ॥

অন্বয়ঃ। ক্ষয়কালদারুণঃ মুনিঃ ইষুভিঃ দিশঃ সমূহন্ ইব রবেঃ প্রভাং বিক্ষিপন্ ইব (তথা) অনিলম্ আকুলয়ন্ ইব সশৈলাং ক্ষিতিং চলয়ন্ ইব চচাল। বাচ্য—কালেন ইব দারুণেন মুনিনা + সমূহতা ইব + বিক্ষিপতা ইব + আকুলয়তা ইব (তথা) চলয়তা ইব চেলে॥ ৫০

অন্বয়ঃ। আশংসিতশত্রুনির্জ্জয়ৈঃ বনেচরৈঃ একাবসরং বিমুক্তম্ অনেকম্ আয়ুধং স ক্রিয়াফলম্ অতিপাতিতঃ কালঃ ইব অন্তরা শরৈঃ নিজঘান। বাচ্য—বিমুক্তম্ অনেকম্ আয়ুধং তেন ক্রিয়াফলম্ অতিপাতিতেন কালেন ইব নিজঘ্নে॥ ৫১

যত ইতি ভীষণা। নন্দ্যাদিত্বাল্লযুঃ। বিনিপাতশংসিনী বিনাশসূচিকা দৃষ্টিঃ উক্তবিশেষণা উল্কেব বলেষু সরোষং যথা তথা পপাত॥ ৪৯

দিশ ইতি। ক্ষয়কালঃ কল্পান্তকাল ইব। "সংবর্ত্তঃ প্রলয়ঃ কল্পঃ ক্ষয়ঃ কল্পান্ত ইত্যপি" ইত্যমরঃ। দারুণো রৌদ্রঃ, মুনিঃ অর্জুনঃ ইষুভিঃ বাণৈঃ দিশঃ সমূহন্নিব একত্র সমাহরন্ ইব অন্যথা তাসাং পারদর্শনং ন স্যাদিতি ভাবঃ। রবেঃ প্রভাং বিক্ষিপন্ ইব অন্যথা সা কথং ন দৃশ্যত ইতি ভাবঃ। তথা অনিলং বায়ুমাকুলয়ন্ ইষুভিঃ অন্তরালে আঘূর্ণয়ন্ ইব তস্য তথা গতিবিঘাতাদিতি ভাবঃ। সশৈলাং ক্ষিতিং চলয়ন্নিব কম্পয়ন্নিব তথা সঙ্ক্ষোভাদিতি ভাবঃ। চচাল গতিমকরোৎ। সর্বত্র ইবশব্দঃ উৎপ্রেক্ষায়াম্॥ ৫০

৪৯। ভূতল ও নভঃস্থলের চারিদিক্ ব্যাপিয়া শরসকল পতিত হইতে লাগিল, তখন ধনুরাস্ফালন-সমুৎসুক অর্জ্জুনের ভয়ঙ্করী সংহারসূচিকা দৃষ্টি ভীষণ উল্কার ন্যায় সরোষে প্রমথসৈন্যোপরি পতিত হইল।

৫০। কল্পান্তকালের ন্যায় মুনিবেশী দারুণ সেই অর্জ্জুন—দিক্‌সমূহ একত্র সমাহৃত করিয়াই যেন, রবির প্রভা তিরস্কৃত করিয়াই যেন, বায়ুতরঙ্গ আলোড়িত, অপিচ সপর্ব্বতা ধরা কম্পিত করিয়াই যেন চলিতে লাগিলেন।

गतैः परेषामविभावनीयतां
निवारयद्भिर्विपदं विदूरगैः।
भृशं बभूवोपचितो बृहत्फलैः
शरैरुपायैरिव पाण्डुनन्दनः॥ ५२॥

दिवः पृथिव्याः ककुभां नु मण्डलात्
पतन्ति बिम्बादुत तिग्मतेजसः?
सकृद्विकृष्टादथ कार्मुकान्मुनेः
शराः शरीरादिति तेऽभिमेनिरे॥ ५३॥

अन्वयः।—पाण्डुनन्दनः परेषाम् अविभावनीयतां गतैः विपदं निवारयद्भिः विदूरगैः बृहत्फलैः शरैः उपायैः इव भृशम् उपचितः बभूव। वाच्य—पाण्डुनन्दनेन+उपचितेन बभूवे॥ ५२

अन्वयः।—शराः दिवः पृथिव्याः ककुभां मण्डलात् नु उत तिग्मतेजसः बिम्बात् अथ सकृत् विकृष्टात् कार्मुकात् मुनेः शरीरात् (वा पतन्ति) इति ते अभिमेनिरे। वाच्य—शरैः+पत्यते, तैः अभिमेने॥ ५३

विमुक्तमिति। आशंसितः काङ्क्षितः शत्रुनिर्जयो यैः तैः। अहमहमिकया शत्रुं विजिगीषद्भिः इत्यर्थः। वनेचरैः एकावसरं समकालम्। अत्यन्तसंयोगे द्वितीया। विमुक्तं प्रयुक्तमनेकम् आयुधम् जातावेकवचनम्। सोऽर्जुनः क्रियाफलम् अतिपातितोऽतिक्रान्तः काल इव अतिक्रान्तकालस्य कर्मणो निष्फलत्वादिति भावः। अन्तरा मध्ये शरैः निजघान॥ ५१

गतैरिति। पाण्डुनन्दनोऽर्जुनः परेषामविभावनीयतां लघुप्रयोगादन्यत्र गूढ़प्रयोगाच्च अदृश्यताम् अप्रकाश्यतां च गतैः विपदम् अनर्थं निवारयद्भिः विदूरगैः दूरलक्ष्यगैः परमण्डलप्रविष्टैश्च बृहत्फलैः आयताग्रैः महालाभैश्च। "फलं बाणाग्रलाभयोः" इति शाश्वतः। शरैः उपायैः सामादिभिः इव भृशमुपचितः प्रवृद्धो बभूव। अत्र शब्दमात्रसाधर्म्यात् प्रकृताप्रकृतश्लेषः। उपमा इति केचित्॥ ५२

दिव इति। शराः दिवोऽन्तरीक्षात् पृथिव्या भूगोलाद्वा ककुभां मण्डलात् नु दिशां मण्डलाद्वा, उत तिग्मतेजसोऽर्कस्य बिम्बात् मण्डलाद्वा?

৫১। ক্রিয়াফলাতিপাতী কালের ন্যায় সেই অর্জ্জুন তখন শত্রুজয়াকাঙ্ক্ষী বনেচরগণের যুগপৎ নিক্ষিপ্ত বহু শর স্বীয় শর দ্বারা মধ্যপথেই ছেদন করিলেন।

৫২। পাণ্ডুনন্দন অর্জ্জুন সামাদি উপায়সমূহের ন্যায় পরের অনভিভবনীয়, বিপন্নিবারক, দূরগামী, বৃহৎফলশালী শরসকল দ্বারা অতিমাত্র বর্দ্ধিত হইয়া উঠিলেন।

गणाधिपानामविधाय निर्गतैः
परासुतां मर्म्मविदारणैरपि।
जवादतीये हिमवानधोमुखैः
कृतापराधैरिव तस्य पत्रिभिः॥ ५४॥

द्विषां क्षतीर्याः प्रथमे शिलीमुखाः
विभिद्य देहावरणानि चक्रिरे।
न तासु पेते विशिखैः पुनर्मुने-
ररुन्तुदत्वं महतां ह्यगोचरः॥ ५५॥

अन्वयः। मर्म्मविदारणैः अपि गणाधिपानां परासुताम् अविधाय निर्गतैः तस्य पत्रिभिः कृतापराधैः इव अधोमुखैः (सद्भिः) जवात् हिमवान् अतीये। वाच्य—मर्म्मविदारणाः+निर्गताः+पत्रिणः कृतापराधाः अधोमुखाः+हिमवन्तम् अतीयुः॥ ५४

अन्वयः। प्रथमे शिलीमुखाः द्विषां देहावरणानि विभिद्य याः क्षतीः चक्रिरे, तासु पुनः मुनेः विशिखैः न पेते। हि (तथाहि) अरुन्तुदत्वं महताम् अगोचरः। वाच्य—शिलीमुखैः याः क्षतयः चक्रिरे विशिखाः न पेतिरे॥ ५५

अथवा सकृद्विकृष्टात् कार्मुकाद्वा मुनेः शरीरात् वा पतन्तीति ते गणा अभिमेनिरे ज्ञातवन्तः। अन्यथा कथमसौ विश्वमन्तर्धाय शराः सम्भाव्यन्त इति भावः। अत्र सर्वतः शरसम्पातदर्शनात् सम्भावनया पृथिव्यादीनाम् अन्यतमस्य अपादानत्वोत्प्रेक्षा। सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नुशब्दादयस्तु संशये॥ ५३

गणेति। मर्म्मविदारणैः अपि मर्म्मस्थानानि एव विदारयद्भिः अपीत्यर्थः। गणाधिपानां परासुतां मरणमविधाय अकृत्वा निर्गतैः तेषाममर्त्त्यत्वादिति भावः। तस्य मुनेः पत्रिभिः शरैः कृतापराधैः इव स्वामिकार्य्याकरणात् सापराधैः इवेत्युत्प्रेक्षा। अधोमुखैः सद्भिः जवात् हिमवान् अतीये अतिचक्रमे, तत्र प्रविष्टमित्यर्थः, लज्जितस्य क्वचिन्निलयनमुचितमिति भावः॥५४

द्विषामिति। प्रथमे प्रथममुक्ता इत्यर्थः। शिलीमुखाः मुनिशराः द्विषां देहावरणवर्म्माणि विभिद्य याः क्षतीः प्रहारान् चक्रिरे तासु क्षतिषु

৫৩। প্রমথগণ মনে করিল—শরসকল কি অন্তরীক্ষ বা পৃথিবী হইতে অথবা অর্কমণ্ডল হইতে কিংবা মুনির সকৃৎ সমাকৃষ্ট কার্ম্মুক বা দেহ হইতেই পতিত হইতেছে!

৫৪। অর্জ্জুনের শরসমূহ মর্ম্মবিদারক হইলেও গণাধিপতিগণের প্রাণসংহার না করিয়া নির্গত হওয়ায় যেন (প্রভুর কার্য্য করিতে না পারায়) কৃতাপরাধের ন্যায় অধোমুখে সবেগে হিমাচল অতিক্রম করিয়া চলিল।

समुज्झिता यावदराति निर्य्यती
सहैव चापात् मुनिबाणसंहति:।
प्रभा हिमांशोरिव पङ्कजावलिं
निनाय सङ्कोचमुमापतेश्चमूम्॥ ५६॥

अजिह्ममोजिष्ठममोघमक्लमं
क्रियासु बह्वीषु पृथङ्नियोजितम्।
प्रसेहिरे सादयितुं न सादिता:
शरौघमुत्साहमिवास्य विद्विष:॥ ५७॥

अन्वय:। यावदराति (यथा तथा) समुज्झिता चापात् सह एव निर्य्यती मुनिबाणसंहति: उमापते: चमूं हिमांशो: प्रभा पङ्कजावलिम् इव सङ्कोचं निनाय। वाच्य—+समुज्झितया +निर्य्यत्या मुनिबाणसंहत्या। चमू: प्रभया पङ्कजावलि: इव सङ्कोचं निन्ये॥ ५६

पुन: पश्चात् प्रयुक्तै: मुने: विशिखै: न पेते न पिष्टपेषणदोषापातादिति भाव:। तथाहि अरुन्तुदत्वं पीड़ितपीड़नं सतामगोचरो हि। सन्त: पीड़ितपीड़ां न कुर्वन्ति इत्यर्थ:। "न हन्याद्व्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधस्मरणादिति भाव:। अरु: व्रणं तुदतीति अरुन्तुद:। "व्रणोऽस्त्रियामीर्म्ममरु:" इत्यमर:। "विध्वरुषोस्तुद:" इति खश्प्रत्यय:। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागम:॥ ५५

समुज्झितेति। यावन्तोऽरातयो यावदराति "यावदवधारणे" इति अव्ययीभाव:। यावदराति यथा तथा समुज्झिता अरातिसमसंख्यया मुक्ता मुनिचापात् सह सम्भूय एव निर्यती निष्क्रामन्ती। तादृक् तस्य कौशलमिति भाव:। यातेः शतरि ङीप्। मुनिबाणसंहतिरुमापते: चमूं हिमांशो: प्रभा पङ्कजावलिम् इव सङ्कोचं निनाय प्रापयामास। दुहादिपाठाद्द्वयतिद्विकर्म्मक:॥ ५६

৫৫। অর্জ্জুনের প্রথম প্রক্ষিপ্ত শরসকল শত্রুদলের দেহাবরণ সমূহ ভেদ করিয়া যে সকল ক্ষত উৎপাদন করিয়াছিল, পরে প্রক্ষিপ্ত শরসমূহ পুনরায় সেই সকল ক্ষত স্থানে পতিত হইল না। (বস্তুত:) অরুন্তুদত্ব মহদ্ ব্যক্তিগণের অগোচরীভূত।

৫৬। হিমাংশুর প্রভা যেমন পঙ্কজাবলীকে সঙ্কুচিত করে, তেমনি সেই মুনিবেণী অর্জ্জুনের শত্রু-সংখ্যানুপাতে নির্মুক্ত শরশ্রেণী তদীয় ধনু হইতে যেন সমুৎপন্ন হইয়াই গমনপূর্ব্বক উমাপতির চমূদিগকে সঙ্কুচিত করিয়া তুলিল।

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषुमयूखमालिनम्।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत् प्रजा इव ॥ ५८

अन्वयः। अजिह्मम् ओजिष्ठम अमोघम् अक्लमं बह्वीषु क्रियासु पृथक् नियोजितम् अस्य शरौघम् उत्साहम् इव मादिताः विद्विषः सादयितुं न प्रसेहिरे। वाच्य—अजिह्मः ओजिष्ठः अमोघः अक्लमः + नियोजितः शरौघः उत्साह इव मादितैः विद्विड्भिः + न प्रसेहे ॥ ५७

अन्वयः। अनेकदेशगाः शिवध्वजिन्यः उग्रेषुमयूखमालिनम् एकदेशस्थं (मुनिम्) अर्कं प्रजा इव युगपत् प्रतियोधम् अग्रतः स्फुरन्तं निदध्युः। वाच्य—अनेकदेशगाभिः शिवध्वजिनीभिः + माली + देशस्थः (मुनिः) चर्कः प्रजाभिः इव + स्फुरन् निदध्ये ॥ ५८

अजिह्ममिति। अजिह्मं स्वरूपतो गत्या वा अवक्रम्। अन्यत्र तु जिह्मस्थानप्रवृत्तो न भवतीति अजिह्मः तम्। ओजिष्ठम् ओजस्विनं, सारवत्तमं तजिष्ठं च। उभयत्रापि ओजस्विशब्दाद्विन्नन्तादिष्ठन् "विन्मतोर्लुक्"इति लुक् टिलोपश्च। अमोघम् अवन्ध्यम् अक्लमं निरन्तरव्यापारेऽपि अक्लान्तं बह्वीषु क्रियासु छेदनभेदनपातनादि-कर्मसु पृथग्भेदेन नियोजितं कर्मानुगुण्येन विनियुक्तमित्यर्थः। अस्य मुनेः शरौघम् उत्साहम् इव वीरस्थायिभावभूतं प्रयत्नविशेष-मिवेत्यर्थः। मादिताः कर्षिताः विद्विषः शत्रवः सादयितुं प्रतिकर्त्तुं न प्रसेहिरे न शेकुः। तस्य उत्साहवत् एव शरवर्षं दुर्धर्षञ्च अभूत् इति भावः ॥ ५७

शिवेति। अनेकदेशगा नानादेशस्थाः शिवध्वजिन्यो हरसेनाः। उग्रेषवो मयूखा इवेति उपमितसमासः। अन्यत्र तु उग्रेषव इव मयूखा इति। मयूरव्यंसकादित्वात् समासः। तेषां माला अस्यास्तीति तत्र उग्रेषुमयूखमालिनम्। व्रीह्यादित्वादिनिः। एकदेशस्थम् एकत्रैव स्थितं मुनिम् अर्कं प्रजा इव युगपत् प्रतियोधं योधं योधं प्रति। "अव्ययं विभक्ति" इत्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः। अग्रतः स्फुरन्तं निदध्युः ददृशुः। यथा एकोऽर्कं एकत्रैव स्थितोऽपि नानादेशस्थानामपि प्रतिपुरुषं मम एवाग्रे वर्त्तत इति युगपत् प्रतीयते तद्वत् बाणवर्षी मुनिः अपि प्रतियोधं तथा एव प्रत्यभात् इत्यर्थः ॥ ५८

৫৭। অর্জ্জুনের শরসমূহ উৎসাহবৎ সরল, ওজস্বী, অমোঘ, অক্লান্ত ও বহু বিভিন্ন ক্রিয়ায় ভিন্ন ভিন্ন ভাবে নিয়োজিত ; প্রহার-ক্লিষ্ট শত্রুপক্ষ ঐ সকল শর সহ্য করিতে পারিল না।

मुनेः शरौघेण तदुग्ररंहसा
बलं प्रकोपादिव विष्वगायता।
विधूनितं भ्रान्तिमियाय सङ्गिनीं
महानिलेनेव निदाघजं रजः॥ ५९॥

तपोबलेनैष विधाय भूयसी-
स्तनूरदृश्याः स्विदिषूनिरस्यति।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम्?॥ ६०॥

अन्वयः। प्रकोपात् विष्वक् आयता उग्ररंहसा मुनेः शरौघेण महानिलेन निदाघजं रजः इव विधूनितं तत् बलं सङ्गिनीं भ्रान्तिम् इयाय। वाच्य—+निदाघजेन रजसा इव विधूनितेन तेन बलेन सङ्गिनी भ्रान्तिः ईये॥ ५९

अन्वयः। एष तपोबलेन भूयसीः अदृश्याः तनूः विधाय इषून् निरस्यति स्वित्? (अथवा) अमुष्य (मुनेः) मायाविहतं स्वम् (इव) आयुधं प्रतीपम् आगत्य नः निहन्ति किमु? वाच्य—एतेन +- इषवः निरस्यन्ते। मायाविहतेन स्वेन आयुधेन+निहन्यते॥ ६०

मुनेरिति। प्रकोपात् अमर्षात् इव विष्वक् समन्तात् आयता आगच्छता उग्ररंहसा तीव्रवेगेन मुनेः शरौघेण उक्तविशेषणेन महानिलेन वात्यया निदाघजं ग्रैष्मं रज इव विधूनितं व्याकुलं तद्बलं प्रमथानां सैन्यं, सङ्गिनीम् अनुबन्धिनीम्, अविच्छिन्नामिति यावत्। भ्रान्तिमनवस्थानम् इयाय प्राप॥ ५९

अथ त्रिभिर्विशेषकमाह—तप इत्यादिना। एष मुनिः तपोबलेन तपःसामर्थ्येन भूयसीः बह्वीः अदृश्याः तनूः आत्मनः शरीराणि विधाय सृष्ट्वा इषूनिरस्यति स्वित्? क्षिपति किम्? अथवा अमुष्य अस्य मुनेर्मायया विहतं प्रतिहतं स्वं स्वकीयम् इव आयुधं प्रतीपं प्रतिकूलम् आगत्य, प्रत्यावृत्येत्यर्थः। नोऽस्माकं निहन्ति किमु? "जासिनिप्रहण" इत्यादिसूत्रेण कर्म्मणि षष्ठी, शेषाविवक्षायान्तु द्वितीया॥ ६०

৫৮। জনগণ যেমন প্রত্যেকে দিবাকরকে স্ব স্ব অগ্রে স্ফুরিত হইতে দেখে, সেইরূপ সেই নানাদেশস্থ শিবসৈনিকেরা তীক্ষ্ণ ইষুরূপ ময়ূখমালাশালী, একদেশস্থ অর্জ্জুনকে যুগপৎ প্রত্যেক যোদ্ধার সম্মুখে দেদীপ্যমান হইতে দেখিল।

৫৯। যেমন অতি প্রবল বাত্যা দ্বারা ব্যাহত হইয়া নিদাঘজনিত পরাগ ঘূর্ণিত হইতে থাকে, তেমনি কোপভরে যেন চতুর্দ্দিক্ হইতে আগত তীব্রবেগশালী পার্থ-শররাজি দ্বারা প্রমথবল ব্যাহত হইয়া নিরন্তর বিভ্রান্ত হইতে লাগিল।

हृता गुणैरस्य भयेन वा मुने-
स्तिरोहिताः स्वित् प्रहरन्ति देवताः।
कथं न्वमी सन्ततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः॥ ६१॥

जयेन कच्चिद्विरमेदयं रणाद्-
भवेदपि स्वस्ति चराचराय वा।
तताप कीर्णा नृपसूनुमार्गणै-
रिति प्रतर्काकुलिता पताकिनी॥ ६२॥

अन्वयः। (यद्वा) अस्य मुनेः गुणैः भयेन वा हृता देवताः तिरोहिताः (सत्यः) प्रहरन्ति स्वित्? (अन्यथा) अस्य अमी सायकाः जलधेः ऊर्मयः इव कथं नु सन्ततम् अनेके भवन्ति। वाच्य—हृताभिः +देवताभिः तिरोहिताभिः प्रह्रियते, अमीभिः सायकैः ऊर्मिभिः इव +अनेकैः भूयते॥६१

अन्वयः। कच्चित् अयं रणात् जयेन विरमेत्? अपि चराचराय स्वस्ति भवेत्? इति प्रतर्काकुलिता नृपसूनुमार्गणैः कीर्णा पताकिनी ततापा। वाच्य—+अनेन विरम्येत; स्वस्ति भूयेत; इति प्रतर्काकुलितया+कीर्णया पताकिन्या तेपे॥ ६२

हृता इति। यद्वा अस्य मुनेः गुणैः शान्त्यादिभिः हृता आकृष्टा वशीकृता इति यावत्। भयेन दरेण वा। भयात् निभृत्य एवेत्यर्थः। देवताः तिरोहिताः सत्यः प्रहरन्ति स्वित्? तत् कुतः? अन्यथा अस्य मुनेः अमी सायका जलधेः ऊर्मय इव कथं नु सन्ततमनेके असङ्ख्या भवन्ति॥ ६१

जयेनेति। कच्चिदयं रणाज्जयेन विरमेत्। अस्मान् जित्वा कच्चिदयं युद्धमुपसंहरेदित्यर्थः। अपि चराचराय स्वस्ति भवेत् कच्चित्। अपि स्थावरजङ्गमं जगत् न विनश्येत् इत्यर्थः। अपिशब्दः सम्भावनायाम्। प्रार्थनायां लिङ्। इति प्रतर्काः पूर्वोक्ता ये वितर्कास्तैः आकुलिता विह्वलाः। अतः सहेतुकं विशेषणमाह—नृपसूनुमार्गणैः अर्जुनबाणैः कीर्णा छिन्ना पताकिनी सेना ततापं तापं प्राप॥ ६२

৬০। এই মুনি তপোবলে বহুতর অদৃশ্য দেহ উৎপাদন করিয়া শরসমূহ নিক্ষেপ করিতেছে কি? অথবা আমাদের স্বীয় শরই ইহার মায়ায় বিহত হইয়া প্রতিকূল ভাবে আগমনপূর্ব্বক আমাদিগকেই নিহত করিতেছে?

৬১। কিংবা, দেবগণ ঐ মুনির গুণে বা ভয়ে আকৃষ্ট হইয়া প্রচ্ছন্নভাবে থাকিয়া আমাদিগকে প্রহার করিতেছেন? তাহা না হইলে, ঐ সকল মুনিসায়ক জলধির ঊর্ম্মিরাজির ন্যায় কেন সতত অসংখ্যরূপে প্রতিভাত হইতেছে।

अमर्षिणा कृत्यमिव क्षमाश्रयं
मदोद्धतेनेव हितं प्रियं वचः ।
बलीयसा तद्विधिनेव पौरुषं
बलं निरस्तं न रराज जिष्णुना ॥ ६३ ॥

प्रतिदिशं प्लवगाधिपलक्ष्मणा
विशिखसंहतितापितमूर्त्तिभिः
रविकरग्लपितैरिव वारिभिः
शिवबलैः परिमण्डलता दधे ॥ ६४ ॥

अन्वयः । अमर्षिणा क्षमाश्रयं कृत्यम् इव मदोद्धतेन हितं प्रियं वचः इव बलीयसा विधिना पौरुषम इव जिष्णुना निरस्तं तत् बलं न रराज । वाच्य—+क्षमाश्रयेण कृत्येन इव+हितेन प्रियेण वचसा इव+पौरुषेण इव निरस्तेन तेन बलेन न रेजे ॥ ६३

अन्वयः । प्लवगाधिपलक्ष्मणा विशिखसंहतितापितमूर्त्तिभिः शिवबलैः रविकरग्लपितैः वारिभिः इव प्रतिदिशं परिमण्डलता दधे । वाच्य—+तापितमूर्त्तीनि शिवबलानि रविकरग्लपितानि वारीणि इव+परिमण्डलतां दधुः ॥ ६४

अमर्षिणेति । अमर्षिणा क्रोधवता क्षमाश्रयं शान्तिसाध्यं कृत्यमिव । यथा, मदोद्धतेन पुंसा हितं प्रियं वचः निरस्तं तिरस्कृतमिव । यथा, बलीयसा बलवत्तरेण विधिना दैवेन निरस्तं पौरुषमिव । यथा, बलिष्ठदैवप्रतिहतपुरुषव्यापारस्य निष्फलत्वादिति भावः । तथा जिष्णुना अर्जुनेन निरस्तं क्षिप्तं बलं किरातसैन्यं न रराज । मालोपमा ॥ ६३

प्रतिदिशमिति । प्लवगानाम् अधिपोऽधीशो लक्ष्म यस्य तेन वानरचिह्नेन । "कपिप्लवङ्गप्लवग" इति । "चिह्नं लक्ष्म च लक्षणम्" इति चामरः । अर्जुनेन विशिखसंहतितापितमूर्त्तिभिरिति । विशिखा बाणाः, तेषां संहतयः समूहाः । "स्त्रियां तु संहतिर्वृन्दम्" इत्यमरः । ताभिः तापिताः पीड़िता मूर्त्तयो देहाः येषां तैः तथाभूतैः । शरनिकरकर्त्तितकलेवरैरित्यर्थः ।

৬২। এই মুনি জয়লাভ করিয়াই যুদ্ধ হইতে বিরত হইবেন কি ? চরাচর জগতের মঙ্গলই হইবে কি ? ইত্যাদি নানা বিতর্কে বিহ্বল হইয়া অর্জ্জুন-বাণ-বিক্ষত প্রমথসেনা পরিতপ্ত হইতে লাগিল।

৬৩। ক্রোধবিহ্বল জনকর্ত্তৃক যেমন ক্ষমাসাধ্য কার্য্য, মদোদ্ধত ব্যক্তি কর্ত্তৃক যেমন হিত প্রিয় বাক্য এবং বলবান্ দৈবকর্ত্তৃক যেমন পুরুষকার নিরস্ত হইয়া নিষ্ফল হয়, তেমনি প্রমথবলও পার্থ কর্ত্তৃক পরাভূত হওয়ায় নিস্তেজ হইয়া পড়িল।

प्रविततशरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे ॥ ६५ ॥

इति अर्जुनाभिगमनो नाम चतुर्दशः सर्गः ॥ १४ ॥

---

अन्वयः । प्रविततशरजालच्छन्नविश्वान्तराले पाण्डुसूनौ आविर्मण्डलं धनुः विधुवति भीतभीतेव जयलक्ष्मीः कथम् अपि विषमनयनसेनापक्षपातं विहातुं विषेहे । वाच्य—+भीतभीतयेव जयलक्ष्म्या पक्षपातः विषेहे ॥ ६५

---

शिवबलैः प्रमथसैन्यैः कर्तृभिः रविकरैण ग्लपितैः तप्तैः सूर्य्यकिरणशोषितैः वारिभिः उदकैः इव, प्रतिदिशं दिक्षु परिमण्डलता, परितः चक्राकारमण्डलता इति यावत् । दधे अधारि, प्रतिदिशं मण्डलाकारेण स्थितमित्यर्थः । धाञः कर्मणि लिट् । आतपतप्तं हि नीरं परिभ्रमति तद्वन्मुनिपीड़ितसैन्यं बभ्राम इत्यथः । द्रुतविलम्बितं छन्दः—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ६४

प्रविततेति । प्रवितताानि विस्तृतानि यानि शरजालानि तैः छन्नमाच्छादितं विश्वान्तरालं येन तस्मिन् शरपूरितब्रह्माण्डोदरे पाण्डुसूनौ अत एवाविर्मण्डलमाविर्भूतमण्डलं धनुः । आविर्भूतमिति वृत्तौ भूतार्थस्य अनुप्रवेशात् भूतशब्दस्याप्रयोगः । विधुवति कम्पयति आस्फालयति सति भीतभीतेव भीतप्रकारेव जयलक्ष्मीः विजयश्रीः कथमपि केनचित्प्रकारेण महता कष्टेन वा विषमनयनसेनापक्षपातं शिवसैन्यानुरागं विहातुं त्यक्तुं विषेहे शशाक इत्यर्थः । मालिनीवृत्तम्,—तल्लक्षणं तूक्तम् ॥ ६५

इति किरातार्जुनीये * * चतुर्दश-सर्गव्याख्या समाप्ता । १४

---

৬৪। শিবসৈনিকেরা কপিধ্বজের শরনিকরে কর্ত্তিতকলেবর হইয়া সৌরকর-তাপিত বারিরাশির ন্যায় সর্ব্বদিকে পরিমণ্ডলাকারে অবস্থান করিতে লাগিল।

৬৫। পাণ্ডুনন্দন যখন শরনিকরে ব্রহ্মাণ্ডোদর আচ্ছাদিত করিয়া স্বীয় মণ্ডলীভূত ধনুঃ আস্ফালন করিতে লাগিলেন, তখন বিজয়লক্ষ্মী যেন ভীত হইয়াই কোনপ্রকারে ত্রিলোচনসেনার পক্ষ পরিত্যাগ করিতে সমর্থ হইলেন।

চতুর্দ্দশ সর্গ সমাপ্ত। ১৪

## पञ्चदशः सर्गः ।

—:*:—

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥ १ ॥
अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ॥ २ ॥
खण्डिताशंसया तेषां पराङ्मुखतया तया ।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम् ॥ ३ ॥

अथेति । अथ अनन्तरं तत्र रणे भूतानि सर्वप्राणिनः, वृत्रं हतवानिति वृत्रहा इन्द्रः । "ब्रह्मभ्रूणवृत्रेषु क्विप् ।" तस्यापत्यं पुमान् वार्त्रघ्नोऽर्ज्जुनः । "तस्यापत्यम्" इति अण्प्रत्ययः । तस्य शरेभ्यः तत्रसुः बिभ्युः । "वा जॄभ्रमुत्रसाम्" इति विकल्पादेत्त्वाभ्यासलोपाभावः । सा चमूश्च, इषवोऽस्यन्त एभिरिति इष्वासाः धनूंषि । "धनुश्चापोऽस्त्रमिष्वासः" इति हेमचन्द्रः । "अकर्त्तरि च कारके संज्ञायाम्" इति करणे घञ् । परित्यक्ता महान्त इष्वासा यया सा । परित्यक्तायुधा इत्यर्थः । दिशो भेजे पलायाञ्चक्रे इत्यर्थः । अत्र भूतत्राससेनापलायनयोः समुच्चयकथनात् भिन्नविषयः क्रियासमुच्चयोऽलङ्कारः । "गुणक्रियायौगपद्यं समुच्चयः" इति सामान्यलक्षणं, तस्य यमकेन संसृष्टिः ॥ १ ॥ उपान्त्यमकम् ।

अपश्यद्भिरिति । गणैः प्रमथैः ईशानं स्वामिनं शिवं पुरोवर्त्तिनमिति भावः । अपश्यद्भिरिव रणान्निववृते निवृत्तम् । भावे लिट् । तथाहि— कृच्छ्रेषु आपत्सु सम्भ्रमेण साध्वसेन ज्वलितं तप्तम् । "सम्भ्रमः साध्वसेऽपि स्यात्" इति विश्वः । मनो मुह्यत्येव । अतः पुरोवर्त्तिनोऽपि अदर्शनमुपपद्यत इति भावः ॥ २

खण्डितेति । खण्डिता ध्वस्ता आशंसा जयाशा यस्याः तया, तेषां गणानां सम्बन्धिन्या तया, अतिसन्निकृष्टया इत्यर्थः । पराङ्मुखतया रणवैमुख्येन पलायनेन इत्यर्थः । केतौ ध्वजे कृत आरोपितः उच्चैः उन्नतो वानरो

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ४ ॥
स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥ ५ ॥

एकाक्षरपादः ।

त्रासजिह्मं यतश्चैतान् मन्दमेवान्वियाय सः ।
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः ॥ ६ ॥

हनूमान् येन तं नरं पुरुषं कपिध्वजमित्यर्थः । कृपा करुणा आविवेश । तदीयदुर्दशां दृष्ट्वा स कृपाविष्टोऽभूदित्यर्थः । यमकालङ्कारः ॥ ३

ननु शत्रुषु कथं करुणा ? तत्राह—आस्थामिति । आस्थां यत्नम् आलम्ब्य । "आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः । वशं नीतेषु क्षुद्रेषु दुष्टेष अरातिषु शत्रुषु विषये अनुकम्पया कृपया महतां वीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटतामायाति प्राप्नोति । स्वपौरुषनिर्जितेषु अरातिष्वपि करुणा भूषणमेव महतामिति भावः ॥ ४

स सासिरिति । सहासिना वर्त्तमानः सासिः सखड्गः, असून् सुवन्ति प्रेरयन्तीति असुसुवो बाणाः । "षु प्रेरणे" इति धातोः "सत्सूद्विष" इत्यादिना क्विप् । असुसूभिः सह वर्त्तत इति सासुसूः सबाणः । अस्यन्ते क्षिप्यन्ते शरा अनेनेति आसः धनुः, "अकर्त्तरि च कारके संज्ञायाम्" इति घञ् । आसेन सह वर्त्तत इति सासः सचापः । सर्वत्र "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । येया यातव्या यानसाध्याः । अयेया अयातव्याः यानं विनैव साध्याः । "अचो यत्" इति यत्प्रत्ययः । येयाश्च अयेयाश्च येयायेयाः तेषां हयानाम् आये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयाययः । अयः शुभावहदैवं यातीत्यययः । येयायेयाययश्च असौ अययश्चेति येयायेयाययाययः । याधातोरुभयत्रापि "आतोऽनुपसर्गे कः" इति कप्रत्ययः । अतो ललति विलसतीति ललः । "लल विलासे" पचाद्यच् । अलोलोऽचपलः शशिन ईशः शिवः तस्य शिशुः स्कन्दः तं शृणाति हिनस्तीति शशीशशिशुशीः क्विप् । शशन् प्लुतगतिं कुर्वन् "शश प्लुतगतौ" इति धातोः शतृप्रत्ययः । सोऽर्जुनो लीलां शोभां ललौ प्राप । "ला आदाने" कर्त्तरि लिट् । एकाक्षरपादः ॥ ५

अथाग्रे हसता साचिस्थितेन स्थिरकीर्त्तिना ।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥ ७ ॥

निरौष्ठ्यम् ।

मा विहासिष्ट समरं समरन्तव्यसंयतः ।
चतं क्षुस्मासुरगणैरगणैरिव किं यशः ॥ ८ ॥

पादान्तादियमकम् ।

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः ।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥

त्रासेति । सोऽर्जुनः त्रासजिह्मं भयक्लिष्टं यथा तथा यतो गच्छतः पलायमानान् इत्यर्थः । एतान् गणान् मन्दमेव अन्वियाय अनुजगाम । तथाहि—महौजसो महानुभावाः भग्नान् अतिपीड़यितुं न इच्छन्ति ॥ ६

अथेति । अथाग्रे बलानामित्यर्थः । हसता तद्भङ्गदर्शनात् स्मयमानेन साचिस्थितेन तन्निवारणाय तिर्य्यग्व्यवस्थितेन । "तिर्य्यगर्थे साचि तिरः" इत्यमरः । स्थिरकीर्त्तिना स्वयमभङ्गत्वात् इति भावः । किञ्चिदीषदायस्तं खिन्नं चेतो यस्य तेन स्वकीयगणभङ्गात् ईषत्खिन्नचित्तेन सेनान्या स्कन्देन । "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इत्यमरः । ते गणाः प्रमथादयो जगदिरे उक्ताः । ओष्ठ्यवर्णाभावात् निरौष्ठ्यमेतत् ॥ ७

अथ एकविंशतिश्लोकैः स्कन्दवाक्यमेवाह—मा विहासिष्टेत्यादिना । रन्तव्यं रमणं क्रीड़ा । बहुलग्रहणात् भावे तव्यप्रत्ययः । संयद्युद्धम् । "समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः" इत्यमरः । समे रन्तव्यसंयती येषां ते समरन्तव्यसंयतः तुल्यक्रीड़ासङ्गरा इति तेषां सम्बोधनम् । यूयं समरं संग्रामं मा विहासिष्ट न त्यजत । जहातेर्माङि लुङ्, मध्यमबहुवचनम् । क्षुस्माः पराजिता असुरगणा यैः तैः भवद्भिरिति शेषः । अगणैः इव गणेभ्योऽन्यैः इव किं किमर्थं यशः चतं नाशितम् । नैतद्युक्तं महाशूराणां भवादृशानामित्यर्थः ॥ ८

विवस्वदिति । विवस्वदंशुसंश्लेषेण सूर्य्यकिरणसम्पर्केण द्विगुणीकृतानि

वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम्।
बाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति ॥ १० ॥

पादादियमकम्।

पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्त्तिभिः।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥ ११ ॥

गोमूत्रिकाबन्धः।

ना सु रोऽयं न वा नागो धरसंस्थो न राक्षसः।
ना सु खोऽयं नवाभोगो धरणिस्थो हि राजसः ॥ १२

तेजांसि येषां ते तथोक्ताः, मोघं व्यर्थं उद्गूर्णाः उद्यताः। "गुरी उद्यमने" इति धातोः कर्मणि क्तः। वो युष्माकममी महासयः खड्गाः हसन्तीव इत्युत्प्रेक्षा। किं पलायमानानां खड्गैरिति भावः॥ ९

वन इति। वनसदां वनेचराणामवने रक्षके वने मार्गं मृगसम्बन्धिनं मार्गं पन्थानम् उपेयुषां पलायमानानामित्यर्थः। युष्माकमिति शेषः। बाणो ध्वनिरेषामस्तीति तैः बाणैः ध्वनियुक्तैः। "वण संशब्दने" इति धातोर्घञ्, ततो "अर्श आदिभ्यः" इत्यच्प्रत्ययः। यमकत्वात् बवयोरभेदः। उक्तञ्च— "रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्" इति। बाणैः शरैः समासक्तं समासञ्जितम् अशं दुःखं तत् केन शाम्यतीति शङ्के। केन उपायेन शाम्येदिति विचारयामि इत्यर्थः॥ १०

पातितेति। पातितं भ्रमितमुत्तुङ्गमाहात्म्यं उन्नतभावो यैः तैः संहृता आहृता आयता विस्तृताः कीर्त्तयो यैः तैः, युष्माभिरिति शेषः। का गुर्वीमापदं हन्तुं न काचिदपि इत्यर्थः। आवृत्तिः युद्धान्निवृत्तिः, सैव साहसं कृतम्, अतः पापात् अन्यत्र किञ्चित् फलम् अस्तीति भावः। तदुक्तं मनुना—"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः। भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते॥ यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्। भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु॥" इति॥ ११

नेति। किञ्च अयमसुरो दैत्यो न। नागो गजो वा पन्नगश्च न। धर इव संस्था यस्य सः धरसंस्थः पर्वताकारः। "अहार्य्यधरपर्वताः" इत्य-

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥ १३ ॥
न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥ १४ ॥

मरः । "संस्था व्यवस्थाप्रणिधिसमास्याकारमृत्युषु" इति वैजयन्ती । राक्षसो न । किन्त्वयं सुखयतीति सुखः । सुखसाध्य इत्यर्थः । नवाभोगोऽभिनवप्रयत्नः, सहोत्साह इत्यर्थः । "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपो"ति विश्वः । धरणिस्थो भूतलचारी राजसो रजोगुणप्रधानो ना पुरुषो हि, कश्चित् मानुष इत्यर्थः । "पुरुषाः पूरुषा नरः । मनुष्या मानुषा मर्त्या मनुजा मानवा नराः" इत्यमरः । अतो न पलायनमुचितमिति भावः । गोमूत्रिकाबन्धः ।—"वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः । गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः ॥" इति लक्षणात् । षोड़शकोष्ठद्वये अर्धद्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरिति उद्धारः ॥ १२

मन्दमिति । एष मुनिर्घृणया कृपया इषुं लतां शाखामिव मन्दमस्यन् क्षिपन् वो युष्मान् पशून् इव आगतावज्ञं यथा तथा जघनेषु प्रणुदति चोदयति । किमतः परं कष्टमिति भावः ॥ १३

नेति । पदच्छेदस्तावत् । न ना ऊननुन्नः नुन्नोनः ना अना नानानना ननु । नुन्नः अनुन्नः ननुन्नेनः ना अनेनाः नुन्ननुन्ननुत् । अथ योजना ।—हे नानानना नानाप्रकाराणि आननानि येषां ते, नानाविधास्या इत्यर्थः । ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न । तथा—नुन्नऊनो येन स नुन्नोनो ना पुरुषोऽना नन्वपुरुषः खलु । ऊनाद्भीतः पलायमानस्तु किं वक्तव्यमिति भावः । किञ्च, नुन्नः इनः स्वामी यस्य स नुन्नेनः, स न भवतीति ननुन्नेनः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । स नुन्नो विद्धोऽप्यनुन्नोऽविद्ध एव । यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भावः । तथा नुन्ननुन्ननुत् अतिशयेन नुन्ना नुन्ननुन्नाः, तान् नुदतीति नुन्ननुन्ननुत् अतिपीड़ितपीड़कः ना पुरुषः अनेनाः निर्दोषो न भवतीति, किन्तु सदोष एवेति "नार्त्तं नातिपरिक्षतम्" इति निषेधादित्यर्थः । अयन्तु नैतादृश इति न पलायितव्यमिति भावः । अयमेकव्यञ्जनः । अन्त्यस्तकारस्तु न दोषावहः, "नान्त्यवर्णस्तु भेदकः" इत्यभ्यनुज्ञानात् ॥ १४

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान्।
प्रकृत्या ह्यमणिः श्रेयान् नालङ्कारश्च्युतोपलः॥ १५॥
स्यन्दना नो चतुरगाः सुरेभा वाविपत्तयः।
स्यन्दना नो च तुरगाः सुरेभावा विपत्तयः॥ १६॥

समुद्गकः।

भवद्भिरधुनारातिपरिहापितपौरुषैः।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः॥ १७॥
वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे।
यात किं विदिशो जेतुं तुञ्जेशो दिवि किंतया॥ १८॥

प्रतिलोमानुलोमपादः।

वरमिति। कृताः पूर्वम् उत्पादिताः पश्चात् ध्वस्ता नष्टास्ते कृतध्वस्ताः। "पूर्वकाल" इत्यादिना समासः। कृतध्वस्ताः गुणाः यस्य तस्मात् पुंसोऽत्यन्तम् अतिशयेन अगुणो निर्गुणः पुमान् वरं मनाकप्रियः, किञ्चित् प्रिय इत्यर्थः। "वरं क्लीबे मनाक् प्रिये" इत्यमरः। तथाहि— प्रकृत्या स्वभावेन अमणिः मणिरहितोऽलङ्कारः श्रेयान्। च्युतोपलो भ्रष्टरत्नो न श्रेयान्। "उपलः प्रस्तरे रत्ने" इति विश्वः। पलायितुः समरात्; असमर एव वरमिति भावः। अत्र समानविषयारोपयोः प्रतिबिम्बकरणाद्दृष्टान्तालङ्कारः॥ १५

स्यन्दना इति। स्यन्दन्ते प्रद्रवन्तीति स्यन्दनाः जवनाः, स्यन्दनाः रथा नो सन्ति। नन्द्यादित्वात् ल्युः। चतुरं गच्छन्तीति चतुरगाः तुरगाश्च अश्वा नो सन्ति। सुरेभा शोभनबृंहणाः, सुरेभा वा सुरगजाश्च नो सन्ति। अविपत्तयो विपत्तिरहिताः, विपत्तयो वा विशिष्टाः पदातयो न सन्ति। अतो न भेतव्यमिति भावः। अत्र पूर्वोत्तरार्द्धगतानां विशेषणानां च उद्देशोद्देश्योभूतानां यथासंख्यसम्बन्धानुक्रमाद्यथासंख्यालङ्कारो यमकेन संसृष्टः॥१६

भवद्भिरिति। अधुना अरातिभिः परिहापितानि त्याजितानि पौरुषाणि यैः तैः भवद्भिः, अर्कनिष्पीतैः अर्केण संशोषितैः ह्रदैः इव दुरुत्तरो दुस्तरः पङ्क इव पङ्को दुष्कीर्त्तिः प्राप्तः॥ १७

वेत्रेति। वेत्राणि वंशाः फलिन्यो वा शाकाः बर्बराश्च कुजा वृक्षा यस्मिन् तस्मिन् वेत्रशाककुजे शत्रुणा दुःप्रवेश्ये इत्यर्थः। "वेत्रं वंशफलिन्यो-

अयं वः क्लैव्यमापन्नान् दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् ॥ १९ ॥

ननु हो मथना राघो घोरा नाथमहो नु न ।
तयदातवदा भीमा माभीदा बत दायत ॥ २० ॥

प्रतिलोमानुलोमार्द्धः ।

श्च"ति विश्वः । "शाकवर्बरवर्धकाः" इत्यमरः । लेशेन स्तोकेनापि एजते कम्पते इति लेशेजः, स न भवतीति अलेशेजः तस्मिन् । अत्यन्ताकम्पने इत्यर्थः । "एजृ कम्पने" पचाद्यच् । न कोकन्ते नाददते इति अकुकाः ग्रहणासमर्थाः शत्रवो यस्मिन् तस्मिन् अकुकशात्रवे । "कुक आदाने" पचाद्यच् । शैले पर्वते । केषां भावः किन्ता कुत्सितता तया उपलक्षिताः सन्तः । "कुत्सा[प्रश्न]निन्दावितर्केषु क्षेपे किंशब्द इष्यते" इति शाश्वतः । विदिशो जेतुं यात गच्छत किम् ? यातेः सम्प्रश्ने लोट् । मध्यमपुरुष-बहुवचनम् । दिवि स्वर्गेऽपि । तुञ्जेश इति तेषां सम्बोधनम् । तुञ्जन्त इति तुञ्जाः हिंसका दैत्याः, "तुजि हिंसायाम्" पचाद्यच् । तेभ्यो दैत्येभ्य ईशत इति तुञ्जेशाः, ईशेः क्विप् । तेभ्योऽपि शक्ता इत्यर्थः । स्वर्गेऽपि असुर-विजयिनां युष्माकमत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनमनुचितमिति भावः ॥ १८

अधीशे तिष्ठति पलायनमेतद् वो न युक्तमित्याह—अयमिति । अयम् ईशः स्वामी शिवः क्लैव्यं निष्पौरुषत्वम् आपन्नान् प्राप्तान्, तथा अरातिना दृष्टपृष्ठान् पलायमानानित्यर्थः । वो युष्मान् च्युताचारान् स्खलितव्रतान् दारान् कलत्राणि इव । "अथ पुं भूम्नि दाराः" इत्यमरः । निगोपितु गोप्तुम् । ऊदित्त्वादिड्विकल्पः । दारदोषं भर्त्तेव स्वमहिम्ना युष्मद्दोषं संवरितुमिच्छति । अतः कुतो युष्माकमनर्थः इत्यर्थः ॥ १९

नन्विति । ननु इति आमन्त्रणे । हो इति आह्वाने । "हे है व्यस्तौ समस्तौ च हूतिसम्बोधनार्थयोः । हो हो चैवंविधौ ज्ञेयौ सम्बुद्ध्याह्वानयो-रपि ॥" इति विश्वः । मथ्नन्तीति मथनाः, "मन्थ विलोडने" कर्त्तरि ल्युट् । राघ्नुवन्ति समर्था भवन्तीति राघः । "राघृ सामर्थ्ये" क्विप् । घोराः क्रूराः शत्रूणामिति भावः । नाथं महयन्ति पूजयन्तीति नाथमहः । दृग्ग्रिग्रहणात् कर्म्मणि उपपदे क्विप् । तयन्ति रक्षन्तीति तयाः रक्षकाः, पचाद्यच् । दायन्तीति दाताः शुद्धाः । "दैप् शोधने" कर्त्तरि क्तः । वदन्तीति वदाः वक्तारः । पचाद्यच् । तेषां द्वन्द्वः तयदातवदाः । भीमा भयङ्कराः माभीः ।

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः ।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता ॥२१॥

निशितासिरतोऽभीको न्येजतेऽमरणा रुचा ।
सारतो न विरोधी नः स्वाभासोऽभरवानुत ॥ २२ ॥

नञर्थमाशब्दस्य सुप् सुपेति समासः तान् ददतीति माभीदाः अभयप्रदाः, एवंविधा यूयमिति शेषः । बत इति खेदे बवयोरभेदः । न दायत नु न शुद्धाः किम् ? नु पृच्छायाम् । किन्तु शुद्धा एव । काकुः अत्रानुसन्धेयः । "दैप् शोधने" लोट् मध्यमपुरुषबहुवचनम् ॥ २०

किमिति । अपास्तोऽवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो यैः तैः, अतिदेवमानुषैरित्यर्थः । मनुष्याणां भावो मानुष्यकम् । 'योपधात् गुरूपोत्तमाद्वुञ् ।' ज्वलिता उज्ज्वलिताः प्रकाशिता इति यावत् । अन्यगुणा असदृशगुणा यैः तैः, "अन्यो विभिन्नासदृशौ" इति वैजयन्ती । ईदृशैः भवद्भिरिति शेषः । तेजसि प्रतापे स्थिता प्रतापैकशरणा मानिता शूरत्वाभिमानिता किमिति त्यक्ता । किमिति निर्लज्जैः पलायत इति भावः ॥ २१

निशितेति । हे अमरणा मरणरहिताः, निशितासिरतोऽनितीक्ष्णखड्गरतोऽभीको निर्भीको रुचा तेजसा उपलक्षितः सुष्ठु आभासत इति स्वाभासो रमणीयः । पचाद्यच् । उताऽत्यर्थम् अतिशयेन भरवान्, रणभरसहिष्णुरित्यर्थः । 'उतात्यर्थविकल्पयोः' इति विश्वः । ईदृशो नोऽस्माकं विरोधी शत्रुः सारतो बलतो न न्येजते न कम्पते, न प्रचलतीत्यर्थः । "एजृ कम्पने" लट् । अतो भवद्भिरपि स्थातव्यमेव न चलितव्यमिति भावः । [एतन्मते "विरोधी नः" इत्यत्र सविसर्गपाठः । प्रतिलोमे निर्विसर्गपाठे "पदान्ते सविसर्गाविसर्गयोः" इत्येतादृशकाव्ये ऐक्यस्वीकारात् । अन्ये तु इनः सूर्य इव स्वाभास इनस्वाभास इत्येकं पदमाहुः । केचित्तु विरोधी शत्रुः पूर्वविशेषणविशिष्टो न, अपि तु पूर्वविशेषणविशिष्ट एवेति काकर्थेन नकारमाहुः । परे तु सारतो न विरोधी न । न रतम् अरतम्, अरतेन सह वर्त्तमानाः सारता मुनयः तान् ऊनयन्ति मारणेन न्यूनान् कुर्वन्तीति सारतोना दैत्यास्तेषां विरोधी विष्णुः स नायम् । अतः कथं पलायन्ते । न स्वाभासः । स्वेन धनेन आभासत इति स्वाभासः कुबेरः सोऽपि नायम् ।

तनुवारभसो भास्वानधीरो विनतोरसा ।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि ॥ २३ ॥

प्रतिलोमानुलोमेन श्लोकद्वयम् ।

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

दे वा का नि नि का वा दे
वा हि का स्व स्व का हि वा ।
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि ॥ २५ ॥

इति सर्वतोभद्रः ।

न भरवान् भं नक्षत्रं राति । आतोऽनुपसर्गे कः । भरश्चन्द्रस्तद्वान् शिवोऽपि न, अतः पलायनं न उचितमित्याहुः इत्युपरिष्टात् । एव क्वचित् पुस्तके पाठविशेषः । ] ॥ २२

ननु अयं न चलतीति कथं ज्ञायते ? तत्राह—तन्विति । तनुमावृणोति आच्छादयतीति तनुवारं वर्म । कर्मण्यण् । तेन वभस्ति भासते इति तनुवारभसः । "भस दीप्तौ" पचाद्यच् । भास्वान् तेजस्वी चारुणा भास्वता विनतेन उन्नतेन उरसा वक्षःस्थलेन उपलक्षितः । एवंविधोऽपि अधीरो धैर्यरहितः रसितेन शब्दितेनैव अश्नाति असतीति रसिताशी तस्मिन् । रवेण एव विश्वप्राणहारिणीत्यर्थः । आभीक्ष्ण्ये णिनिः । जन्ये युद्धे । "युद्धमायोधनं जन्यम्" इत्यमरः । अभीतः निर्भीकः सन् को रमते कः क्रीडति । यदि रमते तर्हि अयमेवेति भावः । निर्भयसञ्चारादेव अस्य निश्चलत्वं निश्चीयत इत्यर्थः । पूर्वश्लोकस्याय प्रतिलोमः ॥ २३

अथ पञ्चभिः कुलकमाह—विभिन्नेत्यादिभिः । आहवं विशिनष्टि ।—विभिन्नानि विदारितानि अत एव पातितानि आश्वीया अश्वसमूहाश्च तै तथा । "पूर्वकाल" इति समासः । तैः अश्वसमूहैः निरुद्धानि रथानां वर्त्मानि यस्मिन् तथोक्ते । "वृन्दे त्वश्वीयमाश्ववत्"इत्यमरः । "केशाश्वाभ्यां यञ्छावन्यतरस्या"मिति छप्रत्ययः । हतास्ताडिता द्विपा गजा एव नगाः शैलाः । "शैलवृक्षौ नगावगौ" इत्यमरः । तैः ष्ठ्यूतानि उज्झितानि ।

प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि॥ २६॥

ष्ठीवतेः कर्मणि क्तः। "छ्वोः शूडनुनासिके च" इति ऊठादेशः। तानि रुधिराण्येव अम्बूनि तेषां नद्यः प्रवाहैः आकुले व्याप्ते॥ २४

देवेति। पुनश्च देवान् आकनयति उद्दीपयति उत्साहयतीति देवाकानी तस्मिन् देवाकानिनि। "कन दीप्तौ" इति धातोर्ण्यन्तात् णिनिः। यद्वा "कै शब्दे" इति धातोराङ्पूर्वस्य भावे ल्युटि आकानम् आशब्दनम् ईषद्वचन-मिति यावत् देवानां तद्वतीत्यर्थः। कावादः ईषद्वादो वाक्कलहः। "ईषदर्थे" इति कुशब्दस्य कादेशः। तद्वति कावादे। "अर्श आदिभ्योऽच्" वाहिका-पर्य्यायेण रणभारोद्वहनम्। वहेः पर्य्याये धात्वर्थनिर्देशे ण्वुल् वक्तव्यः। वाहिकया क्रमप्राप्तरणक्रियया सुष्ठु शोभनं यथा तथा अरुकान् परान् आजि-हीते अभियुङ्क्ते योजयतीति यावत्। वाहिकास्वरुकाहास्तस्मिन्। यौङ्-धर्मौ युद्धे उपचर्य्येते। "ओ हाङ् गतौ"इति धातोः विच्प्रत्ययः। सोमपा-शब्दवत् प्रक्रिया। वाशब्दश्चार्थे। कं मदोदकमाकिरन्तीति काकाराः मदस्राविणः। किरतेराङ्पूर्वात् कर्मण्यण्। एवंविधा इभभरा गजघटा यत्र तस्मिन् काकारेभभरे। काका इव काकाः गर्ह्या इति लक्षणया तेषाम् आमन्त्रणम्। निस्वाः निरुत्साहाः भव्याः सोत्साहाः तानुभयान् व्ययन्ति संवृण्वन्तीति निस्वभव्यव्याः। "व्येञ् संवरणे"। "आतोऽनुपसर्गे कः" तैः बभस्ति भासत इति निस्वभव्यव्यभस्वान् तस्मिन्। "अन्येभ्योऽपि दृश्यन्ते" इति क्वनिप्। सर्वतो भ्रमणात् सर्वतोभद्राख्यश्चित्रबन्धः। यथाह दण्डी। "तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः" इति। उद्धारस्तु। "अष्टकोष्ठचतुष्टयं लिखित्वा तत्र श्लोकं क्रमेण लिखित्वा सर्वतो वाचनात् सर्वतोभद्रः" इति। अत्र पुस्तकान्तरे एवम्पाठः—चतुष्कोष्ठे चतुरर्द्धबन्धक्रमेण आद्यपंक्तिचतुष्टये पादचतुष्टयं विलिख्यानन्तरपंक्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पंक्तिषु प्रथमः पादः सर्वतो वाच्यते, द्वितीयादिषु द्वितीय इति॥ २५

प्रनृत्तेति। प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैः तुरगैः आक्षिप्ता अवधूताः सारथयो यत्र तस्मिन्। तथा मारुतेन आपूर्णैः व्याप्तैः तूणीरैः निषङ्गैः विक्रुष्टाः शब्दायमानाः, हताः ताड़िताः सादिनस्तौरङ्गिका यत्र तस्मिन्। यद्वा मारुतापूर्णतूणीरैर्विकृष्टा आकर्षिता, अत एव हताः मारिताः सादिनोऽश्ववारा यत्र तस्मिन्॥ २६

स स त्व र ति दे नि त्यं
स द रा म र्ष ना शि नि ।
त्व रा धि क क स न् ना दे
र म क त्व म क र्ष ति ॥ २७ ॥

इति अर्द्धभ्रमकः ।

आसुरे लोकविलासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥ २८ ॥

कुलकम् ।

इति शासति सेनान्यां गच्छतस्ताननेकधा
निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा ॥ २९ ॥

निरोष्ठ्यम् ।

मुनीषुदहनातप्तान् लज्जया निविवृत्सतः ।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥ ३० ॥

ससत्वेति । ससत्त्वानां सत्त्ववतां रतिदे रागप्रदे नित्यं सदराणां सभयानाम् अमर्षनाशिनि क्रोधहारिणि त्वरया उत्साहेन अधिकं कसन्तो विकसन्तो नादाः यत्र तस्मिन् रमयतीति रमकः । रमधातोः वुञ् । तस्याकादेशः तद्भावो रमकत्वम् । रणकर्म्मणा परञ्जकत्वम् अकर्षति अपनुदति वीराणां परस्परम् उत्साहं रणकर्मणा स्फोरयतीत्यर्थः ॥ २७

आसुर इति । एवंविधे आसुरे असुरसम्बन्धिनि लोकविलासविधायिनि लोकभयङ्करे महाहवे महायुद्धे युष्माभिः उन्नतिं वृद्धिं नीतं प्रापितं पौरुषं पुरुषकर्म निरस्तं नाशितमिह संग्रामे ॥ २८

इतीति । इति इत्थं सेनान्यां स्कन्दे शासति आज्ञापयतीति अनेकधा गच्छतः पलायमानान् तान् गणान् निषिध्य निवार्य्य अन्धकारिणा हरेण किञ्चित् हसता तस्थे स्थितम् । भावे लिट् ॥ २९

मुनीति । मुनेरिषव एव दहनस्तेन आतप्तान् पीड़ितान् तथा लज्जया रणभङ्गात् शालीनत्वेन निविवृत्सतो निवर्त्तितुकामान् । "वृद्भ्यः स्यसनोः" इति विकल्पात् परस्मैपदम् । तान् गणान् शिवः निषेधः मा भैष्ट मा पलाय-

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे ।
भीताः शितशराभीताः शङ्करं तव शङ्करम् ॥ ३१ ॥

पादाद्यन्तयमकम् ।

महेषुजलधौ शत्रोर्वर्त्तमाना दुरुत्तरे ।
प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥ ३२ ॥
स बभार रणापेतां चमूं पश्चादवस्थिताम् ।
पुरः सूर्य्यादुपावृत्तां छायामिव महातरुः ॥ ३३ ॥
मुञ्चतीशे शरान् जिष्णौ पिनाकस्वनपूरितः ।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥ ३४ ॥

तेति निवारणवचनं स एव हिमाम्बु, शीतोदकं स एव प्रह्लादयामास । रूपकालङ्कारः ॥ ३०

दूना इति । दूनाः शरतप्ताः । "ल्वादिभ्यः" इति निष्ठानत्वम् । अरिबलात् शत्रुबलात् ऊनाः ऊनबलाः । "पञ्चमी विभक्ते" इति पञ्चमी । निरेभाः निःशब्दाः । कुतः भीताः त्रस्ताः, कुतः यतः शीतैः तीक्ष्णैः शरैः अभीताः अभिव्याप्ताः । इणः कर्मणि क्तः । ते गणाः तव रणे शङ्करम् अभयवचनेन सुखकरं शङ्करं शिवं बहु यथा तथा मेनिरे अमन्यन्त ॥ ३१

महेष्विति । दुरुत्तरे दुस्तरे शत्रोः सम्बन्धिनि महेषुजलधौ महति बाणसागरे वर्त्तमाना पताकिनी सेना ईशानं शिवं पारं परतीरमिव । "पारावारे परार्वाची" इत्यमरः । प्राप्य आशश्वास प्राणिति स्म ॥ ३२

स इति । स शिवो रणापेतां रणादपवृत्तां पराङ्मुखीभूताम् अत एव पश्चात् पृष्ठभागे अवस्थितां चमूं पुरोऽग्रे स्थितः सूर्य्यः सूर्य्यकिरणः तस्मात् अपावृत्तां परावृत्तां छायां महातरुः इव बभार । छायां तरुरिव आत्मैकशरणां तां चमूं न मुमोचेत्यर्थः ॥ ३३

मुञ्चतीति । ईशे हरे कर्त्तरि जिष्णौ अर्जुने विषये शरान् मुञ्चति सति पिनाकस्य शिवकार्मुकस्य स्वनेन ध्वनिना, पूरितधराधरः इन्द्रकीलः स्फुटन्निव विदीर्य्यमाण इव इत्युत्प्रेक्षा । आशा दिशः ध्वनयन् शब्दयुक्ताः कुर्वन् दध्वान शब्दमकरोत् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः ॥ ३४

तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः॥ ३५॥

द्विचतुर्थयमकम्।

परिमोहयमाणेन शिक्षालाघवलीलया।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना॥ ३६॥

अवद्यन् पत्रिणः शम्भोः सायकैरवसायकैः।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया॥ ३७॥

आद्यन्तयमकम्।

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।
चचार रुचिरश्चारु चारैराचारचञ्चुरः॥ ३८॥

द्व्यक्षरः।

तदिति। भीमं तयोः हरपाण्डवयोस्तत् प्रसिद्धं गणाः प्रमथाः चित्रसंस्थाः चित्राकाराः अचलाः शैला इव। तथा चित्रे आलेख्ये संस्था स्थितिर्येषां ते चित्रसंस्थाः चित्रलिखिता इव अचला आश्चर्यवशात् निश्चलाः सन्तो विस्मयेन ददृशुः॥ ३५

परीति। शिक्षालाघवलीलया अभ्यासपाटवातिशयेन हेतुना परिमोहयमाणेन व्यामोहयता। "अणावकर्मकाच्चित्तवत्कर्तृकादि"ति परस्मैपदे प्राप्ते "न पादमि" इत्यादिना तत्प्रतिषेधादात्मनेपदं शानच्। "णेर्विभाषा" इति कृत्स्थस्य नस्य वा णत्वम्। पिनाकिना हरेण जिष्णोरर्जुनस्य इयं जैष्णवी विशिखश्रेणी बाणसङ्घातः परिजह्रे निरस्ता॥ ३६

अवद्यन्निति। पाण्डवः अर्जुनः अवसायकैः अवसानकारैः। स्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः। सायकैर्बाणैः शम्भोः पत्रिणः शरात् अवद्यन् खण्डयन्। द्यतेः शतृप्रत्ययः। "ओतः श्यनि" इति ओकारलोपः। शिक्षया शक्तुं प्रभवितुमिच्छया उत्साहेनेत्यर्थः, रणे शिक्षया अभ्यासेन च परिचक्राम। उत्साहनैपुण्याभ्यां चचारेत्यर्थः॥ ३७

चारेति। चारैर्गतिविशेषैः वित्त इति चारचुञ्चुः। "तेन वित्तश्चुञ्चुपचणपौ" इति चुञ्चुप्प्रत्ययः। चिरमारेचयति रिक्तीकरोति शत्रून्

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥
पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥ ४० ॥
शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥ ४१ ॥
तेन व्यातेनिरे भीमा भीमार्जुनफलाननाः ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥ ४२ ॥

शृङ्खलायमकम् ।

इति चिरारेचो। चञ्चत्प्रचलत्शीरस्य वल्कलस्य रुचा प्रभया रोचत इति रुचः शोभमानः। "इगुपध" इति कः। रुचिरः सुन्दरः। चञ्चूर्यते भृशं चरतीति चञ्चरः। चरतेर्यङन्तात् पचाद्यच्। "चरफलोश्च" इति नुमागमः। "यङोऽचि च" इति यङो लुक्। आचारस्य युद्धव्यवहारस्य चञ्चरो भृशम् आचरितः स मुनिश्चारु यथा तथा चारैश्चक्रादिचरैः गतिविशेषैश्चचार "चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः" इति विश्वः। द्व्यक्षरः ॥ ३८

स्फुरदिति। स मुनिरर्जुनः स्फुरन्तो पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत् तथोक्तम्। "नद्यृतश्च" इति कप्प्रत्ययः। बृहद्धनुर्गाण्डीवं धुनानः कम्पयन्। उल्केव अनलस्तेन धृतो योगो येन तेन अंशुमता अर्केण सूर्य्येण तुल्यं बभौ। उपमा ॥ ३९

पार्थेति। पार्थबाणाः अर्जुनशराः पशुपतेर्विशिखावलीं शरसङ्घातं सवितुरियं सावित्री ताम् अंशुसंहतिं किरणसमूहम् अरन्ध्राः निबिडाः पयोमुचो मेघा इव आवव्रुस्तिरोदधुः ॥ ४०

शरेति। त्रिलोचनः शिवः। सव्येन सचते समवैतीति तेन सव्यसाचिना अर्जुनेन उदस्तां क्षिप्ताम् उर्वीं महतीं शरवृष्टिं मार्गणैः शरैर्विधूय निरस्य तपनस्य मार्गं रुरोध आवव्रे ॥ ४१

तेनेति। तेन शिवेन भीमा भयङ्कराः तथा भियो भयस्य मार्जनं निरासः तदेव फलं प्रयोजनं येषां तानि आननानि अग्राणि येषां तेषां ते भीमार्जनफलाननाः। तथा शिखाधराः मयूराः तेषु जातानि शिखाधरजानि बर्हाणि

द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥ ४३ ॥

इति गूढ़चतुर्थपादः ।

विलङ्घ्य पत्रिणां पंक्तिं भिन्नः शिवशिलीमुखैः ।
ज्यायो वीर्य्यमुपाश्रित्य न चकम्पे कपिध्वजः ॥ ४४ ॥
जगतीशरणे युक्तो हरिकान्तः सुधासितः ।
दानवर्षी कृताशंसो नागराज इवाबभौ ॥ ४५ ॥

अर्थत्रयवाची ।

तानि वासांसीव वासांसि पत्ना येषां ते शिखाधरजवाससः मयूरपत्रिण इत्यर्थः । विशिखाः बाणा अनुकम्पया कृपां कृत्वा न व्यार्तनिरे इति न किन्तु अनुकम्पयैव इत्यर्थः । अनुजिघृक्षुत्वादिति भावः । सम्भाव्य निषेधने द्वौ प्रतिषेधौ इत्युक्तम् ॥ ४२ ॥ शृङ्खलायमकम् ।

द्युवियदिति । द्यां स्वर्गं वियदन्तरिक्षञ्च गामिनी व्यापिनी द्युवियद्गामिनी द्वितीयाप्रकरणे श्रितादिषु गम्यादीनामुपसङ्ख्यानात्समासः । तारेण उच्चैस्तरेण संरावेण विहतास्ताड़िता विद्धाः श्रुतयः कर्णा यया सा तथोक्ता । हैमी हेममयी इषुमाला शिवशरावलिः विद्युतां संहतिरिव उक्तविशेषणा विद्युन्माला इव शुशुभे । चतुर्थपादवर्णानां त्रिपाद्यां सम्भवात् गूढ़चतुर्थपादमाहुः ॥ ४३

विलङ्घ्येति । शिवशिलीमुखैः पत्रिणां पङ्क्तिं निजशरावलिं विलङ्घ्य अतिक्रम्य भिन्नो विद्धः कपिध्वजः अर्जुनः । ज्यायः प्रशस्तम् । "वृद्धप्रशस्ययोर्ज्यायान्" इत्यमरः । वीर्य्यं सत्त्वम् उपाश्रित्य अवलम्ब्य न चकम्पे न चचाल, किन्तु तान् सहन् अवतस्थौ इत्यर्थः ॥ ४४

जगतीति । अर्थत्रयवाची श्लोकोऽयम् । तत्र आदौ अगराज इति पदच्छेदमाश्रित्य प्रथमोऽर्थोऽभिधीयते । ईशस्य रणे युक्तः, शक्तः, अन्यत्र जगतीशरणे भूरक्षणे युक्तः स्थितः विधिना इति शेषः । हरिः सिंह इव कान्तो मनोहरः, अन्यत्र हरीणां सिंहानां कान्तः आवासदानात् प्रियः । सुष्ठु दधाति पालयति प्रजा इति सुधा । क्विबन्तः । असितः कृष्णवर्णः, ततो विशेषणसमासः । अन्यत्र सुधा लेपद्रव्यविशेषस्तद्वत् सितो धवलः, दानवर्षी बहुप्रदः

विफलीकृतयत्नस्य चतबाणस्य शम्भुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥ ४६

स पिशङ्गजटावलिः किरन्
उरु तेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥ ४७ ॥

कृताशंसः कृतजयाभिलाषः । अन्यत्र दानवैर्दैत्यैः ऋषिभिः इना कामेन च कृता आशंसा नानाफलाभिलाषो यस्मिन् स ना नरोऽर्जुनः । अगराजः हिमवान् इव जगति आबभौ इति एकोऽर्थः ॥ * ॥ (१) अथ ऐरावतसाम्यमुच्यते । जगतीं भुवं श्यन्ति तनूकुर्वन्तीति ते जगतीशाः राक्षसाः तेषां रणः तत्र युक्तो विहितः समर्थः । हरिकान्तः इन्द्रप्रियः । उभयत्रापि समानमेतत् । सुधासितः अमृतस्वच्छः एकत्र शीतलः, अन्यत्र वर्णत इति विवेकः । दानवर्षी धनप्रदो मदस्रावी च । कृताशंसः उभयत्र कृतजिगीषः पार्थः नागराज इव आबभौ इति द्वितीयोऽर्थः ॥*॥ (२) अथ शेषौपम्यमुच्यते । जगतीशरणे भूरक्षणे युक्तो नियुक्तः देवैरिति शेषः । "शरणं गृहरक्षित्रोः" इत्यमरः। हरिकान्तः कृष्णप्रियः । उभयत्रापि तुल्यम् । सुष्ठु दधातीति सुधा, वसुधा इति केचित् । एकदेशग्रहणात् समुदायग्रहणम् । तत्र सितो बद्धः । "षिञ् बन्धने" क्तः । अन्यत्र सुधया अमृतेन सितो बद्धः अमृतप्रिय इत्यर्थः । दानवाश्च ऋषयश्च ईर्लक्ष्मीश्च तैः कृताशंसो विहितप्रशंसः, उभयत्रापि तुल्यमेतत् । सोऽर्जुनः नागराजः शेष इव आबभौ इति तृतीयोऽर्थः (३) ॥४४

विफलेति । शम्भुना चतबाणस्य अत एव विफलीकृतयत्नस्य निष्फलप्रयत्नस्य गाण्डीवं धनुर्यस्य तस्य गाण्डीवधन्वनोऽर्जनस्य । "वा संज्ञायाम्" इत्यनङादेशः । खेभ्यः इन्द्रियरन्ध्रेभ्यः । "खमिन्द्रिये सुखे स्वर्गे" इति विश्वः । हुताशनोऽग्निः निश्चक्राम निष्क्रान्तः क्रोधादिति भावः ॥ ४६

स इति । पिशङ्गजटावलिः पिशङ्गजटाजूटः परमेण उत्कृष्टेन मन्युना क्रोधेन उरु महत्तेजः किरन् विक्षिपन् सोऽर्जुनः ज्वलिता ओषधयः तृणज्योतींषि जातवेदा दवाग्निश्च यस्मिन् तेन हिमशैलेन समं तुल्यं हिमाद्रिरिव विदिद्युते हिमाद्रिवद् शुशुभे इति बिम्बप्रतिबिम्बभावोपमा ॥ ४७

शतशो विशिखानवद्यते
भृशमस्मै रणवेगशालिने।
प्रथयन्ननिवार्य्यवीर्य्यतां
प्रजिघायेषुमघातुकं शिवः॥ ४८॥

शम्भोर्धनुर्मण्डलतः प्रवृत्तं
तं मण्डलादंशुमिवांशुभर्त्तुः।
निवारयिष्यन् विदधे सिताश्वः
शिलीमुखच्छायवृतां धरित्रीम्॥ ४९॥

घनं विदार्य्यार्जुनबाणपूगं
ससारबाणोऽयुगलोचनस्य।
घनं विदार्य्यार्जुनबाणपूगं
ससार बाणोऽयुगलोचनस्य॥ ५०॥ अर्द्धावलिः।

शतश इति। शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने रणसंरम्भशोभिने अस्मै पार्थाय भृशम् अत्यर्थम् अनिवार्य्यवीर्य्यतां निजामिति शेषः। तस्मै प्रथयन् दर्शयन्। किन्तु अघातुकम् अमारकम्। "लषपत" इत्यादिना हन्तेरुकञ्। इषुं जातावेकवचनम्, प्रजिघाय प्रयुयुजे। "हि गतौ" इति धातोर्लिट्। "हेरचङि" इति कुत्वम्॥ ४८॥

शम्भोरिति। सिताश्वोऽर्जुनः शम्भोर्धनुर्मण्डलतो धनुर्मण्डलात् प्रवृत्तं निष्क्रान्तं तम् इषुम् अंशुभर्त्तुरर्कस्य मण्डलात् प्रवृत्तमंशुमिव अत्रापि इषुवज्जातावेकवचनम्। निवारयिष्यन् निवारयितुकामः। क्रियार्थक्रियायां लृटि तस्य शत्रादेशः। धरित्रीं भुवं शिलीमुखानां छाया शिलीमुखच्छायम्। "छाया बाहुल्ये" इति नपुंसकत्वम्। तेन वृतां व्याप्तां विदधे कृतवान्। शरजालच्छायावृतां धरित्रीमकरोदित्यर्थः। उपमालङ्कारः॥ ४९

घनमिति। अयुगलोचनस्य विषमनेत्रस्य ईशस्य अलोचनस्य। लोच्यतेऽसौ लोचनः। कर्मणि ल्युट्। न लोचनः अलोचनस्तस्य अलोचनस्य अचाक्षुषज्ञानविषयस्य सम्बन्धी सारो बलं बाणः शब्दः ताभ्यां सारबाणाभ्यां स्थिरशब्दाभ्यां सह वर्त्तते इति ससारबाणः बवयोरभेद इत्युक्तम्। न युज्यते

रुजन्महेषून् बहुधाशुपातिनो
मुहुः शरौघैरपवारयन् दिशः ।
चलाचलोऽनेक इव क्रियावशा-
न्महर्षिसङ्घैर्बुबुधे धनञ्जयः ॥ ५१ ॥

विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः ।
विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः ॥ ५२ ॥

कुतापीति अयुक् सङ्गरहितः । क्विप् । बाणः शरः जातावेकवचनम् । घनं सान्द्रम् अर्जुनस्य बाणपूगं शरव्रातं विदार्थ्य विभिद्य वनं निबिड़म् विदार्यो भूमिकुष्माण्डशे लताविशेषाः अर्जुनाः ककुभवृक्षा बाणा नीलझिण्टिकाः पूगाः क्रमुकास्तेषाम् । "विभाषा वृक्ष—" इत्यादिना द्वन्द्वैकवद्भावः । विदार्थ्य अर्जुनबाणपूगं ससार विविश इत्यर्थः । 'सृ गतौ' । यद्वा तदानीमेव युगलोचनस्य अर्जुनस्य बाणः ससार इत्यर्थः ॥ ५०

रुजन्नित्यादि । बहुधा आशुपातिनः शीघ्रम् आपततो महेषून् मुहुः शरौघैः रुजन् भञ्जयन् । तथा दिशश्चापवारयन् आच्छादयन् क्रियावशात् तत्तद्गतिवशात् युद्धकर्मायत्ततया चलाचलोऽतिचञ्चलो धनञ्जयोऽर्जुनः महर्षिसङ्घैः अनेको बहुविध इव बुबुधे ददृशे ॥ ५१ ॥

विकाशमिति । जगतीशस्य पृथिवीपतेरर्जुनस्य मार्गणा बाणाः विकाशं विस्तारमीयुः । तथा जगति लोके ईशमार्गणाः शम्भुशराः विकाशं विषम-गतिमीयुः प्रापुर्भङ्गमीयुरित्यर्थः । तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्वन्तीति जगतीशा दानवाः । "आतोऽनुपसर्गे कः ।" तान् मारयन्तीति जगतीश-माराः । म्रियतेर्ण्यन्तात् क्विप् । ते च ते गणाः प्रमथाश्च जगतीशमार्गणाः विकाशम् उल्लासं हर्षमीयुः प्रापुरित्यर्थः । अहो देवेऽपि अस्य पराक्रमप्रसर इति विस्मयादिति भावः । तदानीं मार्गयन्तीति मार्गणाः अन्वेषकाः । कर्त्तरि ल्युट् । जगतीशस्य त्रैलोक्यनाथस्य मार्गणाः अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां पक्षिणां काशो गतिरत्रेति विकाशम् आकाशमीयुः दिदृ-क्षया इति भावः । महायमकम् ॥ ५२

सम्पश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्य्यम् ।
अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं बिभराम्बभूवुः ॥ ५२ ॥

इति युद्धवर्णनं नाम पञ्चदशः सर्गः ॥ १५ ॥

---

## षोड़शः सर्गः ।

ततः किरातधिपतेरलघ्वी-
माजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्क-
श्चिरं विचिन्वन्निति कारणानि ॥ १ ॥

सम्पश्यतामिति । इतीत्थं शिवेन वितायमानं विस्तार्यमाणम् । "तनोतेर्यकि" इति वैकल्पिक आकारादेशः । लक्ष्मीवतो जयश्रीमतः । "मादुपधायाः" इत्यादिना मतुपो मस्य वकारः । क्षितिपतेस्तनयस्य अर्जुनस्य वीर्य्यं शौर्य्यं सम्पश्यतां तत्त्वविदामपि हरेरंशावतारोऽयमिति विदुषामपि किमुत अन्येषामिति भावः । मुनीनाम अङ्गानि गात्राणि अभिन्नम् अविरलम् अञ्चिततरम् अतिरुचिरं रोमाञ्चं रोमहर्षं बिभराम्बभूवुः बभ्रुः । "भीह्री" इत्यादिना विकल्पादाम्प्रत्ययः ॥ ५२

इति किरातार्जुनीये पञ्चदशसर्गव्याख्या समाप्ता ॥ १५

---

तत इति । ततोऽनन्तरं किराताधिपतेः सम्बन्धिनीम् अलघ्वीं गुर्वीम् आजिक्रियां रणकर्म वीक्ष्य विवृद्धमन्युर्विवृद्धकोपः विविक्तो निष्कलङ्कस्तर्कः ऊहो ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभराशक्तिकारणानि विचिन्वन् विमृशन् । इतीत्थं वक्ष्यमाणप्रकारेण तर्कयामास अभ्यूहितवान् ॥ १

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः।
सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्तः॥ २॥

विचित्रया चित्रयतेव भिन्नां
रुचं रवेः केतनरत्नभासा।
महारथौघेन न सन्निरुद्धा
पयोदमन्द्रध्वनिना धरित्री॥ ३॥

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपङ्क्ति।
विभिन्नमर्यादमिहातनोति
नाश्वीयमाशा जलधेरिवाम्भः॥ ४॥

अथ त्रयोविंशतिश्लोकैर्वितर्कमेवाह—मदेत्यादि। इहास्मिन् युद्धे मदस्रुतिभिर्मदप्रवाहैः श्यामाः कृता इति श्यामिताः गण्डलेखाः कपोलभागा येषां ते विक्रान्ताः पराक्रमं कुर्वन्तः। कर्त्तरि क्तः। "शूरो वीरश्च विक्रान्तः" इत्यमरः। तैर्नरैरधिरूढाः सहिष्णवो रणभरक्षमाः युधां युद्धानामभिज्ञाः शिक्षिता इत्यर्थः। कृद्योगात् कर्मणि षष्ठी। किञ्च नगानाम् उच्छ्रायं पर्वतानामौन्नत्यम्। घञन्तेन उपसर्गस्य समासो नोपसृष्टात् घञ्प्रत्ययः। "श्रिणीभुवोऽनुपसर्गे" इत्यत्रानुपसर्गे इति निषेधात्। आक्षिपन्तः प्रतिषेधयन्तः इव स्थिताः, तथा उन्नता इत्यर्थः। नागाः गजाः इह संग्रामे न क्रामन्ति न चरन्ति। यथा युद्धान्तरेषु इति शेषः। एवमुत्तरत्रापि सर्वत्र द्रष्टव्यं, तथापि कथं मे शक्तिह्रासोऽयमिति सर्वत्र तात्पर्य्यार्थः॥ २

विचित्रेति। विचित्रया नानावर्णया केतनानां रत्नानि तेषां भासा प्रभया भिन्नां संवलितां रवेः रुचं कान्तिं चित्रयता विचित्रवर्णां कुर्व्वतेव स्थितेनेति केतनौन्नत्यनिमित्तेयमुत्प्रेक्षा। पयोदमन्द्रध्वनिना मेघगम्भीरघोषेण महतां रथानामोघेन समूहेन धरित्री न सन्निरुद्धा न आवृता॥ ३

समुल्लसदिति। इह युद्धे प्रासाः कुन्ताः। "प्रासस्तु कुन्तः" इत्यमरः।

हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे
विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥
अभ्यायतः सन्ततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि मातरिश्वा ॥ ६ ॥
भूरेणुना रासभधूसरेण
तिरोहिते वर्त्मनि लोचनानाम् ।

ते महोर्मय इव तेषां मालाः समुल्लसन्त्यो यत्र तत्समुल्लसत्प्रासमहोर्मिमालम् । चामराणि फेना इव चामरफेनाः तेषां पङ्क्तयः परिस्फुरन्त्यश्चामरफेनानां पङ्क्तयो यत्र तत्तथोक्तम् । अश्वीयम् अश्वसमूहः । "वृन्दे त्वश्वीयमाश्ववत्" इत्यमरः । जलधेरम्भ इव विभिन्नमर्यादम् उन्मर्यादम् उच्छृङ्खलं यथा तथा आशा दिशो न आतनोति न आवृणोति ॥ ४

हतेति । हत प्रहरत आहत विध्यत । हन्तेर्लोट् मध्यमपुरुषबहु-वचनम् । "अनुदात्तोपदेश" इत्यादिना अनुनासिकलोपः । आहतेत्यत्र कर्मणः प्रयोगासम्भवेऽपि हन्तेः स्वाभाविकमकर्मकत्वस्य अनपायात् अकर्मक-त्वस्य चात्र विवक्षितत्वेन कर्मनिवृत्त्यैव तन्निवृत्तेः "आङो यमहनः" इत्यात्मनेपदम् । इत्येवमुद्धताः प्रगल्भाः भीमाश्च घोषा येषां तैर्योद्धृभिः योधैः अभ्यमित्रम् अमित्रानभि समुज्झिता मुक्ता विवस्वतोऽंशुभिः प्रति-फलितैरिति भावः । ज्वलिता दीपिता अत एव प्राप्तास्तडितां त्विष इव त्विषो याभिस्ता हेतयः शस्त्राणि खे न पतन्ति । समुल्लसन्तो न दृश्यन्त-इत्यर्थः । "हेतिः स्यादायुधे" इति विश्वः ॥ ५

अभ्येति । अभ्यायतो वीरान् हन्तुमभ्यागच्छतः । इण शतृप्रत्ययः । अन्तकस्य कालस्य सम्बन्धि सन्ततं सततं धूमवत् धूम्रं व्यापि व्यापकं प्रभा-जालमिव स्थितं प्रतूर्णैर्वेगवद्भिरश्वैः रथाङ्गैः रथचक्रैश्च नुन्नं प्रेरितं रजो मातरिश्वा मरुत् व्योमनि अन्तरिक्षे न तनोति न विस्तारयति ॥ ६

नास्यत्र तेजस्विभिरुत्सुकाना-
मह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७ ॥
रथाङ्गसंक्रीडितमश्वहेषा
बृहन्ति मत्तद्विपबृंहितानि ।
सङ्घर्षयोगादिव मूर्च्छितानि
ह्रादं निगृह्णन्ति न दुन्दुभीनाम् ॥ ८ ॥
अस्मिन् यशःपौरुषलोलुपाना-
मरातिभिः प्रत्युरसं क्षतानाम् ।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति
नासारशीतं करिशीकराम्भः ॥ ९ ॥

भूरेणुनेति । अत्र आहवे रासभो गर्दभः तद्वद् धूसरेण ईषत्पाण्डुना । "रासभो गर्दभः खरः" इत्यमरः । "ईषत्पाण्डुस्तु धूसरः" इति च । भूरेणुना रजसा लोचनानां वर्त्मनि चक्षुर्मार्गे तिरोहिते सति तेजस्विभिस्तेजस्विषु वीरेषु उत्सुकानां वीरवरणार्थम् आगतानामित्यर्थः । "प्रसितोत्सुकाभ्यां तृतीया च" इति विकल्पात् तृतीया । सुरसुन्दरीणाम् अह्नि दिवसे एव प्रदोषो रात्रिमुखं नास्ति अन्धकारवत्त्वात् दृष्टेस्तिरोधानात् रात्रिभ्रमः स्यादिति भावः ॥ ७

रथाङ्गेति । रथाङ्गसंक्रीडितं रथचक्रकूजितम् अश्वानाञ्च हेषा ह्रेषितानि शब्दितानि । "अश्वानां हेषा ह्रेषा च निस्वनः" इत्यमरः । बृहन्ति महान्ति मत्तद्विपानां बृंहितानि । "बृंहितं करिगर्जितम्" इत्यमरः । सङ्घर्षयोगादिव परस्परस्पर्द्धासम्बन्धादिव मूर्च्छितानि वृद्धिं गतानि सन्ति । "नपुंसकमनपुंसक" इत्यादिना नपुंसकैकशेषः । दुन्दुभीनां भेरीणां ह्रादं निर्घोषम् । "स्वाननिर्घोषनिर्ह्राद" इत्यमरः । न निगृह्णन्ति न तिरस्कुर्वन्ति ॥ ८

अस्मिन्निति । अस्मिन् रणे यशःपौरुषयोर्लोलुपानां गृध्नूनाम् अत एव अरातिभिः प्रत्युरसम् उरसि । "प्रतेरुरसः सप्तमी स्थात्" इति समासान्तः । क्षतानां विद्धानां सम्बन्धिनं मूर्च्छैव अन्तरायो रणविघ्नस्तम् आसारशीतं वर्षधाराशीतलम् । "धारासम्पात आसारः" इत्यमरः । करीणां शीकर एवाम्भः कर्त्तृ मुहुर्मोच्छिनत्ति न नाशयति ॥ ९

असृङ्नदीनामुपचीयमानै-
र्विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैः
पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥

परिक्षते वक्षसि दन्तिदन्तैः
प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानां
मन्दारमाला विरलीकरोति ॥ ११ ॥

निषादिसन्नाहमणिप्रभौघे
परीयमाणे करिशीकरेण ।
अर्कत्विषोन्मीलितमभ्युदेति
न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥

असृगिति । असृङ्नदीनां तटानि उपचीयमानैः उपचयं नीयमानैः तथा ध्वजिन्याः पदवीं विदारयद्भिः दुःसञ्चारां कुर्वद्भिः । "विदूरयद्भिः" इति पाठे विदूरां दूरसञ्चारां कुर्वद्भिः आश्याना ईषच्छुष्काः । "संयोगादे-रातो धातोर्यण्वतः" इति श्यायतेर्निष्ठानत्वम् । घनाः सान्द्रास्तैः आश्यान-घनैः शोणितौघैः पङ्कैरिव उच्छ्रायं वृद्धिं न आयान्ति न प्राप्नुवन्ति ॥ १०

परीति । इह रणे दन्तिदन्तैर्गजदन्तैः परिक्षते ताड़िते वक्षसि नभसः पतन्ती प्रियाया: अङ्क इव शीता शीतला सुखकरी मन्दारमाला सुरैर्मुक्तेति शेषः । प्रियं साहसं येषां तेषां प्रियसाहसानाम् । यतो गजाभियायिना-मिति भावः । प्रमोहं प्रहारमूर्च्छां न विरलीकरोति न मन्दीकरोति ॥ ११

निषादीति । करिणां शीकरेण पुष्करतुषारेण परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहाः । "हस्त्यारोहा निषादिनः" इत्यमरः । तेषां सन्नाहाः कवचानि तेषां मणिप्रभौघे रत्नांशुजाले अर्कस्य त्विषा तेजसा उन्मीलितम् उत्पादितम् । आखण्डलकार्मुकस्य इन्द्रधनुषः । "आखण्डलः सहस्राक्षः" इत्यमरः । खण्डं न अभ्युदेति ॥ १२

महीभृता पक्षवतेव भिन्ना
विगाह्य मध्यं परवारणेन ।
नावर्त्तमाना निनदन्ति भीम-
मपां निधेराप इव ध्वजिन्यः ॥ १३ ॥

महारथानां प्रतिदन्त्यनीक-
मधिस्यदस्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव
मातङ्गहस्तैर्व्रियते न पन्थाः ॥ १४ ॥

धृतोत्पलापीड इव प्रियायाः
शिरोरुहाणां शिथिलः कलापः ।
न बर्हभारः पतितस्य शङ्को-
र्निषादिवक्षःस्थलमातनोति ॥ १५ ॥

महीति । पक्षवता सपक्षेण महीभृता मैनाकेन इव परवारणेन शत्रुगजेन मध्यं विगाह्य प्रविश्य भिन्नाः क्षोभिताः ध्वजिन्यः सेनाः "ध्वजिनी वाहिनी सेना" इत्यमरः । अपां निधेः सागरस्य आप इव । आवर्त्तमानाः भ्रमन्त्यः सत्यः । "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । भीमं न निनदन्ति ॥ १३

महारथानामिति । प्रतिदन्त्यनीकं दन्तिसैन्यं प्रति "अनीकं तु रणे सैन्ये" इति विश्वः । अधिस्यदाः महारयाः स्यन्दना रथा यत्र तत् तथा । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । उत्थितानां प्रस्थितानां महारथानां रथिकविशेषाणाम् । तदुक्तम्—"आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥" इति लक्षणात् । पन्था मार्गः आमूलं लूनैः छिन्नैर्मातङ्गहस्तैर्नागकरैः अतिमन्युना अतिक्रोधेनेव न ध्रियते न निरुध्यते ॥ १४

धृतेति । पतितस्य वक्षसि मग्नस्य शङ्कोस्तोमरस्य सम्बन्धी "वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्" इत्यमरः । बर्हभारः तन्मूलबद्धो लाञ्छनपिच्छकलापो धृतः उत्पलापीडः कुवलयशेखरो यस्मिन् सः ।

उज्झत्सु संहार इवास्तसङ्ख्य-
मह्नाय तेजस्विषु जीवितानि।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः॥ १६॥

इयञ्च दुर्वारमहारथाना-
माक्षिप्य वीर्य्यं महतां बलानाम्।
शक्तिर्ममावस्यति हीनयुद्धे
सौरीव ताराधिपधाम्नि दीप्तिः॥ १७॥

माया स्विदेषा मतिविभ्रमो वा
ध्वस्तं नु मे वीर्य्यमुताहमन्यः
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते॥ १८॥

प्रियायाः सम्बन्धी शिथिलः स्रस्तः शिरोरुहाणां कलापः केशपाश इव निषादिनो हस्त्यारोहस्य वक्षःस्थलं न आतनोति न व्याप्नोति॥ १५

उज्झत्स्विति। अत्र आहवे संहारे कल्पान्त इव तेजस्विषु वीरेषु अस्तसंख्यम् असंख्यं यथा तथा अह्नाय झटिति। "द्राक् झटित्यञ्जसाह्नाय" इत्यमरः। जीवितानि उज्झत्सु त्यजत्सु सत्सु मृत्युः लोकत्रयस्य आस्वादने भक्षणे लोला गृध्नुर्जिह्वा यस्मिन् तदाननं न व्याददाति न विवृणोति। "आङो दोऽनास्यविहरणे" इत्यत्रानास्यविहरण इति निषेधात् न आत्मनेपदम्॥ १६

सत्यमेवं तथापि किमेतत् कुत्सितं तत्राह—इयमिति। इयं मम शक्तिश्च दुर्वाराः पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्य्यम् आक्षिप्य निरस्य ताराधिपधाम्नि चन्द्रतेजसि सूर्य्यस्य इयं सौरी। "सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधायाः" इति स्त्रियां ङीष्, यकारस्य लोपः। दीप्तिरिव हीनयुद्धे किरातरणे अवस्यति अवसीदति। एतच्च विरुद्धम् अत्यद्भुतञ्चेति भावः। "षोऽन्तकर्म्मणि" इति धातोर्लट्॥ १७

मायेति। एषा शक्तिह्रासरूपा माया स्वित् देवताक्षोभणं नाम? मतिविभ्रमो बुद्धिविपर्य्ययो वा? अथवा मे वीर्य्यं ध्वस्तं नष्टं नु? उत अहमन्यः

पुंसः पदं मध्यममुत्तमस्य
द्विधेव कुर्वन् धनुषः प्रणादैः
नूनं तथा नैष यथास्य वेषः
प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥

धनुः प्रबन्धध्वनितं रुषेव
सकृद्विकृष्टा विततेव मौर्वी।
सन्धानमुत्कर्षमिव व्युदस्य
मुष्टेरसम्भेद इवापवर्गे ॥ २० ॥

अंसाववष्टब्धनतौ समाधिः
शिरोधराया रहितप्रयासः।
धृता विकारांस्त्यजता मुखेन
प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥

अर्जुनो न वा? कुतः? हि यस्मात् गाण्डीवमुक्ता मे शराः पुरा यथा पूर्वं परिपन्थिषु इवेत्यर्थः, किराते न पराक्रमन्ते अप्रतिबन्धेन प्रवर्त्तन्ते। "उपपराभ्याम्" इति वृत्तावात्मनेपदम्। वृत्तिरप्रतिबन्धः ॥ १८

पुंस इति। किञ्च उत्तमस्य पुंसः पुरुषोत्तमस्य मध्यमं पदम् आकाशं धनुषः प्रणादैः। "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम्। द्विधा कुर्वन्निव विदारयन्निव स्थितः स एष किरातो नूनं तथा तथाभूतो न। कीदृशः? तत्राह—अस्य पुरुषस्य यथा यथाभूतो वेषः वर्त्तत इति शेषः। वेषत एवायं किरातो न स्वरूपत इत्यर्थः। कुतः? हि यस्मात् चेष्टा व्यापारः प्रच्छन्नमपि निगूढमपि स्वरूपत ऊहयते तर्कयते। तस्याः स्वभावादव्यभिचारादिति भावः ॥ १९

अथ चतुर्भिश्चेष्टामेवाचष्टे—धनुरिति। धनुः रुषेव प्रबन्धेन अविच्छेदेन ध्वनितम्। ध्वनतेः कर्त्तरि क्तः। मौर्वी च सकृत् विकृष्टा वितता इव एकवाराकर्षणादेव वितता इव स्थिता। सन्धानं बाणसन्धानम् उत्कर्षं तूणादुद्धरणं व्युदस्य इव वर्जयित्वा किमु कृतमिति शेषः। अपवर्गे बाणमोक्षेऽपि मुष्टेरसम्भेदः असङ्घटनमिव, मुष्टिबन्धं विनैव बाणमोक्षः कृत इवेति हस्तलाघवोक्तिः ॥ २०

प्रहीयते कार्य्यवशागतेषु
स्थानेषु विष्टब्धतया न देहः ।
स्थितप्रयातेषु ससौष्ठवश्च
लक्ष्येषु पातः सदृशः शराणाम् ॥२३॥

परस्य भूयान् विवरेऽभियोगः
प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा
न सम्भवत्येव वनेचरेषु ॥ २३ ॥

अप्राकृतस्याहवदुर्मदस्य
निवार्य्यमस्यास्त्रबलेन वीर्य्यम् ।

अंसाविति । किञ्च अंसौ अवष्टब्धौ स्थिरौ अवस्थापितौ च तौ नतौ च अवष्टब्धनतौ । शिरोधरायाः कन्धरायाः समाधिः संस्थानविशेषः रहितः प्रयासो यस्य स तथोक्तः निःप्रयासः इत्यर्थः । तथा विकारांस्त्यजता जित-श्रमत्वात् निर्विकारेणेत्यर्थः । मुखेन शशलाञ्छनस्य इन्दोः प्रसादलक्ष्मी-र्धृता । असम्भवत्सम्बन्धो निदर्शनालङ्कारः ॥ २१

प्रहीयत इति । तस्य देहः कार्य्यवशेन प्रयोजनवशेन आगतेषु स्थानेषु आलीढ़ादिस्थानकेषु विष्टब्धतया स्थिरतया कदापि न प्रहीयते न त्यज्यते, किन्तु स्थिर एव तिष्ठतीत्यर्थः । सुष्ठु भावः सौष्ठवं लाघवम् । उद्गात्रा-दित्वादञ्प्रत्ययः । तेन सह वर्त्तमानः ससौष्ठवः शराणां पातश्च स्थितानि अचलानि प्रयातानि चलानि तेषु स्थितप्रयातेषु चलाचलेषु लक्ष्येषु विषये सदृशः एकरूपः ॥ २२

परस्येति । किञ्च परस्य विवरे रन्ध्रे । अल्पेऽपीति शेषः । भूयान् भूयिष्ठः प्रसह्य झटिति अभियोगः ज्ञातत्वं परस्य रन्ध्रज्ञातत्वात् प्रहार उद्योग इत्यर्थः । आत्मनो रन्ध्रे विवरे अनल्पेऽपीति शेषः । प्रसह्य झटिति संरक्षणं गोपनञ्च, भूयिष्ठमिति शेषः । इदं द्वयं भीष्मेऽपि गुरौ वा द्रोणे वापि असम्भाव्यं दुर्वितर्क्यं वनेचरेषु न सम्भवत्येव अतो नायं किरातः किन्त्वेष तिरोहितवेषः कोऽपि अमानुषः पुरुष इति भावः ॥ २३

अल्पीयसोऽप्यामयतुल्यवृत्ते-
र्महापकाराय रिपोर्विवृद्धिः ॥ २४ ॥

इति कुलकम् ।

स सम्प्रधार्य्यैवमहार्य्यसारः
सारं विनेष्यन् सगणस्य शत्रोः ।
प्रस्वापनास्त्रं द्रुतमाजहार
ध्वान्तं घनानद्ध इवार्द्धरात्रः ॥ २५ ॥

प्रसक्तदावानलधूमधूम्रा
निरुन्धती धाम सहस्ररश्मेः ।
महावनानीव महातमिस्रा
छाया ततानेशबलानि काली ॥ २६ ॥

अप्राकृतस्येति । अप्राकृतस्य उत्कटात्या असाधारणस्य आहवदुर्मदस्य रणमत्तस्य अस्य किरातस्य वीर्य्यं तेजः अस्त्रबलेन दिव्यास्त्रमहिम्ना निवार्य्यं निवारणीयम् । अन्यथा अनिवार्य्यत्वमस्येति भावः । तथाहि अल्पीयसोऽपि अत्यल्पस्यापि आमयतुल्यवृत्तेः रोगसमानविक्रियस्य । "रोगव्याधिगदा-मयाः" इत्यमरः । रिपोर्विवृद्धिर्महापकाराय । किन्त्वयं महानुभाव इति भावः ॥ २४

स इति । अहार्य्यसारः अनिवार्य्यवीर्य्यः सोऽर्जुनः एवं सम्प्रधार्य्य निश्चित्य सगणस्य सानुगस्य शत्रोः सारं सत्त्वं विनेष्यन् अपनेष्यन् प्रस्वाप्यन्ते शाय्यन्ते अनेनेति प्रस्वापनं तदेवास्त्रं घनानद्धो मेघावरुद्धः मेघश्यामः अर्द्धरात्रः निशीथः । "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः । "अर्द्धं नपुंसकम्" इति समासः । "अहः सर्वैकदेश" इत्यादिना समासान्तः "रात्राह्णाहाः पुंसि" इति पुंलिङ्गता । ध्वान्तमिव द्रुतम् आजहार आचकर्ष ॥ २५

प्रसक्तेति । प्रसक्तः सन्ततो यो यो दावानलधूमस्तद्वद् धूम्रा धूसरा सहस्ररश्मेर्धाम तेजो निरुन्धती आवृण्वती काली कृष्णवर्णा । "जानपद" इत्यादिना ङीष् । छाया कान्तिः । ईशबलानि महातमिस्रा महती तमः-सन्ततिः । "तमिस्रा तु तमस्ततिः" इति विश्वः । महावनानीव ततान व्यानशे ॥ २६

आसादिता तत्प्रथमं प्रसह्य
प्रगल्भतायाः पदवीं हरन्ती ।
सभेव भीमा विदधे गणानां
निद्रा निरासं प्रतिभागुणस्य ॥ २७ ॥

गुरुस्थिराण्युत्तमवंशजत्वा-
द्विज्ञातसाराण्यनुशीलनेन ।
केचित्समाश्रित्य गुणान्वितानि
सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८ ॥

कृतान्तदुर्वृत्त इवापरेषां
पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।
अतर्कितं पाणितलान्निपेतुः
क्रियाफलानीव तदायुधानि ॥ २९ ॥

अंसस्थलैः केचिदभिन्नधैर्य्याः
स्कन्धेषु संश्लेषवतां तरूणाम् ।

असादितेति । तदेव आसादनं प्रथमं तत्प्रथमं यथा तथा प्रसह्य आसादिता प्राप्ता, कल्पिता प्रगल्भतायाः व्यवहारधाष्ट्यस्य पदवीं हरन्ती भीमा भयङ्करी निद्रा उक्तविशेषणा सभा सभादिव गणानां प्रतिभा प्रज्ञा-शक्तिः सैव गुणस्तस्य निरासं प्रतिभाक्षयं विदधे चक्रे ॥ २७

गुर्वीति । केचिदुत्तमवंशजत्वात् वंशो वेणुः कुलञ्च । "वंशो वेणौ कुले च" इति विश्वः । गुरूणि महान्ति स्थिराणि दृढानि च गुरुस्थिराणि अनुशीलनेन परिचयबलेन विज्ञातः सारो बलं येषां तानि गुणैर्मौर्वीभिः शौर्य्यादिभिश्च अन्वितानि धनूंषि सुहृत्कुलानि मित्रकुलानीव समाश्रित्य तस्थुः, धनूंषि अवष्टभ्य निदध्युरित्यर्थः ॥ २८

कृतान्तेति । कृतान्तदुर्वृत्ते दैवदुश्चेष्टिते इव । "कृतान्तो यमसिद्धान्त-दैवाकुशलकर्मसु" इति विश्वः । पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि सति प्रति-कूलवर्त्तिनि सति तदा तस्मिन् काले अपरेषाम् आयुधानि क्रियाफलानि इव कृष्यादिफलानीव अतर्कितम् अविचारितमेव पाणितलान्निपेतुः ॥ २९

मदेन मीलन्नयनाः सलीलं
नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥

तिरोहितेन्दोरथ शम्भुमूर्ध्नः
प्रणम्यमानं तपसां निवासैः ।
सुमेरुशृङ्गादिव बिम्बमार्कं
पिशङ्गमुच्चैरुदियाय तेजः ॥ ३१ ॥

छायां विनिर्धूय तमोमयीं तां
तत्त्वस्य संवित्तिरिवापविद्याम् ।
ययौ विकाशं द्युतिरिन्दुमौले-
रालोकमत्यादिशती गणेभ्यः ॥ ३२ ॥

त्विषां ततिः पाटलिताम्बुवाहा
सा सर्वतः पूर्वसरीव सन्ध्या ।
निनाय तेषां द्रुतमुल्लसन्ती
विनिद्रतां लोचनपङ्कजानि ॥ ३३ ॥

अंसेति । अभिन्नधैर्य्यास्तदानीमपि अपच्युतधैर्य्याः केचित् अंसस्थले-रंसभागैः सह संश्लेषवतां मङ्गच्छतां तरूणां स्कन्धेषु प्रकाण्डेषु मदेन मीलन्ति नयनानि येषां ते नागाः गजा इव स्रस्तकराः अस्तहस्ताः सन्तः सलीलं निषेदुर्निषण्णाः ॥ ३०

तिरोहितेति । अथ तिरोहितेन्दोः किरातमायया छन्नचन्द्रात् शम्भु-मूर्ध्नः सकाशात् सुमेरुशृङ्गात् अर्कसम्बन्धि बिम्बमिव तपसां निवासैस्तापसैः प्रणम्यमानम् अभिवन्द्यमानं पिशङ्गं तेजः उच्चैरूर्द्ध्वम् उदियाय प्रकटी-बभूव तत्र तत्र अटन्निति [तच्च न चान्द्रमिति ] भावः ॥ ३१

छायामिति । इन्दुमौलेर्द्युतिः कान्तिः, तत्त्वस्य संवित्तिर्ज्ञानं तत्त्व-ज्ञानम् अपविद्याम् अविद्यामिव तां तमोमयीं छायां निद्रां विनिर्धूय निरस्य गणेभ्यः आलोकं वस्तुप्रकाशं चिरम् अत्यादिशती वितरन्ती विकाशं विस्तारं ययौ ॥ ३२

त्विषामिति । सर्वतः पाटलिताः पाटलीकृताः अम्बुवाहाः यया सा

पृथग्विधान्यस्त्रविरामबुद्धाः
शस्त्राणि भूयः प्रतिपेदिरे ते ।
मुक्ता वितानेन बलाहकानां
ज्योतींषि रम्या इव दिग्विभागाः ॥३४॥

द्यौरुन्ननामेव दिशः प्रसेदुः
स्फुटं विसस्रे सवितुर्मयूखैः ।
क्षयं गतायामिव यामवत्यां
पुनः समीयाय दिनं दिनश्रीः ॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्नं
दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान् भुजवीर्य्यशाली
प्रबन्धनाय प्रणिधाय जिष्णुः ॥ ३६ ॥

तयोक्ता त्विषां तेजसां ततिः । पूर्वां सरतीति पूर्वसरी । "पूर्वे कर्त्तरि" इति टप्रत्यये ङीप् । "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पूर्वाशब्दस्य पुंवद्भावः । सन्ध्या प्रातःसन्ध्या इव उन्नमन्ती प्रसरन्ती तेषां गणानां लोचनपङ्कजानि द्रुतं विनिद्रतां विकासं निनाय ॥ ३३

पृथगिति । अस्त्रविरामेण प्रस्वापनास्त्रोपरमेण बुद्धा विनिद्रास्ते गणा बलाहकानां वितानेन मेघपटलेन मुक्ता अत एव रम्या दिग्विभागा दिगन्ताः ज्योतींषि नक्षत्राणि इव । "ज्योतिस्ताराग्निभाज्वालादृक्प्रकाशात्मसु" इति वैजयन्ती । पृथग्विधानि नानाविधानि शस्त्राणि भूयः प्रतिपेदिरे जगृहुरित्यर्थः ॥ ३४

द्यौरिति । तदा यामवत्यां रात्रौ क्षयं गतायां विभातायामिव द्यौरन्तरिक्षम् उन्ननामेव ऊर्ध्वम् उत्पपातेव इत्युत्प्रेक्षा । दिशः प्रसेदुः । सवितुर्मयूखैः स्फुटं स्पष्टं विसस्रे विस्तृतम् । भावे लिट् । दिनश्रीर्वासरकान्तिः पुनर्दिनं समीयाय संजगाम । अत्र वैयधिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयोऽलङ्कारः, तस्य च समुन्नमनोत्प्रेक्षया इव शब्दवाच्ययानुप्रवेशलक्षणः सङ्करः । दिक्प्रसादो गुणः । शेषाः क्रियाः ॥ ३५

महास्त्रेति । भुजवीर्य्यशाली जिष्णुरर्जुनो महास्त्रं प्रस्वापनास्त्रं तत्

जिह्वाशतान्युल्लसयन्त्यजस्रं
लसत्तडिल्लोलविषानलानि ।
त्रासान्निरस्तां भुजगेन्द्रसेना
नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥

दिङ्नागहस्ताकृतिमुद्वहद्भि-
र्भोगैः प्रशस्तासितरत्ननीलैः ।
रराज सर्पावलिरुल्लसन्ती
तरङ्गमालेव नभोऽर्णवस्य ॥ ३८ ॥

निःश्वासधूमैः स्थगितांशुजालं
फणावतामुत्फणमण्डलानाम् ।
गच्छन्निवास्तं वपुरभ्युवाह
विलोचनानां सुखमुष्णरश्मिः ॥ ३९ ॥

दुर्गमिव तस्मिन् महास्त्रदुर्गे दिग्वारणेन दिग्गजेन इव परेण शत्रुणा शिथिलप्रयत्नम् अल्पप्रयासं यथा तथा रुग्णे भग्ने सति । 'रुजो भङ्गे' कर्मणि क्तः, "ओदितश्च" इति निष्ठातकारस्य नत्वम् । प्रबन्धनाय प्रकर्षेण बन्धनाय भुजङ्गा एव पाशास्तान् प्रहितवान् ॥ ३६

जिह्वेति । लसन्तस्तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि जिह्वाशतानि अजस्रम् उल्लसयन्ती चलयन्ती । भुजगेन्द्रसेना त्रासात् भयात् नभश्चरैर्निरस्तां त्यक्तां तेषां नभश्चराणां पदवीं मार्गं विवव्रे विशेषेण रुरोध ॥ ३७

दिङ्नागेति । दिङ्नागहस्ताकृतिम् उद्वहद्भिर्दिक्करिकराकारैस्तथा प्रशस्तानि समीचीनानि असितरत्नानि इन्द्रनीलमणयस्तद्वत् नीलैर्भोगैः कायैरुपलक्षिता सर्पावलिरुल्लसन्ती प्रक्षुभ्यन्ती नभ एव अर्णवस्तस्य तरङ्ग-माला इव रराज । रूपकोत्थापितेयमुत्प्रेक्षा ॥ ३८

निःश्वासेति । उष्णरश्मिरस्तं गच्छन् इव उन्नमितानि फणामण्डलानि येषां तेषां फणावतां सर्पाणां निःश्वासेषु ये धूमास्तैः स्थगितम् आच्छादित-मंशुजालं यस्य तत् तथोक्तम्, अतएव विलोचनानां सुखं सुखकरं वपुरभ्यु-वाह ॥ ३९

प्रतप्तचामीकरभासुरेण
दिशः प्रकाशेन पिशङ्गयन्त्यः ।
निश्चक्रमुः प्राणहरेक्षणानां
ज्वाला महोल्का इव लोचनेभ्यः ॥४०॥

आच्छिन्नसम्पातमपेतशोभ-
मुद्वह्नि धूमाकुलदिग्विभागम् ।
वृतं नभो भोगिकुलैरवस्थां
परोपरुद्धस्य पुरस्य भेजे ॥ ४१ ॥

तमाशु चक्षुःश्रवसां समूहं
मन्त्रेण तार्क्ष्योदयकारणेन ।
नेता नयेनेव परोपजापं
निवारयामास पतिः पशूनाम् ॥ ४२ ॥

प्रतप्तेति । प्राणहराणि ईक्षणानि येषां तेषां प्राणहरेक्षणानां दृष्टिविषाणां सर्पविशेषाणां लोचनेभ्यो नेत्रेभ्यः । "लोचनं नयनं नेत्रम्" इत्यमरः । प्रतप्तं यच्चामीकरं सुवर्णं तद्वत् भासुरेण । "भञ्जभासमिदो घुरच्" इति घुरच्-प्रत्ययः । प्रकाशेन तेजसा दिशः पिशङ्गयन्त्यो ज्वाला महोल्का इव निश्चक्रमुर्निर्जग्मुः ॥ ४०

आच्छिन्नेति । आच्छिन्नः प्रतिषिद्धः सम्पातः सञ्चारो यस्मिन् तत् मित्राणां पक्षिणाञ्चेति शेषः । अपेता गता शोभा यस्मात् तदपेतशोभं गतश्रीकम् । उद्गतः[उद्गतवह्निधूमाभ्याम्]प्रदीप्तो वह्निर्यस्मिंस्तत् उद्गतवह्नि सर्वत उद्भूतदहनम् । धूमैराकुलाः व्याप्ता दिग्विभागाः दिगन्ताः यस्मिन् तत् भोगिकुलैः सर्पकुलैर्वृतमावृतं नभः परोपरुद्धस्य शत्रुवेष्टितस्य पुरस्यावस्थामिव अवस्थां दशां भेजे, उक्तरीत्या तत्साधर्म्यं प्राप्तमित्यर्थः । निदर्शनालङ्कारः ॥ ४१

तमिति । पशूनां पतिः शिवस्तं चक्षुःश्रवसां सर्पाणां समूहं तार्क्ष्योदयकारणेन गरुड़ाविर्भावहेतुना मन्त्रेण नेता नायको नयेन नीत्या परेषाम् उपजापं परोपजापं परकृतं स्वमण्डलभेदमिव । "भेदोपजापावुपधा" इत्यमरः । आशु निवारयामास ॥ ४२

प्रतिघ्नतीभिः कृतमीलितानि
द्युलोकभाजामपि लोचनानि।
गरुत्मतां संह [न्त]तिभिर्विहायः
क्षणप्रकाशाभिरिवावतेने ॥ ४३ ॥

ततः सुपर्णव्रजपक्षजन्मा
नानागतिर्मण्डलयन् जवेन।
जरत्तृणानीव वियन्निनाय
वनस्पतीनां गहनानि वायुः ॥ ४४ ॥

मनःशिलाभङ्गनिभेन पश्चा-
न्निरुध्यमानं निकरेण भासाम्।
व्यूढैरुरोभिश्च विनुद्यमानं
नभः ससर्पेव पुरः खगानाम् ॥ ३५ ॥

प्रतीति। द्युलोकभाजामपि अनिमिषाणामपि कृतं मीलनं निमेषो येषां तानि लोचनानि दृष्टीः प्रतिघ्नतीभिः प्रतिबध्नतीभिः। हन्तेः शतरि ङीप्। गरुत्मतां तार्क्ष्याणां संहतिभिः समूहैः क्षणप्रकाशाभिर्विद्युद्भिरिव तासां सौवर्णत्वादिति भाव.। विहायः अन्तरिक्षम् अवतेने व्यानशे ॥ ४३

तत इति। ततः सुपर्णव्रजानां तार्क्ष्यकुलानां पक्षेभ्यो जन्म यस्य स नानागतिर्विचित्रगतिर्वायुः वनस्पतीनां वृक्षाणां गहनानि जरत्तृणानि जीर्णतृणानीव जवेन मण्डलयन् भ्रमयन् वियदन्तरिक्षं निनाय ॥ ४४

मनःशिलेति। मनःशिला धातुविशेषस्तस्या भङ्गश्छेदः तन्निभेन तत्सदृशेन भासां निकरेण कान्तिपुञ्जेन पश्चाद्भागे निरुध्यमानम् आव्रियमाणं व्यूढैर्विशालैरुरोभिर्वक्षोभिश्च। "उरो वत्सञ्च वक्षश्च" इत्यमरः। विनुद्यमानं प्रेर्यमाणं नभः खगानां गरुडानां पुरः ससर्पेव ससारेव। उत्तरोत्तरदेशतिरोधानेन गच्छतां खगानाम् अपूर्वोऽपि पुरोभागः सादृश्यात् पूर्ववदुपलभ्यमानतया नभस एव छेदनात् पुरः ससर्प इव इत्युत्प्रेक्षालङ्कारः ॥ ४५

दरीमुखैरासवरागताम्रं
विकासि रुक्मच्छदधाम पीत्वा।
जवानिलाघूर्णितसानुजालो
हिमाचल: क्षीव इवाचकम्पे॥ ४६॥

प्रवृत्तनक्तन्दिवसन्धिदीप्तै-
र्नभस्तलं गाञ्च पिशङ्गयद्भि:।
अन्तर्हितार्कै: परित: पतद्भि-
श्छाया: समाचिक्षिपिरे वनानाम्॥४७॥

स भोगिसङ्घ: शममुग्रधाम्नां
सैन्येन निन्ये विनतासुतानाम्।
महाध्वरे विध्यपचारदोष:
कर्मान्तरेणेव महोदयेन॥ ४८॥

दरीति। जवानिलेन आघूर्णितानि भ्रमितानि सानुजालानि यस्य स हिमाचल: आसवस्य रागो रक्तता तद्वत् ताम्रम्। गुणयोरेव उपमानोपमेयभाव:। विकासि विकस्वरं रुक्मच्छदा: सुपर्णपक्षास्तार्क्ष्या: तेषां धाम तेजो दरीभिर्मुखैरिव दरीमुखै: पीत्वा क्षीबो मत्त इव आचकम्पे आचचाल। उपमाव्यापितेयमुत्प्रेक्षा॥ ४६

प्रवृत्तेति। नक्तञ्च दिवा च नक्तन्दिवम्। "अचतुर" इत्यादिना सप्तम्यर्थवृत्तयोरप्यव्यययोर्द्वन्द्वैकवद्भावनिपात: समासान्त:। लक्षणया तु अहोरात्रमात्रवाची। प्रवृत्त: प्रादुर्भूतो यो नक्तन्दिवस्य सन्धि: सन्ध्या तद्वत् दीप्तै: शोभितैर्नभस्तलं गां भुवञ्च पिशङ्गयद्भि: पिशङ्गीकुर्वद्भिरन्तर्हित: आच्छादितोऽर्को यैस्तै: पतद्भि: पक्षिभि: परित: सर्वतो वनानां छाया: समाचिक्षिपिरे समाक्षिप्ता, अन्तर्बहिश्च तेज:प्रकाशात् क्वापि अन्तर्हितेत्यर्थ: ॥४७

स इति। स भोगिसङ्घ: सर्पसमूह: उग्रधाम्नां तेजस्विनां विनतासुतानां तार्क्ष्याणां पक्षिणां सैन्येन महाध्वरे महाक्रतौ विध्यपचारदोष: कर्मस्खलनदोष: महोदयेन महासामर्थ्येन अथवा महता फलेन तन्मूलेन प्रकृतक्रियासिद्धेरिति कर्मान्तरेण प्रायश्चित्तेन इव शमं शान्तिं निन्ये प्रापित:॥ ४८

साफल्यमस्त्रे रिपुपौरुषस्य
कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः
समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥ ४९ ॥

ऊर्द्ध्वं तिरश्चीनमधश्च कीर्णै-
र्ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात
प्राण्यन्तमिच्छन्निव जातवेदाः ॥ ५० ॥

भित्त्वेव भाभिः सवितुर्मयूखान्
जज्वाल विष्वग्विसृतस्फुलिङ्गः ।
विशी[दी]र्य्यमाणाश्मनिनादधीरं
ध्वनिं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥

साफल्यमिति । अस्त्रे सर्पास्त्रे । भाग्ये प्रागभवीये शुभे कर्मणि इव । रिपुपौरुषस्य रिपुपराक्रमस्य साफल्यं कृत्वा अपवर्गम् अवसानं समाप्तिं गते सति स्वनिवृत्त्या परसाफल्यात् सफलीकरणोपचारः । समन्युः सक्रोधो जिष्णुरर्जुनः अनिन्धनस्य इन्धनं विनैव उत्पादितस्य ज्वलनस्य ज्वलनप्रदीपकम् अस्त्रम् आग्नेयास्त्रं प्रसभं शीघ्रं समाददे जग्राह ॥ ४९

ऊर्द्ध्वमिति । ऊर्द्ध्वं तिरश्चीनं तिर्य्यक् । "विभाषाञ्चेरदिक् स्त्रियाम्" इति खप्रत्ययः । अधश्च कीर्णैर्विस्तृतैर्ज्वाला एव सटाः केसराः । "सटा जटाकेसरयोः" इति विश्वः । तैर्लङ्घितमेघपङ्क्तिः अतिक्रान्तजलदावलिः आयतस्य लङ्घनोद्यतस्य सिंहस्य इव आकृतिर्यस्य स जातवेदा अग्निः प्राण्यन्तं प्राणिनां संहारम् इच्छन्निव उत्पपात ॥ ५०

भित्त्वेति । भाभिस्तेजोभिः सवितुर्मयूखान् किरणान् । "किरणोऽस्त्रमयूखांशु" इत्यमरः । भित्त्वेव अभिहत्येव विष्वक् समन्तात् विसृताः स्फुलिङ्गा यस्य सः स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वम् उत्प्रेक्षते । "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः । अकृशोऽतनुः कृशानुर्वह्निः विशी-[दी]र्य्यमाणस्य विदलतोऽश्मनो निनादमिव घोरमुद्धतं ध्वनिं वितन्वन् जज्वाल ॥ ५१

चयानिवाद्रीनिव तुङ्गशृङ्गान्
क्वचित्पुराणीव हिरण्मयानि।
महावनानीव च किंशुकानां
ततान वह्निः पवनानुवृत्त्या ॥ ५२ ॥

मुहुश्चलत्पल्लवलोहिनीभि-
रुच्चैः शिखाभिः शिखिनोऽवलीढाः।
तलेषु मुक्ताविशदा बभूवुः
सान्द्राञ्जनश्यामरुचः पयोदाः ॥ ५३ ॥

लिलिक्षतीव क्षयकालरौद्रे
लोकं विलोलार्चिषि लो[रो]हिताश्वे।
पिनाकिना हुतमहाम्बुवाह-
मस्त्रं पुनः पाशभृतः प्रणिन्ये ॥५४॥

चयानिति। वह्निः पवनानुवृत्त्या वायुवशेन चयानिव हिरण्मयान् प्राकारान् इव। "चयः समूहे प्राकारे" इति विश्वः। तुङ्गशृङ्गान् अद्रीनिव क्वचित् हिरण्मयानीति "दाण्डिनायन" इत्यादिना निपातनात् साधुः। पुराणि नगराणीव तथा किंशुकानां पलाशतरूणाम्। "पलाशे किंशुकः पर्णः" इत्यमरः। महावनानीव पुष्पितानीति भावः। ततान वितस्तार, तदाकारेण जज्वाल इत्यर्थः॥ ५२

मुहुरिति। सान्द्राञ्जनश्यामरुचः घनकज्जलश्यामरुचः पयोदा मुहुश्चलन्त्यश्च ताः पल्लवलोहिन्यो लोहितवर्णाश्च ताभिश्चलत्पल्लवलोहिनीभिः। "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीप्। तकारस्य नकारः। शिखिनः अग्नेः उच्चैरुन्नताभिः शिखाभिर्ज्वालाभिरवलीढाः दग्धा इत्यर्थः। अत एव तलेषु अधोभागेषु मुक्ताविशदा मौक्तिकधवला बभूवुः, जलसंशोषणादिति भावः। "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः॥ ५३॥

लिलिक्षतीति। क्षयकालरौद्रे कल्पान्तकालभयावहे विलोलार्चिषि चलज्ज्वाले लो[रो]हिताश्वे ज्वलने। "लो[रो]हिताश्वो वायुसखः" इत्यमरः। लोकं लिलिक्षति लेढुमिच्छति सति जिघत्सति सतीव। लिहेः सन्नन्तात्

ततो धरित्रीधरतुल्यरोधस-
स्तड़िल्लतालिङ्गितनीलमूर्त्तयः ।
अधोमुखाकाशसरिन्निपातिनी-
रपः प्रसक्तं मुमुचुः पयोमुचः ॥५५॥

पराहतध्वस्तशिखे शिखावतो
वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं
पयोनिपाताः प्रथमे वितेनिरे ॥५६॥

महानले भिन्नसिताभ्रपातिभिः
समेत्य सद्यः क्वथनेन फेनताम् ।
व्रजद्भिरार्द्रेन्धनवत्परिक्षयं
जनैर्वितेने दिवि धूमसन्ततिः ॥ ५७ ॥

णत्प्रत्ययः। पिनाकिना पुनर्हृताः आहृताः आकारिता महाम्बुवाहाः येन तत् पाशभृतो वरुणस्य अस्त्रं प्रणिन्ये प्रयुक्तम् ॥ ५४

तत इति। ततो वरुणास्त्रप्रयोगानन्तरं धरित्रीधरतुल्यरोधसः पर्वतसमप्रान्ताः। "रोधः स्यात् प्रान्तकूलयोः" इति विश्वः। तड़िल्लताभिः आलिङ्गिता नीलमूर्त्तयो नीलाङ्गानि येषां ते पयोमुचो मेघाः अधोमुखी आकाशसरिदिव निपतन्तीति अधोमुखाकाशसरिन्निपातिनीः। "कर्त्तर्य्युपमाने" इति णिनिः। अपो जलानि प्रसक्तम् अनुबन्धमविच्छिन्नं यथा तथा मुमुचुः। इतः प्रभृति वंशस्थवृत्तम् ॥ ५५

पराहतेति। पराहताः अभिहताः अतो ध्वस्ता निर्वापिताः शिखा ज्वाला यस्य तस्मिन् पराहतध्वस्तशिखे। अधिक्षिप्तं प्रहारितं नाशितं ताड़ितमिति यावत्। अतः समिद्धं झटिति प्रदीप्तं तेजो यस्य तस्मिन् शिखावतोऽग्नेर्वपुषि स्वरूपे तप्ते अयसि लौहे इव कृतास्पदाः कृतस्थितयः। "आस्पदं प्रतिष्ठायाम्" इति निपातः। प्रथमे पयोनिपाताः जलपाता ध्वनिं वितेनिरे विस्तारयामासुः ॥ ५६

महानल इति। महानले अग्नौ भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः। "कर्त्तर्य्युपमाने" इति णिनिप्रत्ययः।

स्वकेतुभिः पाण्डुरनीलपाटलैः
समागताः शक्रधनुःप्रभाभिदः ।
असंस्थितामादधिरे विभावसो-
र्विचित्रचीनांशुकचारुतां त्विषः ॥५८॥

जलौघसम्मूर्च्छनमूर्च्छितस्वनः
प्रसक्तविद्युल्लसितैधितद्युतिः ।
प्रशान्तिमेष्यन् धृतधूममण्डलो
बभूव भूयानिव तत्र पावकः ॥ ५९ ॥

प्रवृद्धसिन्धूर्मिचयस्थवीयसां
चयैर्विभिन्नाः पयसां प्रपेदिरे ।
उपात्तसन्ध्यारुचिभिः सरूपतां
पयोदविच्छेदलवैः कृशानवः ॥ ६० ॥

अत एव सद्यः क्वथनेन पाकेन फेनतां समेत्य प्राप्य परिक्षयं नाशं व्रजद्भिर्जलैरार्द्रेन्धनवत् आर्द्रकाष्ठैस्तुल्यम् । "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः । दिवि गगने धूमसन्ततिर्वितेने विस्तारिता । फेनादिकम् आर्द्रेन्धनेऽपि तुल्यम् ॥ ५७

स्वकेतुभिरिति । पाण्डुरैर्नीलैः पाटलैश्च पाण्डुरनीलपाटलैर्विचित्रैः स्वकेतुभिर्धूमैः समागताः सङ्गताः अत एव शक्रधनुषः प्रभाभिदः इन्द्रधनुर्द्युतिभाजः विभावसोरग्नेः त्विषः असंस्थिताम् अस्थिरां विचित्रस्य चीनांशुकस्य पट्टवस्त्रविशेषस्य पट्टदुकूलस्य चारुताम् आदधिरे दधुः ॥ ५८

जलौघेति । जलौघानाम् उदकप्रवाहाणां सम्मूर्च्छनेन मेलनेन मूर्च्छितस्वनः प्रवृद्धघोषः ।"मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा" इति सज्जनः । प्रसक्तैः सङ्गतैर्विद्युतां तडिल्लतानां लसितैः स्फुरणैरेधिता वर्द्धिता द्युतिर्यस्य सः धृतधूममण्डलः जलाघातात् सम्भूतधूमपटलः पावकः प्रशान्तिमेष्यन् तत्र देशे भूयानिव बभूव । भूयस्त्वस्यास्थायित्वात् इवेत्युक्तम् ॥ ५९

प्रवृद्धेति । प्रवृद्धानां सिन्धोः समुद्रस्य ऊर्मीणां चया राशय इव । स्थवीयसां स्थूलतराणां चयैः पूरैर्विभिन्ना विश्लेषिताः, कृशानवोऽग्नयः उपात्तसन्ध्यारुचिभिः प्राप्तसन्ध्यारागैः पयोदानां विच्छिद्यन्ते इति

उपैत्यनन्तद्युतिरप्यसंशयं
विभिन्नमूलोऽनुदयाय संक्षयम् ।
तथाहि तोयौघविभिन्नसंहतिः
स हव्यवाहः प्रययौ पराभवम् ॥ ६१ ॥

अथ विहितविधेयैराशु मुक्ता वितानै-
रसितनगनितम्बश्यामभासां घनानाम् ।
विकसदमलधाम्नां प्राप नीलोत्पलानां
श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः ॥६२॥

इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमरनयज्ञः सादयिष्यन्नरातिम् ।
विधिरिव विपरीतः पौरुषं न्यायवृत्तेः
सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः ॥ ६३ ॥

विच्छेदा विच्छिन्ना विक्षिप्ता ये लवाः शकलास्तैः सरूपतां समानरूपतां प्रपेदिरे इत्युपमा ॥ ६०

उपैतीति । अनन्तद्युतिर्महातेजा: अपि विभिन्नमूलो नष्टमूलः असंशयं यथा तथा अनुदयाय पुनरनुत्थानाय संक्षयं नाशमुपैति । तथाहि—तोयौघैर्विभिन्ना संहतिः सङ्घातो यस्य स तथोक्तः स हव्यवाहोऽग्निः पराभवं नाशं प्रययौ । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६१

अथेति । अथ अग्निनिर्वाणानन्तरं विहितविधेयैः कृतकृत्यैरसितनगस्य अञ्जनाद्रेर्नितम्बः कटकः तद्वत् श्यामभासां घनानां वितानैः पटलैर्मुक्ता द्यौराकाशो वह्निदाहादिवेति उत्प्रेक्षा । विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां नीलोत्पलानाम् अधिकविशुद्धाम् अत्युज्ज्वलां श्रियं प्राप इति । निदर्शनालङ्कारः ॥ ६२

इतीति । बहुसमरनयान् अनेकरणोपायान् जानातीति बहुसमरनयज्ञः । "आतोऽनुपसर्गे कः' इति कप्रत्ययः । न तु "इगुपध" इत्यादिना आकारान्तादनुपपदात् "अनुपपदात् कर्मोपपदो भवति विप्रतिषेधेन" इति वार्त्तिकव्याख्याने भाष्यकारेण अर्थज्ञशब्दम् उदाहृत्य अस्य अर्थशब्दस्य

वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष जयिनीं भुजवीर्य्यलक्ष्मीम् ।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णु-
र्वर्षिष्यता दिनकृतेव जलेषु लोकः ॥ ६४ ॥

इति श्रीमहामहोपाध्यायभारविकृतौ किरातार्जुनीये
किरातार्जुनयुद्धं नाम षोड़शः सर्गः ॥ १६ ॥

---

कर्म्मोपपदत्वं दर्शिम् । सव्यसाची अर्जुनः अरातिं किरातपतिं सादयिष्यन् अवसादयितुकामः सन् इत्यर्थः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । इति पूर्व्वोक्तप्रकारेण विविधं यदस्त्रम् उदासे प्रयुक्तवान् इत्यर्थः । "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इत्यात्मनेपदम् । विपरीतो विधिः प्रतिकूलं दैवम् । "विधिर्विधाने दैवेऽपि" इत्यमरः । न्यायेन नीत्या वृत्तिर्वर्त्तनं यस्य तस्य नीतिनिष्ठस्य पौरुषम् इव नीलकण्ठः शिवः सपदि तदस्त्रं रिक्ततां व्यर्थताम् उपनिन्ये संहृतवान् । मालिनीवृत्तम् ॥ ६३

वीतेति । भूतपतिना शम्भुना अनुग्रहीष्यता इति शेषः । अस्त्रेषु अपहृतेषु सत्सु वर्षिष्यता उत्तरत्र सहस्रगुणं वितरिष्यता दिनकृता सूर्य्येण जलेषु अपहृतेषु सत्सु लोक इव वीतप्रभावो गतास्त्रमहिमा अन्यत्र गतशक्तिः अत एव तनुः क्षीणो वीतप्रभावतनुः तथापि अतनुप्रभावो निसर्गतः सामर्थ्यात् अधिकः अन्यत्र उद्योगवान्, ततो जिष्णुरर्जुनः जयिनीं जयनशीलाम् । "जिदृक्षि" इत्यादिना इनिप्रत्ययः । भुजवीर्य्यलक्ष्मीं भुजपराक्रमसम्पदम् । उभयत्रापि पुरुषकारमिति यावत् । तत्कालकुण्ठितामिति शेषः । प्रत्याचकाङ्क्ष प्रत्याहर्त्तुमियेष इत्यर्थः । यथा लोको नद्यादिजलापहारेऽपि उपायान्तरेण कूपादिना जीवितुमिच्छति तद्वत् अस्त्रबलापहारेऽपि भुजबलेनैव जेतुमियेष इति भावः । वसन्ततिलकावृत्तम् ॥ ६४

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
षोड़शः सर्गः ॥ १६

# सप्तदश: सर्ग: ।

—:०:—

अथापदामुद्धरणक्षमेषु
मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥ १ ॥
भूरिप्रभावेण रणाभियोगात्
प्रीतो विजिह्मश्च तदीयवृत्त्या ।
स्पष्टोऽप्यविस्पष्टवपु:प्रकाश:
सर्पन्महाधूम इवाद्रिवह्नि: ॥ २
तेज: समाश्रित्य परैरहार्य्यं
निजं महन्मित्रमिवोरुधैर्य्यम् ।
आसादयन्नस्खलितप्रभावं
भीमे भुजालम्बमिवारिदुर्गे ॥ ३ ॥

अथ पञ्चभि: पार्थं विशेषयन् षड्भि: कुलकमाह—अथेत्यादिभि: । अथ जयलक्ष्मीप्रत्याकाङ्क्षानन्तरमापदाम् उद्धरणक्षमेषु आपन्निवारणेषु अस्त्रेषु प्रस्वापनादिषु तादृशेषु मित्रेष्विव तिरोहितेषु अन्तर्हितेषु सत्सु गुरुणा महता स्वपौरुषेणेव तादृशेन शरासनेन धृतिं धैर्य्यमभिपुष्यन् वर्द्धयन् अद्यापि धनुषि पौरुषे च सति कियानयं किरात इति धैर्य्यमवलम्बमान इत्यर्थ: । अत एव गुरुश्री: प्रवृद्धशोभासम्पत्ति: । "पद्मा मा लक्ष्मी: श्रीर्निगद्यते" इति शाश्वत: ॥ १

भूरीति । पुनश्च भूरिप्रभावेण महानुभावेन सह रणाभियोगात् युद्धलाभात् प्रीत: । तदीववृत्त्या शत्रुवृत्त्या विजिह्मो विच्छायश्च तथा स्पष्टो दीप्त्या प्रज्वलन्नपि अविस्पष्टो वपु:प्रकाशो यस्य स: । कुत: ? सर्पन् प्रसरन् महान् धूमो यस्य स सर्पन्महाधूमोऽद्रिवह्निरिव स्थित: ॥ २

वंशोचितत्वादभिमानवत्या
सम्प्राप्तया सम्प्रियतामसुभ्यः ।
समक्षमादित्सितया भरेण
वध्वेव कीर्त्त्या परितप्यमानः ॥ ४ ॥
पतिं नगानामिव बद्धमूल-
मुन्मूलयिष्यन् तरसा विपक्षम् ।
लघुप्रयत्नं निगृहीतवीर्य्य-
स्त्रिमार्गगावेग इवेश्वरेण ॥ ५ ॥

तेज इति । पुनश्च पर्वैररिभिः अहार्य्यमभेद्यं निजं स्वकीयं महत्तेजो वीर्य्यं मित्रमिव समाश्रित्य । अत एव भीमे भयानके अरिरिव दुर्गं तस्मिन् अरिदुर्गे शत्रुसङ्कटे अस्खलितस्वभावम् अचलशीलम् उरु महद्धैर्य्यं भुजावलम्बमिव हस्तावष्टम्भमिव आसादयन् प्राप्नुवन् । ईदृशे सङ्कटेऽपि महावीर्य्यत्वात् धैर्य्यम् अत्यजन्नित्यर्थः ॥ ३

वंशेति । पुनश्च अभिमानो ममताबुद्धिः तद्वत्या विषयतया । कर्म्मणि कर्त्तृत्वोपचारः । अभिमानास्पदेनेत्यर्थः । अन्यत्र कुलशीलाद्यभिमानवत्या वंशोचितत्वात् स्वकुलानुरूपत्वात् असुभ्यः प्राणेभ्योऽपि सम्प्रियतां सम्प्राप्तया परेण शत्रुणा अक्ष्णोः समीपे समक्षम् अव्ययतः । "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच्प्रत्ययः । आदातुं ग्रहीतुम् इष्टया आदित्सितया आजिहीर्षितया इत्यर्थः । आङ्पूर्वाद्दातेः सन्नन्तात् कर्म्मणि क्तः । वध्वा इव कीर्त्त्या हेतुना परितप्यमानः । कर्त्तरि शानच् "हेतौ" इति तृतीया । कन्यया शोक इतिवत् ॥ ४

पतिमिति । पुनश्च नगानां पतिं हिमवन्तम् इव बद्धमूलं विपक्षं शत्रुं तरसा बलेन उन्मूलयिष्यन् उत्पाटयिष्यन् । किञ्च त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । उत्तरपदसमासः । तस्या वेग इव ईश्वरेण लघुप्रयत्नम् अल्पप्रयासं यथा तथा निगृहीतवीर्य्यः प्रतिबद्धशक्तिः हतास्त्रशक्तिरिति यावत् । पुराकिल हिमाद्रिविदलनाय गगनात् पतन्तं गङ्गाप्रवाहं गङ्गाधरो निजजटाजूटेन निजग्राह इति पौराणिकी कथा । तद्वदित्यर्थः ॥ ५

संस्कारवत्त्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु।
जयं यथार्थेषु शरेषु पार्थः
शब्देषु भावार्थमिवाशशंसे ॥ ६ ॥

भूयः समाधानविवृद्धतेजा
नैवं पुरा युद्धमिति व्यथावान्।
स निर्ववामास्रममर्षनुन्नं
विषं महानाग इवेक्षणाभ्याम् ॥ ७ ॥

तस्याहवायासविलोलमौलेः
संरम्भताम्रायतलोचनस्य।

संस्कारेति। एवम्भूतः पार्थः संस्कारवत्त्वात् संस्कारश्चित्तवासना अन्यत्र साधुत्वम्। असाधूनां प्रयोगनिषेधादिति भावः। अथवा संस्कारो व्युत्पत्तिस्तद्वत्त्वात्, चेतो रमयत्सु, प्रयोगः सन्धानमोक्षादिः शिक्षाभ्यासो गुणः तदाहितोऽतिशयो मौर्वी वा। अन्यत्र तु प्रयोगोऽभियुक्तव्यवहारः शिक्षाभ्यासः गुणाः स्वस्वस्थानकरणादयः श्लेषप्रमादादयो वा ते भूषणं येषां तेषु यथा यथाभूता अर्था येषां तेषु यथार्थेषु। अन्यत्र नियतार्थेषु। शृणन्ति हिंसन्तीति शराः तेषु जयम्। तन्निर्वाहकत्वात् तदाधारत्वविवक्षायां सप्तमी। शब्देषु उपपदेषु भावः प्रवृत्तिनिमित्तं सामान्यादिः स एवार्थस्तमिव आशशंसे आचकाङ्क्षे। शास्तिशंसत्योराङ्पूर्वयोरिच्छायामात्मनेपदमुपसंख्यानात्। तथा शाब्दिकाः शब्दैरर्थं साधयन्ति तद्वदयं शरैर्जयं साधयितुमियेष इत्यर्थः ॥ ६

भूय इति। भूयः पुनरपि समाधानेन युद्धाय मनोव्यवस्थापनेन विवृद्धतेजाः प्रवृद्धप्रतापः पुरा पुरातनं युद्धमेवम् इत्थं शक्तिसादकरं न भवतीति हेतोर्व्यथावान् परितापवान् सोऽर्जुनः ईक्षणाभ्यां दृष्टिभ्यां महानागो महासर्पो विषमिव अमर्षनुन्नं क्रोधोत्थापितम् अस्रम् अश्रु निर्ववाम निर्जगार। सात्त्विकानां रससाधारण्यात् रौद्रे रसेऽश्रूदयोक्तिः। "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः" ॥ ७

निर्वापयिष्यन्निव रोषतप्तं
प्रस्नापयामास मुखं निदाघः ॥ ८ ॥
क्रोधान्धकारान्तरितो रणाय
भ्रूभेदरेखाः स बभार तिस्रः ।
घनोपरुद्धः प्रभवाय वृष्टे-
रूर्द्ध्वांशुराजीरिव तिग्मरश्मिः ॥ ९ ॥
स प्रध्वनय्याम्बुदनादि चापं
हस्तेन दिङ्नाग इवाद्रिशृङ्गम् ।
बलानि शम्भोरिषुभिस्तताप
चेतांसि चिन्ताभिरिवाशरीरः ॥ १० ॥
सद्वादितेवाभिनिविष्टबुद्धौ
गुणाभ्यसूयेव विपक्षपाते ।

तस्येति । आहवायासेन युद्धायासेन विलोलमौलिः स्रस्तकेशबन्धस्य "चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः । संरम्भताम्रं कोपारुणं आयतं लोचनं यस्य । "संरम्भः सम्भ्रमे कोपे" इति विश्वः । तस्य अर्जुनस्य रोषतप्तं मुखं निदाघो घर्मः निर्वापयिष्यन् शिथिलीकरिष्यन्निवेत्युत्प्रेक्षा । प्रस्नापयामास सिषेच, स्वेदं जनयामास इत्यर्थः । स्नातेर्मित्त्वविकल्पितत्वाद् ह्रस्वविकल्पः ॥ ८

क्रोधेति । क्रोधोऽन्धकार इव तेनान्तरित आवृतः सोऽर्जुनः घनोपरुद्धो मेघावृतस्तिग्मरश्मिः रविर्वृष्टेः प्रभवाय वर्षणाय तिस्रः ऊर्द्ध्वांशूनां राजीरिव अर्कस्य ऊर्द्ध्वांशुरेखोदयो वृष्टिलिङ्गमित्यागमः । रणाय रणप्रवृत्तये तिस्रस्त्रिसङ्ख्याः भ्रूभेदो भ्रूभङ्गस्तस्य रेखाः बभार ॥ ९

स इति । सोऽर्जुनः अम्बुदवत् नदतीति अम्बुदनादि, "कर्त्तर्य्युपमाने" इति णिनिः । चापं दिङ्नागो दिग्गजः अद्रिशृङ्गमिव हस्तेन करेण प्रध्वनय्य ध्वनयित्वा शम्भोर्बलानि सैन्यानि अशरीरोऽनङ्गः कामः चेतांसि युवमनांसि चिन्ताभिः प्रयोजनध्यानैरिव इषुभिस्तताप तापयामास । तपतिः सकर्मकः । अत्रेषुशब्दः स्त्रीलिङ्गः, अन्यथा उपमानोपमेययोर्भिन्नलिङ्गतादोषात् । "पत्री रोप इषुर्द्वयोः" इत्यमरः ॥ १०

अगोचरे वागिव चोपरेमे
शक्तिः शराणां शितिकण्ठकाये ॥११॥
उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखा न व्यथयाम्बभूवुः।
अभ्युत्थितस्याद्रिपतेर्नितम्ब-
मर्कस्य पादा इव हैमनस्य ॥ १२ ॥
सम्प्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम्।
विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ॥ १३

महादितेति। अभिनिविष्टा शास्त्रनिश्चिता बुद्धिर्यस्य स तस्मिन् अभिनिविष्टबुद्धौ शास्त्रनिष्ठितमतौ विषये महादिता प्रामाणिकार्थसमर्थकता इव। न हि सम्यक् अभ्यस्तशास्त्रं प्रति महाद्यपि शक्नोतीति व्याचक्षते केचित्। अन्ये तु अभिनिविष्टबुद्धौ आग्रहाविष्टचित्ते विषये महादिता हितोपदेष्टृत्वमिव, न हि आग्रही हितं गृह्णातीति भावः। विपक्षपाति वीतरागे विषये गुणाभ्यसूया गुणासहिष्णुता इव स हि समदर्शी द्विषन्तमपि न द्वेष्टीति भावः। अगोचरे अवाङ्मनसगोचरे ब्रह्मणि वागिव। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेरिति भावः। शराणां शक्तिः शितिकण्ठकाये शिवशरीरे विषये उपरेमे उपरता तस्य अक्षोभ्य-महिमत्वादिति भावः। "विभाषाकर्मकात्" इत्यस्य वैकल्पिकत्वात् पक्षे आत्मनेपदम्। अत्र मालोपमा ॥ ११

उमेति। पाण्डुसुतेन प्रणुन्नाः प्रक्षिप्ताः शिली शल्यं मुखे येषां ते शिलीमुखा बाणाः उमापतिं शिवम् अभ्युत्थितस्य अभ्युन्नतस्य अद्रिपते-र्नितम्बं कटकम्। हेमन्ते भवस्य हैमनस्य। "सर्वत्राण् च तलोपश्च" इति अण्प्रत्ययः तकारलोपश्च। अर्कस्य पादा रश्मय इव। "पादा रश्म्यङ्घ्रि-तुर्य्यांशाः" इत्यमरः। न व्यथयाम्बभूवुः। 'मध्ये स्थितस्यासुमतां समूह-मर्कस्य' इति पाठान्तरे मध्ये स्थितस्य हैमनस्य अर्कस्य पादाः किरणाः असुमतां प्राणिनां समूहमिवेति न दुःखमुत्पादयामासुरिति योजना ॥ १२

तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम्।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन॥ १४॥

प्रत्याहतौजाः कृतसत्त्ववेगः
पराक्रमं ज्यायसि यस्तनोति।
तेजांसि भानोरिव निष्पतन्ति
यशांसि वीर्य्यज्वलितानि तस्य॥१५॥

दृष्टावदानाद् व्यथतेऽरिलोकः
प्रध्वंसमेति व्यथिताच्च तेजः।
तेजोविहीनं विजहाति दर्पः
शान्तार्चिषं दीपमिव प्रकाशः॥१६॥

समिति। गणानां पतिः शिवस्तीव्रं तस्य अर्जुनस्य पराक्रमं एव रोधसि आनतस्य परिणतस्य, तटप्रहारिण इत्यर्थः। सुरद्विपस्य असह्यं विषाणभेदं दन्तप्रहारं हिमवानिव सम्प्रीयमाणः संहृष्यन् अनुबभूव अनुभवति स्म। तस्याक्षोभ्यत्वादनुजिघृक्षुत्वाच्चेति भावः॥ १३

तस्मै हीति। तस्मै पार्थाय भारस्य भूभारस्य उद्धरणे उद्वहने समर्थं प्रतापं बाहुमिव, अवष्टम्भतयेति शेषः। अन्यथा भारोद्वहनस्य दुष्करत्वादिति भावः। "स प्रतापः प्रभावश्च यत्तेजः कोपदण्डजम्" इत्यमरः। प्रदास्यता वितरिष्यता कारणानां ब्रह्मादीनामपि कारणेन जनकेन देवेन सोऽभिभवोऽर्जुनपरिभवस्तदानीं चिरं विषेहे सोढः, वात्सल्यादिति भावः॥१४

अथ त्रिभिर्भगवदभिप्रायमाविष्कुर्वन् चतुर्भिः कलापकमाह—प्रत्याहतेति। प्रत्याहतौजाः परेण प्रतिहतबलः सन्नपि कृतसत्त्ववेगः कृतोत्साहातिशयः सन् यः पुमान् ज्यायसि स्वस्मादत्यधिके पराक्रमं तनोति तस्य पुंसो भानोरर्कस्य तेजांसीव वीर्य्येण शौर्य्येण ज्वलितानि प्रकाशितानि यशांसि निष्पतन्ति उद्भवन्तीत्यर्थः। हीनस्य अधिकाभियोगो यशस्कर इति भावः॥ १५

ततः किमित्यत आह—दृष्टेति। दृष्टम् अवदानं महत् कर्म यस्य

ततः प्रयात्यस्तमदावलेपः
स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य
गन्ध [प्रति]द्विपस्येव मतङ्गजौघः ॥१७॥

एवं प्रतिद्वन्द्विषु तस्य कीर्त्तिं
मौलीन्दुलेखाविशदां विधास्यन् ।
इयेष पर्य्यायजयावसादां
रणक्रियां शम्भुरनुक्रमेण ॥ १८ ॥

मुनेर्विचित्रैरिषुभिः स भूया-
न्निन्ये वशं भूतपतेर्बलौघः ।
सहात्मलाभेन समुत्पतद्भि-
र्जातिस्वभावैरिव जीवलोकः ॥ १९ ॥

तस्मात् दृष्टावदानात् दृष्टपौरुषात् अरिलोकः शत्रुजनो व्यथते बिभेति। व्यथितात् भीतात् तेजः प्रध्वंसं नाशमेति। तेजोविहीनं दर्पः उत्साहः शान्तार्चिषं निर्वाणज्वालं दीपं प्रकाश इव विजहाति त्यजति ॥ १६

तत इति। ततो दर्पहान्यनन्तरम् अस्तौ क्षयं गतौ मदावलेपौ मद-गर्वौ यस्य सः। सोऽरिलोको गन्धेन मदगन्धेनैव जेतुर्जयनशीलस्य। शीलार्थे तृच्प्रत्ययः। प्रमुखागतस्य अभिमुखागतस्य गन्ध[प्रति]द्विपस्यान्यो मतङ्गजौघो मत्तगजसमूह इव जिगीषोर्नायकस्य जय्यतायाः पदवीं प्रयाति प्राप्नोति, विजिगीषुणा जेतुं शक्यो भवतीत्यर्थः। "क्षय्यजय्यौ शक्यार्थे" इति निपातः। अत्र श्लोकद्वये ज्यायसि पराक्रमकरणादीनां पूर्वपूर्वस्योत्तरो-त्तरं प्रति कारणत्वकथनात् कारणमालाख्योऽलङ्कारः। लक्षणन्तु उक्तम् ॥१७

एवमिति। एवमुक्तरीत्या प्रतिद्वन्द्विषु प्रत्यर्थिषु मध्ये तस्य अर्जुनस्य मौलीन्दुलेखाविशदां कीर्त्तिं विधास्यन् करिष्यन् अनुक्रमेण अविपर्य्यासेन पर्य्यायेण जयावसादौ यस्यां तां पर्य्यायजयावसादां रणक्रियामियेष इच्छति स्म। जयानन्तरं भङ्गो भङ्गानन्तरं जय इति पर्य्यायार्थः। तस्य विपर्य्यासोऽन्यतरनैरन्तर्य्यं तदभावोऽनुक्रम इत्यपौनरुक्त्यम् ॥ १८

कलापकम् ।

वितन्वतस्तस्य शरान्धकारं
त्रस्तानि सैन्यानि रवं निशेमुः ।
प्रवर्षतः सन्ततवेपथूनि
क्षपाघनस्येव गवां कुलानि ॥२०॥

स सायकान् साध्वसविप्लुतानां
क्षिपन् परेषामतिसौष्ठवेन ।
शशीव दोषावृतलोचनानां
विभिद्यमानः पृथगाबभासे ॥ २१ ॥

क्षोभेण तेनाथ गणाधिपानां
भेदं ययावाकृतिरीश्वरस्य ।
तरङ्गकम्पेन महाह्रदानां
छायामयस्येव दिनस्य क[भ]र्त्तुः ॥२२॥

मुनेरिति। मुनेर्विचित्रैरिषुभिः स भूयान् असङ्गो भूतपतेर्बलौघः आत्मलाभेन जन्मना सह समुत्पतद्भिराविर्भवद्भिराजन्मसिद्धैरित्यर्थः जातयो गोत्वमनुष्यत्वादयः। स्वभावा जातिनियता धर्मास्तैर्जातिस्वभावैर्जीवलोकः प्राणिजातमिव वशं निन्ये नीतः। कर्मणि लिट्। प्राणिनो जातिधर्मानिव गुणान् मुनिशरान् नातिक्रमितुं शेकुरित्यर्थः ॥ १९

वितन्वत इति। त्रस्तानि सैन्यानि सन्ततवेपथूनि निरन्तरकम्पानि गवां कुलानि वृन्दानि प्रवर्षतो वृष्टिं कुर्वतः क्षपाघनस्य रात्रिघनस्येव शरैर्योऽन्धकारस्तं वितन्वतो विस्तारयतस्तस्य मुनेः सम्बन्धिनं रवं शरवर्षघोषं निशेमुः शुश्रुवुः, न तु किञ्चिद्ददृशुः. चेष्टा तु दूरमास्तामिति भावः ॥ २०

स इति। अतिसौष्ठवेन अतिलाघवेन सायकान् शरान् क्षिपन् सोऽर्जुनः साध्वसेन विप्लुतानां भ्रान्तानां साध्वसविप्लुतानां परेषां दोषेण काचकामलादिरोगादिना आवृतलोचनानां दुष्टचक्षुषां शशीव पृथग्विभिद्यमानः आबभासे। यथा सदोषचक्षुषा एकश्चन्द्रो नानेव लक्ष्यते तद्वदेकोऽपि अनेक इव दृष्ट इति भावः ॥ २१

प्रसेदिवांसं न तमाप कोपः
कुतः परस्मिन् पुरुषे विकारः ।
आकारवैषम्यमिदञ्च भेजे
दुर्लक्ष्यचिह्ना महतां हि वृत्तिः ॥ २३ ॥

विस्फार्य्यमाणस्य ततो भुजाभ्यां
भूतानि भर्त्रा धनुरन्तकस्य ।
भिन्नाकृतिं ज्यां ददृशुः स्फुरन्तीं
क्रुद्धस्य जिह्वामिव तक्षकस्य ॥२४॥

क्षोभेणेति । अथ गणाधिपानां सम्बन्धिना तेन क्षोभेण कम्पेन ईश्वरस्य आकृतिराकारो मूर्त्तिः महाह्रदानां तरङ्गकम्पेन छायामयस्य प्रतिबिम्बरूपस्य दिनस्य कर्त्तुर्दिवाकरस्य आकृतिरिव भेदं विकारं यथा प्राप । स्वयं निर्विकारोऽपि प्रतिमासूर्य्यवत्परसंसर्गात्तथा प्रतीयत इत्यर्थः ॥ २२

यदि देवोऽपि विकृतस्तर्हि कोपः किं न कृतस्तत्राह—प्रसेदिवांसमिति । प्रसेदिवांसम् अर्जुनं प्रति प्रसन्नचित्तं तं देवं कोपो न आप न प्राप, तत्रापि अनुग्रहं ययाविति भावः । तत्र हेतुः—परस्मिन् पुरुषे परात्मनि देवे स्वतो निर्विकारे इत्यर्थः । विकारः कोपरूपः कुतः न कुतश्चिदित्यर्थः । ननु तस्य निर्विकारस्य कथं बहिराकारभेदः कारणाभावादिति चेत् तत्र विघ्न इत्याह—इदं पूर्वोक्तमाकारवैषम्यञ्च भेजे, किन्तु केनापि कारणेन न कुप्यतीत्यर्थः । ननु निर्विकारे कुत आकारभेदस्तत्राह—महतां वृत्तिश्चेष्टा दुर्लक्ष्यचिह्ना दुर्ग्रहहेतुका हि ॥ २३

वैषम्यमाह—विस्फार्य्यमाणस्येति । ततोऽनन्तरं भूतानि भर्त्रा भूतपतिना । भृजस्तृच्प्रत्ययः । अत एव "न लोक" इत्यादिना षष्ठीप्रतिषेधः । भुजाभ्याम् । कर्त्तृकरणयोस्तृतीया । विस्फार्य्यमाणस्य आकृष्यमाणस्य धनुरन्तक इव तस्य धनुरन्तकस्य सम्बन्धिनीं स्फुरन्तीं चलन्तीम् अत एव भिन्ना द्विधेव दृश्यमाना आकृतिर्यस्यास्तां ज्यां धनुर्गुणं क्रुद्धस्य तक्षकस्य नागविशेषस्य जिह्वामिव ददृशुः, द्विधाभावाद् भयङ्करत्वाच्चेति भावः ॥ २४

सव्यापसव्यध्वनितोग्रचापं
पार्थः किराताधिपमाशशङ्के ।
पर्य्यायसम्पादितकर्णतालं
यन्ता गजं व्यालमिवापराद्धः ॥ २५ ॥

निजघ्निरे तस्य हरेषुजालैः
पतन्ति वृन्दानि शिलीमुखानाम् ।
ऊर्ज्ज[तेज]स्विभिः सिन्धुमुखागतानि
यादांसि यादोभिरिवाम्बुराशेः ॥२६॥

विभेदमन्तःपदवीनिरोधं
विध्वंसनं चाविदितप्रयोगः ।
नेतारिलोकेषु करोति यद्यत्
तत्तच्चकारास्य शरेषु शम्भुः ॥२७॥

सव्येति । पार्थः सव्यापसव्याभ्यां वामदक्षिणगतिभ्यां ध्वनितं नादितम् उग्रचापं येन तं किराताधिपम् । अपराद्धः प्रमत्तो यन्ता पर्य्यायेण अयौगपद्येन सम्पादितः कर्णयोस्तालः आस्फालनं येन तं व्यालं दुष्टम् "भेद्यलिङ्गः शठे व्यालः" इत्यमरः । गजमिवाशशङ्के तच्चापचातुर्य्यदर्शनात् दुर्जयः कोऽप्ययमनर्थकरस्येति शङ्कितवानित्यर्थः ॥ २५

निजघ्निर इति । हरेषुजालैस्तस्य अर्जुनस्य पतन्ति आगच्छन्ति शिली शल्यं मुखं येषां तेषां शिलीमुखानां शराणां वृन्दानि । उर्ज्जस्विभिः प्रबलैरम्बुराशेर्यादोभिर्जलग्राहैः सिन्धुमुखेन नदीमुखेन आगतानि यादांसीव । "यादांसि जलजन्तवः" इति वैजयन्ती । निजघ्निरे हतानि ॥ २६

विभेदमिति । अन्तर्विभेदं व्यूहविश्लेषणम् उपजापञ्च पदवीनिरोधं मार्ग एव प्रतिबन्धनम्, अन्यत्र तु आसारप्रसारप्रतिबन्धं विध्वंसनं खण्डनं दुर्गलुण्ठनदाहादिकञ्च इत्यादि यत् यत् नेता नायको जिगीषुरविदितप्रयोगः संवृतमन्त्रत्वात् अविज्ञातोपायप्रयोगः सन् अरिलोकेषु करोति । तत्तत् शम्भुरविदितप्रयोगः अज्ञातबाणसन्धानमोक्षादिकः सन् अस्य अर्जुनस्य शरेषु चकार कृतवान् । कर्त्तरि लिट् । श्लेषालङ्कारः ॥ २७

सोढ़ावगीतप्रथमायुधस्य
क्रोधोज्झितैर्वेगितया पतद्भिः ।
छिन्नैरपि त्रासितवाहिनीकैः
पेते कृतार्थैरिव तस्य बाणैः ॥ २८ ॥

अलङ्कृतानामृजुतागुणेन
गुरूपदिष्टां गतिमास्थितानाम् ।
सतामिवापर्वणि मार्गणानां
भङ्गः स जिष्णोर्धृतिमुन्ममाथ ॥ २९ ॥

बाणच्छिदस्ते विशिखाः स्मरारे-
रवाङ्मुखीभूतफलाः पतन्तः ।
अखण्डितं पाण्डवसायकेभ्यः
कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥

सोढ़ेति। सोढ़ानि परैरवगीतानि गर्हितानि प्रथमायुधानि पूर्वोत्सृष्टबाणाः यस्य तस्य अर्जुनस्य सम्बन्धिभिः क्रोधोज्झितैः क्रोधाभिषिक्तैः पूर्वबाणवैफल्यात् कोपेन त्यक्तैः। अत एव वेगितया वेगेन पतद्भिः गतिं कुर्वद्भिः। अत एव छिन्नैरपि त्रासिता वाहिन्यो यैस्तैरत एव कृतार्थैरिव बाणैः पेते। भावे लिट्। वस्तुतस्तु अकृतार्था एवेत्यर्थः ॥ २८

अलमिति। ऋजुता अवक्राकारत्वम् अवक्रशीलत्वञ्च सैव गुणस्तेन अलङ्कृतानां गुरुभिर्धनुर्विद्यागुरुभिर्धर्मशास्त्रगुरुभिश्च उपदिष्टां दर्शितां गतिं गमनम् आचारञ्च आस्थितानां प्राप्तानां मार्गणानां शराणां सता साधूनामिव अपर्वणि अग्रन्थौ, अन्यत्र अप्रस्तावे अकाण्ड इत्यर्थः। "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे" इति विश्वः। स ईश्वरकृतो भङ्गश्छेदो व्यसनञ्च जिष्णोरर्जुनस्य कस्यचित् जित्वरस्य च। "जिष्णुः शक्रे धनञ्जये जित्वरे" इति विश्वः। धृतिं धैर्य्यम् उन्ममाथ जहार इत्यर्थः। अकाण्डे साधुविपत्तिदर्शनादिव शरभङ्गदर्शनात् धैर्य्यभङ्गोऽभूदित्यर्थः ॥ २९

बाणेति। बाणच्छिदः पार्थशरच्छेदिनस्ते स्मरारेर्विशिखा अवाङ्मुखीभूतफला विमुखाग्राः विफलाश्च सन्तः पतन्तः पाण्डवसायकेभ्यः।

चित्रीयमाणानतिलाघवेन
प्रमाथिनस्तान् भवमार्गणानाम् ।
समा[शङ्का]कुलाया निचखान दूरं
बाणान् ध्वजिन्या हृदयेष्वरातिः ॥ ३१ ॥

तस्यातियत्नादतिरिच्यमाने
पराक्रमेऽन्योन्यविशेषणेन ।
हन्ता पुरां भूरि पृषत्कवर्षं
निरास नैदाघ इवाम्बु मेघः ॥ ३२ ॥

अनामृशन्तः क्वचिदेव मर्म्म
प्रियैषिणानुप्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्मवादाः
शरा मुनेः प्रीतिकरा बभूवुः ॥ ३३ ॥

क्रियाग्रहणाच्चतुर्थी। पाण्डवसायकानां कृतस्य फलभङ्गरूपस्य स्वकर्मणः सद्योऽखण्डितं प्रतिकारमापुः, अत्युत्कटं कर्म सद्यः फलं दर्शयतीति भावः ॥ ३०

पुनरर्जुनस्य जयमाह—चित्रीयमाणानिति। अरातिरर्जुनः अतिलाघवेन अतिशीघ्रत्वात् चित्रीयमाणांश्चित्रमाश्चर्यं कुर्व्वाणान् "नमोवरिवश्चित्रङः क्यच्" इति क्यच्। भवमार्गणानां प्रमाथिनः खण्डयतस्तान् बाणान्। समाकुलायाः संक्षुभितायाः ध्वजिन्याः सेनायाः हृदयेषु दूरं गाढं निचखान निखातवान् ॥ ३१

तस्येति। तस्य अर्जुनस्य पराक्रमे अतियत्नाद्धेतोरन्योन्यस्य विशेषणेन अतिशयकरणेन अतिरिच्यमाने अतिक्रम्य[उत्क्रुष्य]माणे सति पुरां हन्ता त्रिपुरविजयी हरो भूरि प्रभूतं पृषत्कवर्षं बाणवर्षम्। "पृषत्कबाणविशिखाः" इत्यमरः। निदाघे भवो नैदाघो मेघोऽम्बुवाहः अम्बु जलमिव निरास मुमोच। अस्यतेर्लिट्। निदाघग्रहणं वर्षणस्य अतितीव्रत्वद्योतनार्थम् ॥ ३२

अनामृशन्त इति। प्रियैषिणा प्रियचिकीर्षुणा शिवेन अनुप्रहिताः प्रयुक्ताः अत एव क्वचिदेव मर्म अनामृशन्तोऽस्पृशन्तः शराः सुहृन्मित्रं सोऽपि प्रियैषी तेन प्रयुक्ताः उच्चारिताः नर्मवादाः प्रियवादा इव मुनेरर्जुनस्य प्रीतिकराः प्रीतिजनका बभूवुः ॥ ३३

अस्त्रैः समानामतिरेकिणीं वा
पश्यन् रिपूणामपि तस्य शक्तिम्।
विषादवक्तव्यबलः प्रमाथी
स्वमाललम्बे बलमिन्दुमौलिः॥ ३४॥

ततस्तपोवीर्य्यसमुद्धतस्य
पारं यियासोः समरार्णवस्य।
महेषुजालान्यखिलानि जिष्णो-
रर्कः पयांसीव समाचचाम॥ ३५॥

रिक्ते सविस्रम्भमथार्जुनस्य
निषङ्गवक्त्रे निपपात पाणिः।
अन्यद्विपापीतजले सतर्षं
मतङ्गजस्येव नगाश्मरन्ध्रे॥ ३६॥

अस्त्रैरिति। अस्त्रैः स्वायुधैः समानां तुल्यामतिरेकिणीं ततोऽधिकां वा तस्य मुनेः रिपूणामपि शक्तिं पश्यन् विषादेन उत्साहभङ्गेन वक्तव्यानि निर्वाच्यानि बलानि सैन्यानि यस्य सः प्रमाथी शत्रुमर्द्दनः इन्दुमौलिर्महादेवः स्वं बलमात्मीयं महिमानमाललम्बे स्वसामर्थ्यमवलम्बितवान्॥ ३४

तत इति। ततो महिमप्रादुर्भावानन्तरं देवस्तपोवीर्य्याभ्यां समुद्धतस्य प्रगल्भस्य समर एव अर्णवस्तस्य पारमन्तं यियासोर्जिगमिषोर्जिष्णोरर्जुनस्य अखिलानि महेषुजालानि समग्रबाणसमूहान् अर्कः सूर्य्यः पयांसीव जलानीव समाचचाम सञ्जहारेत्यर्थः॥ ३५

रिक्त इति। अथ बाणान्तर्धानानन्तरम् अर्जुनस्य पाणिः करो रिक्ते बाणशून्ये निषङ्गवक्त्रे तूणीरमुखे अन्यद्विपेन गजान्तरेण आपीतजले पीततोये नगस्य अचलस्य अश्मरन्ध्रे शिलागर्त्ते कन्दरे इत्यर्थः। सतर्षं सतृष्णं यथा स्यात्तथा क्रियाविशेषणम्। मतङ्गजस्य पाणिर्लक्षणया कर इव सविस्रम्भं सन्त्येव बाणा इति सविश्वासं निपपात॥ ३६

च्युते स तस्मिन्निषुधौ शरार्थाद्-
ध्वस्तार्थसारे सहसैव बन्धौ ।
तत्कालमोघप्रणयः प्रपेदे
निर्वाच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥

आघट्टयामास गतागताभ्यां
सावेगमग्राङ्गुलिरस्य तूणौ ।
विधेयमार्गे मतिरुत्सुकस्य
नयप्रयोगाविव गां जिगीषोः ॥ ३८ ॥

बभार शून्याकृतिरर्जुनस्तौ
महेषुधी वीतमहेषुजालौ ।
युगान्तसंशुष्कजलौ विजिह्मः
पूर्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥

च्युत इति । शरा एव अर्थो धनं यस्य तस्माच्च्युते भ्रष्टे तस्मिन् इषुधौ निषङ्गे सहसा झटिति ध्वस्तार्थसारे अकाण्डे नष्टधनसारे बन्धाविव तत्काले मोघो वितथः प्रणयः प्रीतिर्यस्य सः प्रणयेन तत्कालकृतव्यर्थप्रार्थनः अर्थप्रार्थनात् पूर्वं कृतार्थ एवेति भावः । स पाणिः । निर्वाच्यतां कृतघ्नत्वा-दपवादराहित्यं कामयत इति निर्वाच्यताकामः । "शीलिकामिभक्ष्या-चरिभ्यो णः" इति णः । स इव इत्युत्प्रेक्षा । आभिमुख्यं प्रपेदे । यथा कश्चित् कृतघ्नस्तत्कालेऽकृतोपकारमपि बन्धुं पूर्वोपकारस्मरणात् पुनरनु-बध्नाति तद्वदित्यर्थः ॥ ३७

आघट्टयामासेति । अस्य मुनेः अग्रं चासौ अङ्गुलिश्चेति अग्राङ्गुलिः । "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्" इति वामनः । विधेयमार्गे कर्त्तव्यान्वेषणे उत्सुकस्य प्रवृत्तस्य गां भुवं जिगीषोर्नायकस्य मतिर्बुद्धिर्नयः षाड्गुण्यं प्रयोगः उपायस्तौ नयप्रयोगाविव तूणौ निषङ्गौ सावेगं ससम्भ्रमम् । "इष्टानिष्टागमात्ताने आवेगश्चित्तसम्भ्रमः" इति शाश्वतः । गतागताभ्यां यातायाताभ्याम् आवापोद्वापाभ्याञ्च आघट्टयामास । अन्यत्र तु वितर्कयामास । शरग्रहणाय पुनः पुनस्तूणयोः पाणिं व्यापारयामासेत्यर्थः ॥ ३८

तेनानिमित्तेन तथा न पार्थ-
स्तयोर्यथा रिक्ततयानुतेपे ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं
शोचन्ति सन्तो ह्युपकारिपक्षम् ॥४०॥

प्रतिक्रियायै विधुरः स तस्मात्
कृच्छ्रेण विश्लेषमियाय हस्तः ।
पराङ्मुखत्वेऽपि कृतोपकारात्
तूणीमुखान्मित्रकुलादिवार्य्यः ॥ ४१ ॥

पश्चात्क्रिया तूणयुगस्य भर्त्तु-
र्जज्ञे तदानीमुपकारिणीव ।
सम्भावनायामधरीकृतायां
पत्युः पुरः साहसमासितव्यम् ॥ ४२ ॥

बभारेति । शून्याकृतिरिष्टनाशात् निस्तेजस्करूपोऽर्जुनस्तौ वीतमहेषुजालौ वीतानि गतानि महेषुजालानि ययोस्तौ महेषुधी महानिषङ्गौ विजिह्मः शून्यौ लोकौ युगान्ते संशुष्कजलौ । "शुषः कः" इति निष्ठातकारस्य ककारः । पूर्वापरौ अम्बुराशी समुद्राविव बभार ॥ ३९

तेनेति । पार्थस्तयोस्तूणयोः रिक्ततया हेतुना यथा अनुतेपे शुशोच तथा तेन अनिमित्तेन बाणक्षयरूपेण दुर्निमित्तेन न शुशोच । तथाहि— सन्तः स्वामापदं प्रोज्झ्य विसृज्य विपत्तिमग्नम् उपकारिणां पक्षं वर्गं शोचन्ति । स्वव्यसनापेक्षया परकीयव्यसनमेव सतामनुतापकमित्यर्थः ॥ ४०

प्रतीति । प्रतिक्रियायै विधुरः प्रतिकर्त्तुमसमर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । अर्जुनस्य स हस्तः पाणिः पराङ्मुखत्वेऽपि तत्कालवैमुख्येऽपि कृतोपकारात् तस्मात् तूणीमुखात् मित्रकुलादार्य्यः साधुः कृतज्ञ इव । "आर्य्यः साधुकुलीनयोः" इति विश्वः । कृच्छ्रेण महाकष्टेन विश्लेषमियाय । गौरादित्वात् तूणशब्दात् ङीष् ॥ ४१

पश्चादिति । तदानीं भर्त्तुः स्वामिनः । कर्त्तरि षष्ठी । पश्चात्क्रिया पृष्ठतः करणं तूणयुगस्य उपकारिणीव उपकारिकेव जज्ञे जाता । तथाहि—

तं शम्भुराक्षिप्तमहेषुजालं
लौहैः शरैर्मर्मसु निस्तुतोद ।
हृतोत्तरं तत्त्वविचारमध्ये
वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३ ॥

जहार चास्मादचिरेण वर्म
ज्वलन्मणिद्योतितहैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं
तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४ ॥

विकोशनिर्धौततनोर्महासिः
फणावतश्च त्वचि विच्युतायाम् ।
प्रतिद्विपाबद्धरुषः समक्षं
नागस्य चाक्षिप्तमुखच्छदस्य ॥ ४५ ॥

सम्भावनायां स्वयोग्यतायामधरीकृतायामफलीकृतायां पत्युः स्वामिनः पुरोऽग्रे आसितव्यमासितं स्थितम्। बहुलग्रहणाद्भावे तव्यप्रत्ययः। साहसं न क्षमं न योग्यम्। भर्त्रा सम्भावितस्य अवसरे अनुपकर्त्तुरनुजीविनः तत्साम्मुख्यम् अनुचितमित्यर्थः ॥ ४२

तमिति। शम्भुराक्षिप्तानि आहतानि महेषुजालानि यस्य तं मुनिं तत्त्वविचारमध्ये वादमध्ये हृतोत्तरं निरुत्तरीकृतं विपक्षं प्रतिवादिनं वक्ता वादी गुरुभिर्दोषैर्निग्रहस्थानैरिव लौहैर्लोहमयैः शरैर्मर्मसु निस्तुतोद व्यथयामास ॥ ४३

जहारेति। किञ्च अस्मान्मुनेरचिरेण शीघ्रं ज्वलद्भिर्मणिभिर्द्योतिताः हैम्यः सौवर्ण्यो लेखाः यस्य तत् तथोक्तम्। वर्म कवचम्। चण्डो मरुत् पवनः पतङ्गात् सूर्यादेकनीलं केवलं कृष्णवर्णम्। "एके मुख्यान्यकेवलाः" इत्यमरः। तडित्वतस्तडिद्युक्तस्य खण्डमिव जहार। तदा भगवन्मायया मुक्तकञ्चुको मुनिर्मेघनिर्मुक्तः सूर्य इव दिदीपे इति भावः ॥ ४४

अथ युग्मेनाह—विकोशेति। सोऽर्जुनः तनुं त्रायत इति तनुत्रं वर्म। "आतोऽनुपसर्गे कः" इति कप्रत्ययः। तेन विना; विकोशः कोशादुद्धृतः निर्धौततनुः शाणोल्लीढमूर्त्तिः। ततो विशेषणसमासः। तस्य

विबोधितस्य ध्वनिना घनानां
हरेरपेतस्य च शैलरन्ध्रात् ।
निरस्तधूमस्य च रात्रिवह्ने-
र्विना तनुत्रेण रुचिं स भेजे ॥ ४६ ॥

युग्मकम् ।

अचित्ततायामपि नाम युक्ता-
मनूढ़तां प्राप्य तदीयकृच्छ्रे ।
महीं गतौ ताविषुधी तदानीं
विवव्रतुश्चेतनयेव योगम् ॥ ४७ ॥

स्थितं विशुद्धे नभसीव सत्त्वे
धाम्ना तपोवीर्य्यमयेन युक्तम् ।
शस्त्राभिघातैस्तमजस्रमीश-
स्त्वष्टा विवस्वन्तमिवोल्लिलेख ॥ ४८ ॥

विकोशनिर्धौततनोर्मलीमसैर्मलापनद्धस्य तथा त्वचि विच्युतायां सत्यां कृणावृ-तस्य मुक्तकञ्चुकस्य असेः प्रतिद्विपे प्रतिगजे आबद्धकोपे बद्धकोपस्य समक्षं प्रतिगजस्य अग्रे आक्षिप्तमुखच्छदस्य निरस्तमुखावरणस्य नागस्य गजस्य च ॥ ४५

विबोधितस्येति। घनानां ध्वनिना गर्जितेन विबोधितस्य शैलरन्ध्रात् कन्दरादपेतस्य निष्क्रान्तस्य हरेः सिंहस्य च। तथा निरस्तधूमस्य गतधूमस्य रात्रिवह्नेश्च रुचिं शोभां भेजे। एतेनास्य तीक्ष्णतावैरनिर्यातनत्वरणादुर्मद-त्वमनस्वित्वतेजस्वित्वानि उक्तानि। अत्र रुचिमिव रुचिमिति सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारो मालया संसृष्टः ॥ ४६

अचित्ततायामिति। तदानीं कवचपतनसमये महीं गतौ इषुधी निषङ्गौ अचित्ततायामपि अचेतनत्वेऽपि तदीयकृच्छ्रे स्वामिव्यसने युक्तां योग्याम्। नाम किल। अकिञ्चित्करत्वादिति भावः। अनूढ़ताम् अवाङ्मुखत्वं प्राप्य चेतनया प्राणिसाधारणज्ञानेन योगं सम्बन्धं चैतन्यसम्बन्धं विवव्रतु-रित्युत्प्रेक्षा। अचेतनत्वे अवाङ्मुखत्वादिचेतनधर्मायोगादिति भावः ॥ ४७

संरम्भवेगोज्झितवेदनेषु
गात्रेषु वाधिर्य्य[चाधैर्य्य]मुपागतेषु
मुनेर्बभूवागणितेषुराशे-
र्लौहैस्तिरस्कार इवात्ममन्युः॥ ४९ ॥

ततोऽनुपूर्वायतवृत्तबाहुः
श्रीमान् चरल्लोहितदिग्धदेहः।
आस्कन्द्य वेगेन विमुक्तनादः
क्षितिं विधुन्वन्निव पार्ष्णिघातैः॥ ५०॥

साम्यं गतेनाशनिना मघोनः
शशाङ्कखण्डाकृतिपाण्डुरेण।
शम्भुं विभित्सुर्धनुषा जघान
स्तम्बं विषाणेन महानिवेभः॥ ५१ ॥

युग्मम्

स्थितमिति। विशुद्धे निर्मले नभसि इव सत्त्वे सत्त्वगुणे स्थितं तपोवीर्य्यमयेन तपोवीर्य्याभ्यामागतेन धाम्ना तेजसा युक्तं तम् अर्जुनम् ईशस्त्वष्टा विश्वकर्मा विवस्वन्तं सूर्य्यमिव अजस्रं निरन्तरं शस्त्राभिघातैः शस्त्रकर्षणैः उल्लिलेख ततक्ष॥ ४८

संरम्भेति। संरम्भवेगेन सम्भ्रमातिशयेन उज्झितवेदनेषु त्यक्तदुःखेषु गात्रेषु बाधिर्य्यं स्तैमित्यम् उपागतेषु सत्सु न गणिताः इषुराशयो येन तस्य अगणितेषुराशेः मुनेरर्जुनस्य आत्ममन्युः स्वकोपो लोहस्य विकारो लौहः कार्ष्णायसः तिरस्क्रियते आच्छाद्यते अनेनेति तिरस्कारः कञ्चुक इव बभूव। रोषवशात् न किञ्चित् प्रहारदुःखमज्ञासीदित्यर्थः। क्रोधैकवर्म्मणां वीराणां किमन्यैर्लौहभारैरित्यर्थः॥ ४९

अथ युग्मेनाह—तत इति। ततोऽनन्तरम् अनुपूर्व्वौ पूर्वमनुगतौ गोपुच्छाकारौ आयतौ दीर्घौ वृत्तौ वर्त्तुलौ बाहू यस्य सः श्रीमान् शोभावान् चरल्लोहितदिग्धदेहः स्रवद्रुधिरलिप्तगात्रः पार्ष्णिघातैश्चरणतलाघातैः। "तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां पार्ष्णिरधस्तयोः" इत्यमरः। क्षितिं विधुन्वन् प्रकम्पयन्निव वेगेन आस्कन्द्य अभिद्रुत्य विमुक्तनादः सोऽर्जुनः॥५०

साम्यमिति। मघोन इन्द्रस्य अशनिना वज्रेण सह साम्यं गतेन वज्र-

रयेण सा सन्निदधे पतन्ती
भवोद्भवेनात्मनि चापयष्टिः ।
समुद्धता सिन्धुरनेकमार्गा
परं स्थितेनौजसि जह्नुनेव ॥ ५२ ॥

विकार्मुकः कर्मसु शोचनीयः
परिच्युतौदार्य्य इवोपचारः ।
विचिच्छिदे शूलभृता सलीलं
स पत्त्रिभिर्दूरमदूरपातैः ॥ ५३ ॥

उपोढकल्याणफलोऽभिरक्ष-
न्वीरव्रतं पुण्यरणाश्रमस्थः ।
उपोपवासैरिव संयतात्मा
तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४ ॥

कल्पेन शशाङ्कस्य खण्डं शकलं तस्येव आकृतिर्यस्य तद्वद्वक्रमित्यर्थः । पाण्डुरञ्च तद्वदेवेति भावः । तेन शशाङ्कखण्डाकृतिपाण्डुरेण धनुषा शम्भुं बिभित्सुर्भेत्तुमिच्छुः सन् महानिभो गजः विषाणेन दन्तेन स्तम्बमिव जघान ॥ ५१

रयेणेति । रयेण वेगेन पतन्ती सा चापयष्टिर्भवस्य संसारस्य उद्भवः उत्पत्तिर्यस्मात् तेन भवोद्भवेन ईश्वरेण परे ओजसि परमे ज्योतिषि स्थितेन जह्नुना राजर्षिणा समुद्धता अत्युत्कटा अनेकमार्गा त्रिस्रोताः सिन्धुः गङ्गा इव आत्मनि सन्निदधे सम्यक् निहिता अन्तर्लिलायेत्यर्थः ॥ ५२

विकार्मुक इति । विकार्मुको भग्नचापः अत एव परिच्युतौदार्य्यो दानवर्जित उपचारः सत्कार इव कर्मसु रणक्रियासु कृत्येषु च शोचनीयः शोच्योऽपूज्यश्च सत्त्वावष्टम्भेनाभग्नचित्तत्वाच्च सोऽर्जुनः शूलभृता शिवेन सलीलं सहेलं यथा तथा दूरपातैः अतिगाढ़प्रहारैः पत्त्रिभिः शरैर्दूरमत्यन्तं विचिच्छिदे नुन्नः ॥ ५३

उपोढेति । उपोढमासन्नं कल्याणफलम् अस्त्रलाभरूपं स्वर्गादिकञ्च

ततोऽग्रभूमिं व्यवसायसिद्धेः
सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं
साक्षादहङ्कारमिवाललम्बे ॥ ५५ ॥

शरानवद्यन्ननवद्यकर्मा
चचार चित्रं प्रविचारमार्गैः ।
हस्तेन निस्त्रिंशभृता स दीप्तः
सार्कांशुना वारिधिरूर्मिणेव ॥ ५६ ॥

यथा निजे वर्त्मनि भाति भाभि-
श्छायामयश्चाप्सु सहस्ररश्मिः ।
तथा भ्रमन्नाशु रणस्थलीषु
स्पष्टद्विमूर्तिर्ददृशे स भूतैः ॥ ५७ ॥

यस्य सः वीरव्रतमाहवादनिवृत्तिरूपं तीव्रं तपश्च अभिरक्षन् पालयन् पुण्यो यो रण इव आश्रमस्तत्र तिष्ठतीति पुण्यरणाश्रमस्थः संयतात्मा नियमितचित्तो मुनिरर्जुनः कश्चित्तपस्वी च तैः शिवस्य महादेवस्य इषुभिः शरैर्जपोपवासैरिव तेपे तप्तः । तपतेः कर्मणि लिट् ॥ ५४

तत इति । ततश्चापान्तर्धानानन्तरं सोऽर्जुनः अग्रभूमिं विपदि गन्तव्यस्थानं शरणमित्यर्थः । कुतः ? व्यवसायसिद्धेरुद्योगसिद्धेः सीमानम् अवधिं साधकतममित्यर्थः । अन्यैः परैरतिदुस्तरं दुरतिक्रमं तेजःश्रियां प्रतापसम्पदामाश्रयं हेतुमित्यर्थः । उत्तमासिं महाखड्गम् । "सन्महत्" इत्यादिना समासः । साक्षादहङ्कारं सविग्रहम् अभिमानमिव आललम्बे जग्राह ॥ ५५

शरानिति । अनवद्यकर्मा अगर्ह्यकर्मा । "अवद्यपण्य" इत्यादिना निपातः । शरान् अवद्यन् खण्डयन् वीरो निस्त्रिंशभृता खड्गयुक्तेन हस्तेन सार्कांशुना अर्कांशुसहितेन ऊर्मिणा तरङ्गेण वारिधिरिव दीप्तो दीपितः सोऽर्जुनः प्रविचारमार्गैः खड्गिनां गतिभेदैश्चित्रं यथा तथा चचार ॥ ५६

यथेति । भाभिर्दीप्तिभिरुपलक्षितः । "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । सहस्ररश्मिरर्को यथा निजे वर्त्मनि नभसि

शिवप्रणुन्नेन शिलीमुखेन
त्सरुप्रदेशादपवर्ज्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणे-
र्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥

आक्षिप्तचापावरणेषुजाल-
श्छिन्नोत्तमासिः स मृधेऽवधूतः ।
रिक्तः प्रकाशश्च बभूव भूमे-
रुत्सादितोद्यान इव प्रदेशः ॥ ५९ ॥

स खण्डनं प्राप्य परादमर्षवान्
भुजद्वितीयोऽपि विजेतुमिच्छया ।
ससर्ज वृष्टिं परिरुग्णपादपां
द्रवेतरेषां पयसामिवाश्मनाम् ॥ ६० ॥

छायामयः प्रतिबिम्बरूपः सन् अप्सु भाति स्पष्टद्विमूर्त्तिर्भाति रणस्थलीषु च स्पष्टे द्वे मूर्त्ती यस्य स स्पष्टद्विमूर्त्तिः सन् सोऽर्जुनः भ्रमन् तथा भूतैर्गणै-र्ददृशे दृष्टः । यथैकोऽर्को नभसि अप्सु च अनेक इव दृश्यते, तथा सोऽपि दिवि भुवि च युगपत् आशु सञ्चाराद् यौगपद्यभ्रमादेव एकोऽपि अनेक इव गणैर्दृष्ट इत्युत्प्रेक्षा ॥ ५७

शिवेति । शिवेन प्रणुन्नः क्षिप्तस्तेन शिलीमुखेन त्सरुप्रदेशात् मुष्टि-प्रदेशमवधिं कृत्वा "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः । अपवर्जिताङ्गो लूनविग्रहः असिः खड्गस्तस्य अर्जुनस्य पाणेः करात् घनस्य मेघस्य वप्रात् तटात् वैद्युतो विद्युत्सम्बन्धी अग्निरिव ज्वलन् पपात ॥ ५८

आक्षिप्तेति । आक्षिप्तानि अपहृतानि चापावरणेषुजालानि धनुर्वर्म-बाणसमूहा यस्य सः छिन्नोत्तमासिः लूनमहाखड्गः मृधे रणे । "मृध-मास्कन्दनं सङ्ख्यम्" इत्यमरः । अवधूतो निरस्तः सोऽर्जुनः उत्सादितम् उत्पाटितम् उद्यानं यस्य स भूमेः प्रदेशो भूमिभाग इव रिक्तः शून्यः प्रकाशो निःसम्बाधश्च दृश्य इति यावत् बभूव ॥ ५९

स इति । परात् परस्मात् शत्रोः । "पूर्वादिभ्यो नवभ्यो वा" इति विकल्पात् न स्मादादेशः । खण्डनं भङ्गं प्राप्य अमर्षवान् सोऽर्जुनः भुज-

नीरन्ध्रं परिगमिते क्षयं पृषत्कै-
र्भूतानामधिपतिना शिलावितानें।
उच्छ्रायस्थगितनभो दिगन्तरालं
चिक्षेप क्षितिरुहजालमिन्द्रसूनुः ॥६१॥

निःशेषं शकलितवल्कलाङ्गसारैः
कुर्वद्भिर्भुवमभितः कषायचित्राम्।
ईशानः सकुसुमपल्लवैर्नगैस्तै-
रातेने बलिमिव रङ्गदेवताभ्यः ॥ ६२ ॥

उन्मज्जन्मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः।
गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥६३॥

द्वितीयो भुजमात्रसहायः सन् अपि विजेतुमिच्छया दृषेभ्यः इतराणि तेषां दृषदितरेषां कठिनानां पाषाणामिव करकाणामित्यर्थः। अश्मनां सम्बन्धिनीं परिरुग्णा भग्नाः पादपाः यस्याः सा, तां वृष्टिं ससर्ज अश्मभिर्जघान इत्यर्थः ॥ ६०

नीरन्ध्रमिति। शिलावितानें शिलाजाले भूतानामधिपतिना शिवेन पृषत्कैर्बाणैः क्षयं परिगमिते नीते सति इन्द्रसूनुरर्जुनः उच्छ्रायेण उत्सेधेन स्थगितम् आच्छादितं नभोदिशाम् अन्तरालञ्च येन तत् नीरन्ध्रं सान्द्रं रोहन्तीति रुहाः। इगुपधलक्षणः कप्रत्ययः। क्षितौ रुहा वृक्षास्तेषां जालं चिक्षेप प्रेरयामास। "उच्छ्रायं गमितवती" इति प्रामादिकः पाठः ॥६१

निःशेषमिति। ईशानः शिवः। शानच्प्रत्ययः। निःशेषं यथा तथा शकलितानि वल्कलानि त्वचः अङ्गानि शाखा सारो मज्जा च येषां तैर्भुवम् अभितः कषायो यो रागः स्वरसेन [स्वरागेन] रञ्जनमिति यावत्। "रागे क्वाथे कषायोऽस्त्री" इति वैजयन्ती। तेन चित्रां विचित्रवर्णां कुर्वद्भिः सकुसुमपल्लवैस्तैर्नगैर्वृक्षैः रङ्गे रणरङ्गे या देवतास्ताभ्यो बलिं पूजामिव आतेने ॥ ६२

अभिलषत उपायं विक्रमं कीर्त्तिलक्ष्म्यो-
रसुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनो-
रविनयमपि सेहे पाण्डवस्य स्मरारिः ॥ ६४ ॥

इति किरातार्जुनीये महाकाव्ये
सप्तदशः सर्गः ॥ १७ ॥

---

उन्मज्जन्निति। गाण्डीवी अर्जुनः उन्मज्जन् उत्तरन् मकरो जलग्राहविशेषः अमरापगाया गङ्गाया इव बाणनद्याः बाणप्रवाहात् वेगेन प्रतिमुखम् अभिमुखम् एत्य आगत्य कनकशिलानिभम्। कनकग्रहणं काठिन्यातिशयद्योतनार्थम्। विषमविलोचनस्य त्र्यम्बकस्य वक्षो हृदयं भुजाभ्याम् आजघ्ने ताडितवान्। अत्रात्मनेपदं विचार्य्यम् "आङो यमहनः" इत्यत्र अकर्माधिकारात् "स्वाङ्गकर्मकाच्च" इति वक्तव्यत्वात् न च शिवस्य प्रतिमुखम् इत्यन्वयात् कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्ष आजघ्ने इत्यर्थः इति वाच्यम्। अनौचित्याचरणात् न हि युद्धाय सन्नद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनमाचरन्ति किन्तु स्वभुजास्फालनम्। किञ्च अनन्तरं वक्ष्यमाणभवकर्तृकाविनयसहनविरोधात् वक्ष एव इत्यन्वयस्य अव्यवधानाच्च पूर्वैरेव दूषितत्वादतो व्याकरणान्तरात् द्रष्टव्यम्। केचित्तु "त्र्यम्बकस्य वक्षः प्राप्य" इत्यध्याहारं स्वीकृत्य अकर्मकत्वादात्मनेपदमाहुः ॥ ६३

अभिलषत इति। कीर्त्तिलक्ष्म्योरुपायं साधनभूतम् अरिसैन्यैरसुगमं दुरासदं विक्रमम् अभिलषतः। सूनुपक्षे यत्किञ्चिन्महत् फलं प्रार्थयमानस्येत्यर्थः। अत एव अङ्कम् अन्तिकम् अभ्यागतस्य उत्सङ्गमारूढस्य च पाण्डवस्य अविनयं स्मरारिरनेन भक्तवात्सल्यमेव सहनकारणमिति सूच्यते। शिशुत्वे शैशवे सुप्रियस्य परप्रेमास्पदस्य कुतः एक एव सूनुस्तस्यैकसूनोरविनयं जनक इव सेहे सोढ़वान् ॥ ६४

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
सप्तदशः सर्गः ॥ १७

---

## अष्टादशः सर्गः ।

——:o:——

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥

हरपृथासुतयोर्ध्वनिरुत्पत-
न्नमृदुसंवलिताङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥ २ ॥

शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः ।
क इव नाम बृहन्मनसां भवे-
दनुकृतेरपि सत्त्ववतां क्षमः ॥ ३ ॥

तत इति । ततो मुष्टियुद्धानन्तरम् उदग्रे महति द्विरदे गजे इव भीमौ भुजौ एव आयुधे यस्य तथाभूते रणमुपेयुषि मुनौ शङ्करः स्वयमपि सबाणधि सतूणं धनुरपास्य त्यक्त्वा मुष्टिभिर्घनैर्लोहमुद्गरैरिव प्रतिजघान । प्राङ्मुनिकृताघातस्य प्रतिघातं कृतवानित्यर्थः । "घनाः कठिनसङ्घात-मेघकाठिन्यमुद्गराः" इति वैजयन्ती । "घनस्तु लोहमुद्गरे" इति विश्वः । यद्यपि मुष्टिशब्दः "मुष्ट्या तु बद्धया । सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । उभयथा प्रयोगाद्‌द्विलिङ्गः तथाप्यत्र उपमानसारूप्यात् पुंलिङ्गो ग्राह्यः । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

हरेति । हरपृथासुतयोः शिवार्जुनयोरमृदु निविडं यथा तथा संवलिताः सङ्कुचिताः अङ्गुलयो येषां ते मुष्टीकृता इत्यर्थः । तेषु पाणिषु जातस्तयोक्तः । स्फुटन्तीनां विदलन्तीनाम् अनल्पशिलानाम् आरव इव दारुणो भीषणो ध्वनिरुत्पतन् उद्गच्छन् । दरीभृतो गिरेर्दरीषु गुहासु प्रतिननाद प्रतिदध्वान ॥ २

शिवेति । कपिध्वजः शिवस्य भुजाहतिभिर्मुष्टिघातैर्भिन्ना विदीर्णाः

व्रणमुखच्युतशोणितशीकर-
स्थगितशैलतटाभभुजान्तरः।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः॥ ४॥

उरसि शूलभृतः प्रहिता मुहुः
प्रतिहतिं ययुरर्जुनमुष्टयः।
भृशरया इव सह्यमहीभृतः
पृथुनि रोधसि सिन्धुमहोर्मयः॥ ५॥

निपतितेऽधिशिरोधरमायते
सममरत्नियुगेऽयुगचक्षुषः।
त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले॥ ६॥

याः पृथ्वी महत्यः क्षतयः प्रहाराः व्रणास्ताः सुखमिव अनुबभूव। दुःखकरीरपीति भावः। क्षतोदुःखं नाजीगणदित्यर्थः। ननु दुःमहदुःखविशेषु कथमगणना इत्यत्राह—क इति। क इव नाम को नु खलु सत्त्ववतां सत्त्वाधिकानां उन्नमनसां तेजस्विनाम् अनुकर्तेरनुकरणस्यापि क्षमो भवेत्। मनस्विनां चरितं नटवदनुकर्त्तुमपि न कश्चिदीष्टे, तस्य आचरणं तु दूरापास्तमिति भावः। रौद्ररसाविष्टमनसां मनस्विनां कुतः सुखदुःखगणनेति भावः॥ ३

व्रणेति। व्रणमुखेभ्यश्च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलाभं भुजान्तरं वक्षो यस्य स तथोक्तः। उमापतिरभिनवमौषसरागं सन्ध्यारागं बिभर्त्तीति तथोक्तेन जलधरेण समानं तुल्यं यथा तथा बभौ इत्युपमा॥ ४

उरसीति। शूलभृतः शिवस्य उरसि प्रहिताः प्रयुक्ताः अर्जुनस्य मुष्टयः पृथुनि विशाले सह्याद्रेः रोधसि तटे भृशरयास्तीव्रवेगाः सिन्धोः समुद्रस्य महोर्मय इव मुहुः प्रतिहतिं ययुः॥ ५

निपतित इति। अयुगानि चक्षूंषि यस्य तस्य अयुगचक्षुषः त्रिलोचनस्य आयते दीर्घे अरत्नियुगे अरत्न्योर्व्वद्धमुष्ट्योर्हस्तयोर्युगे युग्मे। "हस्तो

अभिभवोदितमन्युविदीपितः
समभिसृत्य भृशं जवमोजसा ।
भुजयुगेन विभज्य समाददे
शशिकलाभरणस्य भुजद्वयम् ॥ ७ ॥

प्रववृतेऽथ महाहवमल्लयो-
रचलसञ्चलनाहरणो रणः ।
करणशृङ्खलसङ्कलना गुरु-
र्गुरुभुजायुधगर्वितयोस्तयोः ॥ ८ ॥

अयमसौ भगवानुत पाण्डवः
स्थितमवाङ्मुनिना शशिमौलिना ।

मुष्टया तु वद्धया । सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः। प्रकृते तु मुष्टिमात्रविवक्षया प्रयोगः। शिरोधरायामधीति अधिशिरोधरम् अधिकन्धरं समं युगपत् निपतिते सति। किरीटिना अर्जुनेन सदाद्विव त्रीणि चत्वारि वा त्रिचतुराणि। "सङ्ख्ययाव्ययासन्न" इत्यादिना बहुव्रीहिः। "चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्" इति समासान्तोऽच्प्रत्ययः। तेषु त्रिचतुरेषु पदेषु लुलितदृष्टि घूर्णितनेत्रं यथा तथा चस्खले स्खलितम्। भावे लिट् ॥ ६

अभिभवेति। अभिभवेन उग्ररूपेण उदितः उत्पन्नो यो मन्युः क्रोधः तेन विदीपितः प्रज्वलितः सः अर्जुनः भृशं जवं समभिसृत्य समभिद्रुत्य ओजसा बलेन शशिकलाभरणस्य इन्दुमौलेः शिवस्य भुजद्वयं भुजयुगेन विभज्य वियोज्य समाददे जग्राह ॥ ७

प्रववृत इति। अथ महाहवे महारणे मल्लयोर्बलीयसोः। "मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि" इति विश्वः। गुरुभुजौ एव आयुधं तेन गर्वितयोस्तयोः शिवार्जुनयोः करणानि करचरणबन्धनान्येव शृङ्खलानि येषां तेषां सङ्कलना सङ्घट्टना तया गुरुर्दुस्तरः तया अचलस्य हिमाद्रेः सञ्चलनं कम्पस्तस्य आहरणः आरोपकः। कर्त्तरि ल्युट्। रणः प्रववृते प्रवृत्तः ॥ ८

समधिरूढमर्जुन नु जिष्णुना
खिदिति वेगवशान्मुमुहे गणैः ॥ ९ ॥
प्रचलिते चलितं स्थितमास्थिते
विनमिते नतमुन्नतमुन्नतौ।
वृषकपिध्वजयोरसहिष्णुना
मुहुरभावभयादिव भूभृता ॥ १० ॥
करणशृङ्खलनिःसृतयोस्तयोः
कृतभुजध्वनि वल्गु विवल्गतोः।
चरणपातनिपातितरोधसः
प्रससृपुः सरितः परितः स्थलीः ॥११॥

वयमिति। अयं पुरोवर्त्ती पुमान् असौ भगवान् प्रसिद्धो देवः। तदुक्तम् "इदमः समक्षरूपं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इति। उत पाण्डवः अयं हि तिष्ठदवस्थायां भ्रम इति वेदितव्यम्। अथ पतनावस्थायामाह—मुनिना अवाक् अधःस्थितम् उत शशिमौलिना अर्जुन देवेन नु समधिरूढम् उपरिस्थितम्। अथ जिष्णुना स्वित् अर्जुनेन वा समधिरूढमित्येवं गणैः प्रमथैर्वेगवशात् मुमुहे भ्रान्तम्। "मुह वैचित्त्ये" भावे लिट् ॥ ९

प्रचलित इति। असहिष्णुना तयोर्भारमसहमानेन भूभृता शैलेन अभावभयात् विनाशभयादिव मुहुर्वृषश्च कपिश्च ध्वजे ययोस्तयोर्वृषकपिध्वजयोः प्रचलिते चलने सति चलितं प्रचेले आस्थिते तूष्णीम् अवस्थाने स्थितं तथैव तस्थे। विनमिते सम्यगाक्रमणे सति नतं नम्रीभूतम् अनामीति यावत्। उन्नतौ उन्नमने सति उन्नतम् उदनामि। सर्वत्र भावे क्तः ॥ १०

करणेति। करणानि करचरणबन्धविशेषास्तान्येव शृङ्खलानि तेभ्यो निःसृतयोर्मुहुस्त्यक्तबन्धयोरित्यर्थः। कृतो भुजध्वनिः भुजास्फोटनशब्दो यस्मिन् कर्मणि तत्तथा वल्गु सुन्दरञ्च यथा तथा विवल्गतोरुत्प्लवमानयोस्तयोः हरपार्थयोश्चरणपातैः पादक्षेपैर्निपातितानि रोधांसि यासां ताः सरितो नद्यः स्थलीः परितःस्थलीषु प्रससृपुः प्रसृताः। "अभितः

वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वजः।
चरणयोश्चरणानमितक्षिति-
र्निजगृहे तिसृणां जयिनं पुराम् ॥१२॥

विस्मितः सपदि तेन कर्मणा
कर्मणां क्षयकरः परः पुमान्।
क्षेप्तुकाममवनौ तमक्रमं
निष्पिपेष परिरभ्य वक्षसा ॥१३॥

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया।
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥१४॥

परितः" इत्यादिना द्वितीया। "जनपद" इत्यादिना अकृत्रिमार्थे ङीष्। कूलपातक्षोभात् उद्वेलसलिलाः सरितः स्थलानि प्रामज्जयन् इत्यर्थः। एतेन तयोर्भार उक्तः ॥११

वियतीति। वियति अन्तरिक्षे वेगेन परिप्लुतम् उत्पतितं तिसृणां पुरां जयिनं त्रिपुरान्तकम्। "जिदृक्षि" इत्यादिना इनिप्रत्ययः। कपिध्वजोऽर्जुनश्चरणाभ्यां पादाभ्याम् आनमितक्षितिः सन् रयेण वेगेन समभिसृत्य अभिद्रुत्य अन्तरा मध्यमार्गे चरणयोः पदयोः निजगृहे निगृहीतवानित्यर्थः। उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राह इत्यर्थः ॥१२

विस्मित इति। तेन कर्मणा चरणग्रहणकर्मणा सपदि विस्मितः सविस्मयः कर्मणां क्षयकरः मोक्षप्रद इत्यर्थः। परः पुमान् हरः अवनौ क्षितौ क्षेप्तुं कामो यस्य तम्। "तुङ्काममनसोरपि" इति मकारलोपः। अक्रमम् अक्रान्तं तं पार्थं वक्षसा परिरभ्य निष्पिपेष गाढमालिलिङ्ग इत्यर्थः। रथोद्धता वृत्तम् ॥१३

तपसेति। भगवान् देवः अस्य अर्जुनस्य विपुलसत्त्वतया बहुसत्त्वसम्पदेत्यर्थः। धैर्यसम्पत्तेरिति यावत् यथा मुदं ययौ तथा तपसा मुदं न ययौ।

अथ हिमशुचिभस्मभूषितं
शिरसि विराजितमिन्दुलेखया।
स्ववपुरतिमनोहरं हरं
दधतमुदीच्य ननाम पाण्डवः ॥१५॥

सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम्।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम् ॥१६॥

सिषिचुरवनिमम्बुवाहाः शनैः
सुरकुसुममियाय चित्रं दिवः।
विमलरुचि भृशं नभो दुन्दुभे-
र्ध्वनिरखिलमनाहतस्यानशे ॥१७॥

तथाहि सतां गुणसंहतिस्तपःसेवादिगुणसङ्घातात् समतिरिक्तम् अतिशयितं निजं सत्त्वमेव उपकारि उपकारकमहो। प्रमिताक्षरावृत्तम् ॥१४

अथेति। अथ हिमशुचिना हिमशुभ्रेण भस्मना भूषितं शिरसि इन्दुलेखया विराजितं शोभितम् अतिमनोहरं सुन्दरं स्ववपुर्दधतम्। किरातरूपं विहाय निजविग्रहं दधानं हरमुदीच्य पाण्डवो ननाम प्रणतवान्। अपरवक्त्रं वृत्तम्। "अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात् ॥१५

सहेति। वृषस्य इव गतिर्यस्य सोऽर्जुनः तस्मिन् समये सह शरधिभ्यां वर्त्तत इति सहशरधि सनिषङ्गम्। "वोपसर्जनस्य" इति विकल्पात् सहशब्दस्य न सभावः। निजं कार्मुकं गाण्डीवं तथैव पूर्ववदेव संवर्मितं सम्यक् कवचितम् अतनु महत् निजं वपुः तथैव निहितं यथापूर्वं स्थापितम्। असिमपि खड्गञ्च तथैव पश्यन् विस्मयम् उपाययौ। क्वचित्तु "वृषभगतिम्" इति पाठः। तत्र वृषभगतिं शिवञ्च पश्यन् विस्मयम् उपाययौ इत्यर्थः। प्रमुदितवदना वृत्तम्। "प्रमुदितवदना भवेत् नौ रसौ" इति लक्षणात् ॥१६

सिषिचुरिति। अम्बुवाहाः शनैरवनिं सिषिचुरुक्षाञ्चक्रुः दिवोऽन्त-

आसेदुषां गोत्रभिदोऽनुवृत्त्या
गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानै-
र्द्यौराचिता तारकितेव रेजे ॥१८॥

हंसा बृहन्तः सुरसद्मवाहाः
संह्रादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्य्यमाणै-
र्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥१९॥

मुदितमधुलिहो वितानीकृताः
स्रज उपरि वितत्य सान्तानिकीः ।
जलद इव निषेदिवांसं वृषे
मरुदुपसुखयाम्बभूवेश्वरम् ॥२०॥

रित्वात् चित्रं विचित्रं सुरकुसुमं मन्दारकुसुमानि । जातावेकवचनम् । इयायाजगाम । अनाहतस्य अताड़ितस्य दुन्दुभेः । जातावेकवचनम् । ध्वनिः शब्दो विमलरुचि प्रसन्नम् अखिलं नभो भृशम् आनशे व्याप । अताड़िता एव दुन्दुभयो नेदुरित्यर्थः । सर्व्वमिदम् अस्य सर्वलोकहितार्थत्वादिति वेदितव्यम् ॥१७

आसेदुषामिति । गोत्रभिदः इन्द्रस्य अनुवृत्त्या अनुस्मरणेन आसेदुषाम् आसन्नानां भुवनत्रयस्य गोपायकानां रक्षकाणां लोकपालादीनाम् । "गुपू धूप" इत्यादिना आयप्रत्ययः, तदन्तात् खल् । रोचिष्णवः प्रकाशनशीलाः रत्नावलयो येषां तैः । "अलङ्कञ्" इत्यादिना इष्णुच्प्रत्ययः । विमानैः पुष्पकैराचिता व्याप्ता द्यौस्तारकिता सञ्जाततारकेव रेजे । उत्प्रेक्षालङ्कारः ॥१८

हंसा इति । बृहन्तः महान्तः । सुरसद्मानि विमानानि वहन्तीति सुरसद्मवाहाः । कर्मण्यण् । संह्रादीनि निह्रादीनि मुखराणि कण्ठाभरणानि किङ्किण्यो येषां ते पतन्तो धावन्तो हंसाः प्रयत्नेन विकीर्य्यमाणैर्विक्षिप्यमाणैरग्रपक्षैः पक्षाग्रैर्व्योम्नः परिष्वङ्गमालिङ्गनं चक्रुरिवेत्युत्प्रेक्षा ॥१९

मुदितेति । मरुत् वायुः जलदे मेघे इव वृषे निषेदिवांसम् उपविष्टम्

कृतधृति परिवन्दितेनोच्चकै-
र्गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी
स्तुतिरिति जगदे हरेः सूनुना ॥२१॥

शरणं भवन्तमतिकारुणिकं
भव भक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित भवन्ति भये
ससुरासुरस्य जगतः शरणम् ॥२२॥

विपदेति तावदवसादकरी
न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषा-
स्तव यावदीश न नतिः क्रियते ॥२३॥

ईश्वरं मुदिता मधुलिहो भृङ्गा याभिस्ताः वितानीकृता उल्लोचाकाराः कृताः । "अस्त्री वितानमुल्लोचः" इत्यमरः । मान्तानिकीः सन्तानकुसुमविकाराः स्रजो मन्दारमाला इत्यर्थः । सन्तानशब्दाद्विकारार्थे ठक् । "सन्तानः कल्पवृक्षश्च" इत्यमरः । उपरि वितत्य विस्तार्य उपसुखयाम्बभूव प्रह्लादयामास ॥२०

कृतेति । अभिन्नरोमोद्गमैरविरलरोमाञ्चैर्गणपतिभिः प्रमथमुख्यैः उच्चकैः परिवन्दितेन साधु साधु इति संस्तुतेन । "वदि अभिवादनस्तुत्योः" कर्मणि क्तः । हरेः सूनुना अर्जुनेन तपसि कृतं फलं भगवत्साक्षात्कारलक्षणं येन तस्मिन् कृतफले सतीत्यर्थः । कृतधृति कृतसन्तोषं यथा तथा फलज्यायसी फलाधिका इति वक्ष्यमाणा स्तुतिर्जगदे कथिता ॥२१

शरणमिति । हे अजित ! हे अपराजित ! हे भव ! अतिकारुणिकम् अतिदयालुम् । "तदस्य प्रयोजनम्" इति ठक् । भक्तिगम्यं भक्तिमात्रसुलभं भवन्तं शरणं रक्षकमधिगम्य जितमृत्यवो विगतमरणा अमरा भूत्वेत्यर्थः, जनाः ससुरासुरस्य जगतो भये आपदि शरणं स्वयं रक्षितारो भवन्ति । "शरणं गृहरक्षित्रोः" इति विश्वः । प्रमिताक्षरावृत्तम् ॥२२

विपदिति । हे ईश ! यावत् तव नतिः प्रणामो न क्रियते पुरुषेणेति

संसेवन्ते दानशीला विमुक्त्यै
संपश्यन्तो जन्मदुःखं पुमांसः ।
यन्निःसङ्गस्त्वं फलस्यानतेभ्य-
स्तत्कारुण्यं केवलं न स्वकार्य्यम् ॥२४॥

प्राप्यते यदिह दूरमगत्वा
यत् फलत्यमरलोकगताय ।
तीर्थमस्ति न भवार्णववाह्यं
सार्वकामिकमृते भवतस्तत् ॥२५॥

शेषः । तावदेव एकं पुरुषम् एकाकिनं सन्तमवमादकरी क्षयकरी विपदेति प्राप्नोति । कामसम्पत् मनोरथसम्पच्च न अभिकामयते न इच्छति । पुरुषाश्च अन्ये लोकास्तमेकं पुरुषं तव स्तुतिमकुर्वाणं न नमन्ति न वशे वर्त्तन्ते नानिष्टनिवृत्तिः नापीष्टप्राप्तिरित्यर्थः । यदा तु त्वां प्रणमन्ति तदा एव सर्वं लभ्यते इति भावः ॥२३

संसेवन्त इति । दानं शीलं स्वभावो निजधर्मो येषां ते दानशीलाः त्वामेव उद्दिश्य दानं कुर्वन्त इत्यर्थः । "तस्माद्दानं परमं वदन्ती"ति श्रुतेरिति भावः । कुतः ? यतो जन्मदुःखं सम्पश्यन्तः अनुभवन्तः पुमांसो विमुक्त्यै मोक्षाय संसेवन्ते भवन्तमिति शेषः । न च तच्चित्रं किन्तु आनतेभ्यः प्रणतेभ्यः निःसङ्गो निःस्पृहः त्वं यत् फलसि फलं ददासि तेषां फलार्थि-त्वादिति भावः । तत् केवलं निरुपाधिकं कारुण्यं करुणा । स्वार्थे ष्यञ् । "कारुण्यं करुणा घृणा" इत्यमरः । न स्वकार्य्यमेतदेव चित्रं केवलं परार्थत्वादिति भावः । शालिनीवृत्तम् ॥२४

प्राप्यत इति । यत् तीर्थमिह अस्मिन् लोके दूरमगत्वा प्राप्यते स्मृति-मात्रसुलभमित्यर्थः । गङ्गादिकन्तु न तथेति भावः । यत् तीर्थम् अमरलोकगताय फलति फलं प्रयच्छति । अत्रापि स्मरणमात्रादेवेति भावः । भवः संसारः स एव अर्णवः ततो वाह्यं बहिर्भवं संसारातीतं मोक्ष-प्रदमित्यर्थः । "बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्" इति ञप्रत्ययः । सर्वे कामाः प्रयोजनमस्येति सार्वकामिकम् । "तदस्य प्रयोजनम्" इति ठक् । तत् तादृक् तरन्ति अनेनेति तीर्थं तारकं भवतस्त्वदृते । "अन्या-रात्" इत्यादिना पञ्चमी । अन्यत् नास्ति । औपच्छन्दसिकं वृत्तम् ॥२५

व्रजति शुचि पदं त्वयि प्रीतिमान्
प्रतिहतमतिरेति घोरां गतिम्।
इयमनघ! निमित्तशक्तिः परा
तव वरद! न चित्तभेदः क्वचित् ॥२६॥

दक्षिणां प्रणतदक्षिण! मूर्त्तिं
तत्त्वतः शिवकरीमविदित्वा।
रागिणापि विहिता तव भक्त्या
संस्मृतिर्भव! भवत्यभवाय ॥२७॥

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥२८॥

व्रजतीति। हे वरद! त्वयि प्रीतिमान् नरः शुचि निर्मलं पदं कैवल्यं मुक्तिं व्रजति। "मुक्तिः कैवल्यनिर्वाण" इत्यमरः। प्रतिहतमतिरुपहतबुद्धिस्त्वद्द्वेषीत्यर्थः। घोरां गतिं तीव्रं नरकमिति प्राप्नोति। न च एतावता तव रागद्वेषकलङ्कपङ्कमित्याह—इयमिति। हे अनघ! निष्कलङ्क! इयं भक्ताभक्तयोरिति शेषः। विधेयप्राधान्यात् स्त्रीलिङ्गता। परा दुस्तरा निमित्तशक्तिर्निमित्तभूता शक्तिः स्वचेष्टितमहिमा तव क्वचिद् भक्ते द्वेषिणि वा कुत्रापि चित्तभेदो बुद्धिवैषम्यं नास्ति स्वकर्मणैव जन्तुस्तरति पतति वा त्वं साक्षितया सर्वत्र सम इत्यर्थः ॥२६

दक्षिणामिति। हे भव! हे प्रणतदक्षिण! प्रणतेषु दाक्षिण्यसम्पन्न! दाक्षिण्यं परच्छन्दानुवर्त्तित्वम्। "दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु" इति विश्वः। शिवकरीं श्रेयस्करीम्। "कृञो हेतु" इत्यादिना टप्रत्यये ङीप्। तव दक्षिणां मूर्त्तिं तत्त्वतो याथार्थ्येन अविदित्वापि रागिणा रागद्वेषवतापि भक्त्या विहिता तव संस्मृतिः संस्मरणमभवाय संसारनिवृत्तये। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। भवति तत्त्वज्ञानं विनापि भक्तिपूर्विका तव संस्मृतिरेव मुक्तिनिदानमित्यर्थः। स्वागतावृत्तम् ॥२७

युक्ताः स्वशक्त्या मुनयः प्रजानां
हितोपदेशैरुपकारवन्तः ।
समुच्छिनत्सि त्वमचिन्त्यधामा
कर्माण्युपेतस्य दुरुत्तराणि ॥२९॥
सन्निबद्धमपहर्त्तुमहार्य्यं
भूरि दुर्गतिभयं भुवनानाम् ।
अद्भुताकृतिमिमामतिमाय-
स्त्वं बिभर्षि करुणामय ! मायाम् ॥ ३० ॥

दृष्ट्वेति । प्रेक्षया बुद्ध्या करोतीति प्रेक्षाकारी विमृश्यकारी दृश्यानि द्रष्टव्यानि दृष्ट्वा ज्ञात्वा आचरणीयानि विधाय कर्त्तव्यानि च कृत्वा अपायैर्मुक्तं नाशवर्ज्जितं पदं याति । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुतिः । ज्ञानकर्मभ्यां मुक्तिरित्यर्थः । किन्तु ते अपि ज्ञानकर्मणी त्वद्विषये एव मुक्तिसाधनं न अन्यविषये इत्याशयेनाह—सम्यगिति । यः पुमान् परं पुरुषोत्तमत्वेन सर्वोत्कृष्टं त्वां पश्यति तस्य सम्यग्दृष्टिः सम्यक् ज्ञानम् । यस्य त्वामुपास्ते सेवते स एव साधु विधेयं विधत्ते साधुकारीत्यर्थः । मत्तमयूरं वृत्तम् । लक्षणन्तु उक्तम् ॥ २८ ॥

युक्ता इति । मुनयो व्यासादयः स्वशक्त्या निजयोगमहिम्ना युक्ताः, तथा हितोपदेशैर्विधिनिषेधवाक्यैः स्मृतीतिहासपुराणमुखेन प्रजानामुपकारवन्तः कृतोपकाराश्च । मोक्षप्रदस्तु तेषामन्येषाञ्च त्वमेवेत्याह—समिति । अचिन्त्यधामा अचिन्त्यमहिमा त्वमेव उपेतस्य शरणं प्राप्तस्य प्रपन्नस्य सम्बन्धीनि दुरुत्तराणि सुदुस्तराणि कर्माणि बन्धकानि पुण्यपापानि समुच्छिनत्सि नाशयसि । ते तु अत्र असमर्था एवेति भावः ॥ २९

सन्निबद्धमिति । अतिक्रान्तो मायां बन्धरूपामतिमायः । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । हे करुणामय ! हे कृपालो ! सन्निबद्धं स्वकर्मणा दृढ़बद्धम् अत एव अहार्य्यमन्यैरनुच्छेद्यं भूरि प्रभूतं भुवनानां दुर्गतिभयं नरकभयम् । "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः । अपहर्त्तुमद्भुताकृतिं विचित्ररूपामिमां मायां दृश्यमानां लीलाविग्रहरूपां बिभर्षि । अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः । भवतस्तु परोपकारार्थं इत्यर्थः ॥ ३०

न रागि चेतः परमा विलासिता
वधूः शरीरेऽस्ति न चास्ति मन्मथः।
नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम् ॥ ३१ ॥
तवोत्तरीयं करिचर्म साङ्गजं
ज्वलन्मणिः सारशनं महानहिः।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति ॥ ३२ ॥
अविग्रहस्याप्यतुलेन हेतुना
समेतभिन्नद्वयमूर्त्ति तिष्ठतः।
तवैव नान्यस्य जगत्सु दृश्यते
विरुद्धवेशाभरणस्य कान्तता ॥ ३३ ॥

न रागीति। हे देव! चेतस्तव चित्तं रागि रागयुक्तं न परमयोगित्वादिति भावः। तथापि परमा निरतिशया विलासिता शृङ्गारादिचेष्टाशीलता भिक्षाटनादिषु विहरणेन तौर्यत्रिकव्यसनितया चेति भावः। किञ्च शरीरे अर्द्धाङ्गे वधूरस्ति प्रसिद्धञ्चैतदिति भावः। तथापि मन्मथः कामश्च नास्ति तस्य भस्मीकरणादिति भावः। किञ्च उषसि प्रातःसन्ध्यायां धातुर्ब्रह्मणो नमस्क्रियां वन्दनं स्वयं जगद्वन्द्यस्यापीत्यर्थः। इतीत्थं विरुद्धमिदमुक्तम् तव ईहितं चेष्टितं निसर्गतो दुर्बोधं दुराकलनीयं दुर्ग्रहमित्यर्थः। अदृष्टपूर्वत्वादिति भावः। वंशस्थं वृत्तम् ॥ ३१

तवेति। हे देव! तव साङ्गजं सलोमकं करिचर्म उत्तरीयं संव्यानम्। "संव्यानमुत्तरीयञ्च" इत्यमरः। दुःस्पर्शमिति भावः। ज्वलन्मणिः ज्वलद्रत्नो महान् अहिः सारशनं कटिभूषाविशेषः। योऽन्येषां प्राणहर इत्यर्थः। "क्लीबे सारशनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु" इत्यमरः। आस्यपङ्क्तिः कपालमाला स्रक् माल्यं शवभस्म चन्दनम्, उभयत्रापि अस्पृश्यममङ्गलञ्चेति भावः। किञ्च एतानि वस्तूनि हिमांशोः कला च समं तुल्यतया चकासति दीप्यन्ते त्वदाश्रयवशात् अरम्यस्यापि रम्यतेति किमशक्यं तवेति भावः ॥३२

अविग्रहस्येति। अविग्रहस्य वस्तुतोऽशरीरस्यापि सतः अतुलेन दुर्बोध-

आत्मलाभपरिणामनिरोधै-
र्भूतसङ्घ इव न त्वमुपेतः।
तेन सर्वभुवनातिग लोके
नोपमानमसि नाप्युपमेयः॥ ३४॥

त्वमन्तकः स्थावरजङ्गमानां
त्वया जगत् प्राणिति देव विश्वम्।
त्वं योगिनां हेतुफले रुणत्सि
त्वं कारणं कारणकारणानाम्॥३५॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम्।

त्वादसदृशेन हेतुना, केनापि कारणेनेत्यर्थः। समेता सङ्गता भिन्ना विलक्षणा च द्वयी द्विविधा स्त्रीपुंसात्मिका मूर्त्तिर्यस्मिन् कर्म्मणि तत् समेतभिन्नद्वयमूर्त्ति यथा तथा तिष्ठतोऽशरीरस्य शरीरमेव विरुद्धं तदपि नारीनरात्मकमिति किमतश्चित्रमस्तीति भावः। एवंविधस्य तवैव जगत्सु विरुद्धे वेषाभरणे पूर्वोक्ते यस्य तस्य विरुद्धवेषाभरणस्यापि सतः कान्तता रमणीयता दृश्यते अन्यस्य न दृश्यते, तस्मादचिन्त्योऽसौ तव महिमा इति भावः॥३३

आत्मेति। हे देव! त्वं भूतसङ्घ इव शरीरादिसङ्घात इव आत्मलाभपरिणामनिरोधैर्जन्मजरामरणैरुपेतो युक्तो न असि। तेन कारणेन हे सर्वभुवनातिग! सर्वलोकोत्तर! उपमीयतेऽनेनेति उपमानं नासि। उपमीयते यत् तदुपमेयमपि नासि, न कश्चित् त्वादृशोऽस्ति त्वमपि न अन्यसदृशः, अनन्यसाधारणत्वादित्यर्थः। वृत्तमुक्तम्॥३४

त्वमिति। हे देव! त्वं स्थावरजङ्गमानामन्तकः संहर्त्ता। त्वया हेतुना विश्वं सर्वं जगत् प्राणिति जीवति। त्वं योगिनां हेतुः प्रवर्त्तकं कर्म फलं भोगश्च ते हेतुफले रुणत्सि निवर्त्तयसि। तेषां त्वमेव बन्धविमोचक इत्यर्थः। किञ्च त्वं कारणानि भूतानि तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां कारणकारणानां कारणं प्रकृत्यादिद्वारा उत्पत्तिस्थानम्। अत्र सर्वत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्ययन्त्यभिसंविशन्ति" इति श्रुतिः प्रमाणमिति भावः॥३५

पाविन्याः शरणागतार्त्तिहारिणी ते
माहात्म्यं भव भवते नमस्क्रियायाः ॥३६॥

तरसा भुवनानि यो बिभर्त्ति
ध्वनति ब्रह्म यतः परं पवित्रम् ।
परितो दुरितानि यः पुनीते
शिव तस्मै पवनात्मने नमस्ते ॥३७॥

भवतः स्मरतां सदासने
जयिनि ब्रह्ममये निषेदुषाम् ।
दहते भवबीजसन्ततिं
शिखिनेऽनेकशिखाय ते नमः ॥३८॥

रक्षोभिरिति। रक्षोभिः राक्षसैः सुरमनुजैः सुराश्च मनुजाश्च तैर्देवमनुष्यैर्दितेः सुतैर्दैत्यैर्वा लोकेषु यदविकलं सम्पूर्णमाधिपत्यमाप्तं प्राप्तं तत् हे भव! शरणागतानामार्त्तिहारिणि दुःखनाशकाय ते भवते तुभ्यं नमस्क्रियायाः। "नमः स्वस्ति" इत्यादिना चतुर्थी। पाविन्याः पापहारिण्याः माहात्म्यं सामर्थ्यम्। "न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनति"रिति भावः। प्रहर्षिणीवृत्तम् ॥३६

अथ अष्टमूर्त्तिषु काश्चित् स्तुवन् वायुमूर्त्तिं तावदाह—तरसेति। यः पवनस्तरसा बलेन। "तरसी बलरंहसी" इति विश्वः। भुवनानि बिभर्त्ति प्राणात्मना धारयति। यतो यत् प्रेरणात् पवित्रं परं परमं ब्रह्म वर्णात्मकं ध्वनति नदति। "सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् हि संजनयति" इति वचनात्। यः पवनः परितो दुरितानि पातकानि पुनीते शोधयति नाशयतीति यावत्। हे शिव! तस्मै पावयतीति पवनो वायुः स एव आत्मा यस्य तस्मै पवनात्मने ते तुभ्यं नमः। वृत्तमुक्तम् ॥३७

अथ अग्निमूर्त्तिं स्तौति—भवत इति। जयिनि विजयशीले सर्वोत्कृष्टे ब्रह्ममये ब्रह्मप्रधाने तत्प्राप्त्युपायत्वात् सदासने सम्यगासने योगासने इत्यर्थः। निषेदुषामुपविष्टानां भवतः स्मरतां भवन्तं ध्यायताम्। "अधीगर्थ" इत्यादिना शेषे कर्म्मणि षष्ठी। भवबीजसन्ततिं संसारनिदानसमूहं भवनिदानकर्मसङ्घातं दहते भस्मीकुर्वते अनेकशिखाय बहुज्वालाय शिखिने वह्निमूर्त्तये ते तुभ्यं नमः ॥३८

आबाधामरणभयार्च्चिषा चिराय
प्लुष्टेभ्यो भव महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते
बीजानां प्रभव नमोऽस्तु जीवनाय ॥३९॥

यः सर्वेषामावरीता वरीयान्
सर्वैर्भावैर्नावृतोऽनादिनिष्ठः।
मार्गातीतायेन्द्रियाणां नमस्ते-
ऽविज्ञेयाय व्योमरूपाय तस्मै ॥४०॥

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे।
अतीत्य वाचां मनसाञ्च गोचरं
स्थिताय ते तत्पतये नमो नमः ॥४१॥

अथ जलमूर्त्तिं स्तौति—आबाधेति। हे भव! बीजानां प्रभव! कारणभूत! "जीवानाम्" इति पाठे तेषां तत्प्रतिबिम्बत्वादिति भावः। आबाधा आध्यात्मिकादिदुःखं मरणं पञ्चत्वं ताभ्यां भयं तदेव अर्च्चिर्यस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं प्लुष्टेभ्यो दग्धेभ्यः समुपगमेन संसेवया निर्वाणं सन्तापशान्तिं यच्छते ददते जीवयतीति जीवनं तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥३९

इदानीं नभोमूर्त्तिं स्तौति—य इति। भवेत्यनुवर्त्तते। भवति अस्मादयं प्रपञ्च इति भवः तत्सम्बुद्धौ। सकलजगज्जनकेति यावत्। वरीयान् उरुतरो विभुरित्यर्थः। "प्रियस्थिर" इत्यादिना उरुशब्दस्य वरादेशः। यस्त्वं सर्वेषां वस्तूनामावरीता आच्छादयिता। वृणोतेस्तृच्प्रत्ययः। सर्वैर्भावैः पदार्थैर्न आवृतः केनापि कदाचिदपि अनावृतः स्वयं व्यापकत्वादिति भावः। अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्य असौ अनादिनिष्ठो नित्यः। "निष्ठानिष्पत्तिनाशान्ता" इत्यमरः। इन्द्रियाणां चक्षुरादीनां मार्गातीताय अतीन्द्रियाय। अत एव अविज्ञेयाय अपरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥४०

असंविदानस्य ममेश संविदां
तितिक्षितुं दुश्चरितं त्वमर्हसि।
विरोध्य मोहात् पुनरभ्युपेयुषां
गतिर्भवानेव दुरात्मनामपि॥४२॥
आस्तिक्यशुद्धमवतः प्रियधर्म्म धर्म्मं
धर्मात्मजस्य विहितागसि शत्रुवर्गे।
सम्प्राप्नुयां विजयमीश यया समृद्धया
तां भूतनाथ विभुतां वितराहवेषु॥४३॥

अणीयस इति। भवेत्यनुवर्त्तते। हे भव! अणीयसे सूक्ष्मतराय तथापि विश्वविधारिणे जगद्धारकाय ते तुभ्यं नमः। अन्तिकस्थाय अन्तर्यामितया सन्निकृष्टाय मते। तथापि दवीयसे दुर्ग्रहत्वात् दूरतराय ते तुभ्यं नमः। वाचां मनसाञ्च गोचरं विषयमतीत्य स्थिताय अवाङ्मनसगोचराय। तत्पतये तेषां वाङ्मनसाभधिपाय। तदधिपश्चस्तैरेव न दृश्यते इति विरोधः। ते तुभ्यं नमो नमः। "चापले द्वे भवत इति वक्तव्यम्" इति द्विरुक्तिः। "सम्भ्रमेण प्रवृत्तिश्चापलम्" इति काशिका। भक्त्युद्रेकाच्च सम्भ्रमः। विरोधाभासोऽलङ्कारः॥४१

असंविदानस्येति। संविदां ज्ञानानामीश। "ईशानः सर्वविद्यानाम्" इति श्रुतेरिति भावः। "प्रेक्षोपलब्धिश्चित् संवित्" इत्यमरः। असंविदानस्य अज्ञानस्य। "समो गम्यृच्छि" इत्यादिना विदेः सम्पूर्वादकर्मकात् शानच्प्रत्ययः। मम दुश्चरितं शास्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढुम्। तिजेः सन्नन्तात् तुमुन्प्रत्ययः। त्वमर्हसि योग्योऽसि। ननु तव महानपराधः कथं सोढव्यस्तत्राह—विरोध्येति। मोहात् अज्ञानात् विरोध्य वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चात् शरणागतानां दुरात्मनामपि भवानेव गतिः, त्वं हि शरणागतानामपराधं न गणयसि इत्यर्थः॥४२

सम्प्रति वरं याचते—आस्तिक्येति। हे प्रियो धर्म्मो यस्येति प्रियधर्म! "समासान्तो विधिरनित्यः" इति न समासान्तः अच्प्रत्ययः। परलोके मतिरस्तीति आस्तिकः पारलौकिकः। "अस्तिनास्तिदिष्टम्" इति ठक्। तस्य भावः आस्तिक्यं विश्वासः, तेन शुद्धं विमलं धर्मं वैदिकाचारमवतः पालयतो धर्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापराधे

इति निगदितवन्तं सूनुमुच्चैर्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा।
ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥४४॥

स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥४५॥

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै।

शत्रुवर्गं विषये हे ईश ! यया समृद्धा अस्त्रवैभवेन विजयं सम्प्राप्नुयां भजेयं हे भूतनाथ ! आहवेषु तां विभुतां विभूतिमस्त्रविद्यां वितर देहि ॥ ४३

इतीति। इत्युच्चैर्निगदितवन्तं प्रणतशिरसं मघोनः इन्द्रस्य सूनुम् अर्जुनं महेशो महादेवः सादरं यथा तथा सान्त्वयित्वा उपसान्त्व्य अस्मै अर्जुनाय ज्वलता अनलेन तेजसा दीप्त्या परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं धनुःशब्दोपपदं वेदं धनुर्वेदमित्यर्थः। अभ्यादिदेश ददौ, अध्यापयामासेत्यर्थः। 'धनुरुपपदं वेदम्" इत्यत्र धनुरुपपदत्वं वेदशब्दस्य न तु संज्ञिनः तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावादवाच्यवचनदोषमाहुरालङ्कारिकाः। तदुक्तम्—"यदेवावाच्यवचनमवाच्यवचनं हि तत्" इति। समाधानं तु धनुःशब्दविशेषितेन वेदशब्देन शब्दपरेणेत्यर्थः। परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथञ्चित् सम्पाद्यम् ॥४४

स इति। पिङ्गाक्षः पिङ्गलाक्षः श्रीमान् शोभावान् भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत्। त्रिगुणस्त्रिशिखः परिवारः आकारो यस्य तत् त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणमायुधं यस्य स तथोक्तः। सूर्य्यपक्षे तु गुणत्रयपरिवारस्त्रयात्मक इति योज्यम्। स धनुर्वेदः सुरगणैः स्तुतिभिरुपगीतः सन् ईशानं शिवं त्रिस्त्रिवारम्। "द्वित्रिचतुर्भ्यः सुच्" इति सुच् प्रत्ययः। परीत्य प्रदक्षिणीकृत्य वीरं पाण्डोः सुतमर्जुनं भास्वान् सूर्य्यो जलदमिव अभिययौ। शिखरिणीवृत्तम् ॥ ४५

अवितथफलमाशीर्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥४६॥
असंहार्य्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-
स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ॥४७॥
व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसङ्घैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥४८॥

इति श्रीमहामहोपाध्यायभारविकृतौ किराता-
र्जुनीये महाकाव्ये धनञ्जयास्त्रलाभो
नाम अष्टादशः सर्गः ॥१८॥

अथेति। अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगाः इन्द्रादयो लोकपालाः शशधरमौलेः शम्भोरभ्यनुज्ञामवाप्य पूर्णकामाय तस्मै पाण्डवाय अवितथफलम् अमोघफलम् आशीर्वादम् आरोपयन्तः प्रयुञ्जानाः विजयि जयशीलं विविधं नानाविधमस्त्रमैन्द्रादिकं वितेरुर्ददुः। मालिनीवृत्तम् ॥ ४६

असंहार्य्योत्साहमिति। तरसा बलेन वेगेन जयिनं जयशीलम् उदयमस्त्रलाभरूपमभ्युदयम्, अन्यत्र उदयाद्रिञ्च प्राप्य असंहार्य्योत्साहं संहर्त्तुमशक्योत्साहं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहभरं तमोऽपसंहाररूपञ्च भारं वोढुं, स्थितम्, स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतस्थिति कृतपदम्। अन्यत्रोपरिवर्त्तमानम्। तपोलक्ष्म्या दीप्तं तं पाण्डवममराः इन्द्रादयो दिनकृतं सूर्य्यमिव उच्चैरुपजगुः साधु महाभाग्योऽसीति तुष्टुवुः। शिखरिणीवृत्तम् ॥ ४७

व्रजेति। शिवेन व्रज स्वपुरं गच्छ अरिलोकं जयेति गदितः उक्तः पादपद्मानतः शिवपादपङ्कजानतः सन्। तथा देवसङ्घैः श्लाघितः स्तुतः अत एव धृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपत्रः अर्जनः निजगृहं स्वाश्रमं गत्वा प्राप्य अथ सादरं यथा तथा धर्मसूनुं युधिष्ठिरं ननाम नमस्चक्रे ॥ ४८

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां
घण्टापथसमाख्यायामर्जुनवरप्रदानो नाम
अष्टादशः सर्गः ॥ १८

---

॥ समाप्तमिदं किरातार्ज्जुनीयम् ॥

—— :*: ——

## किरातार्जुनीयस्थ १५ सर्ग स्थितानां चित्रबन्धानामुद्धार:

### गोमूत्रिकाबन्धः। (१२ श्लोकः।)

ना सु गं यं न वा ना गी ध र सं स्थो न रा च स:



ना स र्वो यं न वा भो गी ध र णि स्थो हि रा ज स:

### सर्वतोभद्रः। (२५ श्लोकः।)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| दे | वा | का | नि | नि | का | वा | दे |
| वा | हि | का | स्व | स्व | का | हि | वा |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| का | का | रे | भ | भ | रे | का | का |
| वा | हि | का | स्व | स्व | का | हि | वा |
| दे | वा | का | नि | नि | का | वा | दे |

### अर्धभ्रमकः। (२७ श्लोकः।)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म | स | त्त्व | र | ति | दे | नि | त्यं |
| स | द | रा | म | र्ष | नो | शि | नि |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | र्ष | ति |

# किरातार्ज्जुनीयका भाषानुवाद ।

—:*:—

## पहला सर्ग ।

१ । जो राजलक्ष्मीकी रक्षाका प्रधान कारण है, प्रजाके प्रति कुरुराज दुर्य्योधनका वही व्यवहार जाननेके लिये, धर्म्मनन्दन युधिष्ठिरने जिस वनचरको नियुक्त किया था ; ब्रह्मचारीका वेषधारण किये वही वनचर सब हाल जानकर युधिष्ठिरके पास लौट आया ।

२ । वसुधाधिपति युधिष्ठिरसे यह अप्रिय विषय कहते, कि शत्रु दुर्य्योधन द्वारा भूमण्डल आयत्तीकृत होगया है, उस प्रणत वनचरका हृदय व्यथित नहीं हुआ । कारण, प्रभुके प्रियकारी कभी प्रिय झूठ कहनेकी अभिलाषा नहीं करते ।

३ । फिर भी, प्रियपात्रके प्रति कटु निष्ठुर भाषण शुद्ध नहीं । यही मनमें विचार, वनचर शत्रुके विनाशकी अभिलाषा रखनेवाले राजा युधिष्ठिरको आज्ञा ग्रहणकर, जिसका अर्थ सौष्ठव और विशेषतः औदार्य्ययुक्त प्रमाण द्वारा निर्णीत हुआ था, निर्ज्जनमें वही वाक्य कहने लगा ।

४ । वनचरने कहा,—"महाराज ! दूत हो जिसकी आंख है ऐसे प्रभुको वञ्चित करना कार्य्यमें नियुक्त नौकरोंको कभी उचित नहीं इसलिये मैं प्रिय वा अप्रिय जो कुछ कहूं, उसकेलिये आप मुझे क्षमा करना ; कारण हितकर और श्रुतिमधुर वाक्य दुर्लभ है ।

५ । जो सचिव स्वामीके प्रति साधु उपदेश नहीं करता, वह सचिव भला नहीं और जो प्रभु हितकारी मन्त्रीकी बात नहीं मानता, वह प्रभु भी अच्छा नहीं । राजा और कर्म्मचारियोंके परस्पर अनुरक्त होनेसे ही समृद्धि अनुरागसे बढ़ा करती है ।

६ । कहां राजाका वह स्वाभाविक दुर्ज्ञेय चरित और कहां यह मूर्ख मेरा जैसा पामर प्राणी ! फिर भी, मैं जो शत्रुओंकी निगूढ़ तत्त्व रीति-नीति समझ सका हूं, यह आपहीकी महिमाका फल है ।

७ । महाराज ! आप राज्यभ्रष्ट वनवासी हैं, और दुर्य्योधन सिंहासनपर समासीन हैं, इसपर भी वह आपसे पराभवकी आशङ्काकर छलके पासोंसे जीती पृथिवीको नीतिमार्गमें आयत्त करनेकी चेष्टा करता है ।

८। आपसे विशङ्कमान वह वञ्चक दुर्य्योधन गुणसम्पद्में आपको अतिक्रम करनेको अभिलाषाकर दयादानदाक्षिण्यादि गुणगौरवमें निर्मल यशका विस्तार कर रहा है। जो हो दुर्जनके संसर्गकी अपेक्षा महात्माओंके साथ गौरव बढ़ानेवाला विरोध भी अच्छा होता है।

९। कामक्रोधादि छः हो शत्रुओंको जीतनेवाला दुर्य्योधन अनन्यसुलभ मनूपदिष्ट प्रजापालन-पद्धति प्राप्त करनेके लिये आलस छोड़ रात-दिन कर्त्तव्यकर्म्मसे विभागपूर्व्वक नीति द्वारा अपने पौरुषका विस्तार किया करता है।

१०। वह अहङ्कारको छोड़ लोगोंके सामने नौकरोंको अकपट भावसे प्रिय मित्रोंकी भांति देखता, मित्रोंको अपने सगे भाईयों जैसा सम्मान प्रदान करता और भाईयोंको ऐसा मानता है, जैसे अपना आधिपत्य उसने उन्हींको दे दिया हो।

११। वह अनासक्त हो पक्षपात रहित दृष्टिसे बराबर सत्यासत्यका विचारकर जो धर्म्मार्थ कामको सेवा करता है, इसीसे वह त्रिवर्ग उसके अनुरागसे परस्पर मित्र बन कोई किसीको बाधा नहीं पहुंचाते।

१२। उसका कापट्यविहीन सन्धिप्रयोग दानसे वर्ज्जित नहीं। वह सदा समादरपूर्व्वक दान क्रिया करता है। उसकी वह सविशेष समादरक्रिया और गुणागुण विवेचना पहलेसेही अनुष्ठित हो जाती है।

१३। जितेन्द्रिय दुर्य्योधन, धनलोभ और क्रोधसे विवर्ज्जित हो और ऐसा समझ, कि 'यह मेरा स्वधर्म्म है' शत्रु या पुत्रका गुरूपदिष्ट दण्डद्वारा धर्म्मविप्लव दमन करता है।

१४। स्वराष्ट्र हो या परराष्ट्र, दुर्य्योधन सर्वत्रही नौकरोंको रक्षाकार्य्यमें नियुक्तकर उनके प्रति अविश्वस्त होकर भी विश्वस्तकी भांति व्यवहार करता है। सम्पूर्ण कार्य्य सम्पन्न हो जाने पर अपने कर्म्मचारीयोंको धन प्रदानकर कृतज्ञता प्रकाशित किया करता है।

१५। दुर्य्योधन सम्यक् विवेचनापूर्व्वक यथायोग्य पात्रके प्रति अनुग्रह सत्कारादिका नियोग किया करता है, इसलिये उसके सामादि चारो उपाय परस्पर स्पर्द्धा-सहकारमें अजस्र परिणामवृद्धियोग्य विभव राशि प्रसव किया करते हैं।

१६। राजाओंके रथों और घोड़ोंसे दुर्य्योधनके सभा-मण्डपका प्राङ्गण समाकीर्ण हो जाता है और राजाओंके दुर्य्योधनको दिये हुये हाथियोंके सुगन्धित मदसे पृथ्वी आर्द्र हो जाती है।

१७। उसका राष्ट्र देवमातृक नहीं, उसने कुएं, तालाब और नहरें बनवा बड़ा प्रवर्त्तन कर दिया है। उसकी राज्यमें रहनेवाले कृषक सदाही शस्यसम्पत् पाया करते हैं और सभी जगह अन्न उत्पन्न होता हैं। दुर्य्योधनके अविरत मङ्गलकर अनुष्ठानसे कौरव बड़ा ही उत्कर्ष लाभ कर रहे हैं।

१८। उदारकीर्त्ति दयावान् राजा दुर्य्योधन चारो ओर अच्छीतरङ्ग रत्नाकर अबाधरूपसे उन्नतिका सम्पादन करता है। वसुमती कुबेरोपम कुरुराजके दयादि गुणसे आर्द्रा हो स्वत: उनके लिये धन दोहन करती हैं।

१९। महाबलशाली, कुलशीलादिके विषयमें अभिमानी, धनसे पुरस्कृत, युद्धक्षेत्रमें लब्धकीर्त्ति, परस्पर स्वार्थपरताशून्य, ऐकमत्यसम्पन्न, धनुष्क, शूरवीर प्राण विसर्ज्जन कर भी दुर्य्योधनके अभीष्टके सम्पादनके अभिलाषी हैं।

२०। सुचतुर दुर्य्योधन पूतचरित चरों द्वारा राजाओंका कार्य्य-कलाप अशेषरूपसे जान लेता है, किन्तु विधाताकी तरह दुर्य्योधनका क्रियाकार्य्य; प्रभूत, श्रेयस्कर, परिणामशोभन फल देखकर ही दूसरे राजा जानते हैं।

२१। राजा दुर्य्योधन कभी युद्धमें धनुष नहीं उठाता या किसीसे कोपकर मुंह टेढ़ा नहीं रहता। राजा उसके सद्गुणोंसे विमोहित हो उसकी आज्ञा मुकुटवत् शिरपर धारण करते हैं।

२२। अप्रतिहतशासन राजा दुर्य्योधन नवयौवनोद्धत अपने छोटे भाई दुःशासनको युवराज बनानेको पुरोहितकी अनुमति ले आलस छोड़ हव्यसे अग्निदेवको सन्तुष्ट करता है।

२३। वह निःसपत्न सागरान्त भूमण्डलमें स्थायी भावसे शासन परिचालन कर भी सचेत रहता और डरा करता है। विरोधको वह बड़ा ही भयङ्कर समझता है।

२४। सांप जैसे सपेरेके मुंहसे गरुड़जीका नाम सुन नीचा फनकर व्यथित होता है, वैसे ही वहांके मनुष्योंके कथाप्रसङ्गमें आपका नाम सुन राजा दुर्य्योधन देवराजतनय अर्ज्जुनके विक्रमका स्मरण कर मुंह लटका सोच विचार करता है।

२५। इसलिये आप शीघ्र ही उस कपटाचारी जिघांसु दुर्य्योधनके प्रति यथायोग्य प्रतिक्रियाका प्रयोग करें। हम वार्त्ताहारी हैं, परवार्त्ता संग्रह ही हमारे वाक्य द्वारा हो सकता है

२६। इसके बाद वनचरपति महीपतिसे पुरस्कार ले चला गया और महीपतिने भी द्रौपदीके भवनमें जा भाईयोंसे वनचरको बातें कहीं।

२७। तब द्रुपदनन्दिनी शत्रुओंकी समृद्धरूप सिद्धिको सुन, उनके किये अपकारका स्मरणकर हृदयके आवेगको रोकनेमें असमर्थ हो युधिष्ठिरके क्रोध और उद्यमके उद्दीपक वक्ष्यमाण वाक्य कहने लगीं।

२८। आप जैसे ज्ञानियोंसे स्त्रियोंका कहा अनुशासन तिरस्कारस्वरूपमें समझा जा सकता है; फिर भी, मेरी यह निदारुण मनोवेदना स्त्रियोंकी आचारपद्धतिको लांघ इस विषयमें कुछ कहनेको मुझे उद्यत करती है।

२९। इन्द्र जैसे प्रभावशाली आपके वंशोद्भव भरतादि राजाओं द्वारा अविच्छिन्न भावसे चिरशासित पृथ्वीको आपने क्यों, मदस्रावी मत्तमातङ्गके माला फेंकनेकी भांति अपने हाथ परित्याग किया।

३०। देखो, जो मायावियोंसे माया नहीं करता, वह अविवेकी मानव पराभव पाता है। शाणित शर जैसे वर्म्म द्वारा अनावृत देहको छेद डालता है, वैसे ही धूर्त्तलोग उन सब अकुटिल व्यक्तियोंके हृदयमें प्रवेशकर उन्हें नष्ट करते हैं।

३१। आपके सिवा और कौन कुलाभिमानी अनुकूल सहायसम्पन्न नरपति, गुणानुरक्ता, कुलजा, मनोरमा अपनी भार्य्या जैसी राजलक्ष्मीको शत्रुसे अपहरण कराता?

३२। आप इस विपत्कालमें भी वीर-विगर्हित राहमें चल शत्रुकृत दुर्दशाका भोग कर रहे हैं। हे नराधिप। क्या क्रोध उत्पन्न हो जैसे आग रूखे काठको जलाती है, आपको नहीं जलाता?

३३। जिसका कोप निष्फल नहीं, जो आपद्विनाशमें समर्थ है, लोग स्वतः उसके वशीभूत हो जाते हैं। किन्तु जो व्यक्ति कोपपरिशून्य है, ऐसे पुरुषका मित्र होने पर भी कोई आदर नहीं करता और शत्रु होने पर भी उसे कोई भय नहीं दिखाता।

३४। देखकर कहो—पहले जो रक्तचन्दनचर्च्चित हो, रथपर चढ़ घूमते थे, वही भीमसेन इस समय धूलिधूसरित हो पैदल पर्व्वतसे पर्व्वतपर आते जाते हैं, क्या यह भी सत्यधन महाराजके हृदयको सन्ताप नहीं करते?

३५। इन्द्रतुल्य जिन अर्जुनने उत्तरकुरुदेशको जीत आपको

बहुतसा सोना चांदी ला दिया था, वह आजकल वल्कल वसन पहनते हैं। क्या यह देखकर भी आपको क्रोध नहीं आता ?

३६। अरे! आपका कैसा प्रबल धैर्य है। यह यमज माद्रीनन्दन नकुल और सहदेव वनशय्यामें शयन कर कठिनदेह होगये हैं, इनके बाल इधर उधर बिखर जानेसे यह गिरिजात गज जैसे देख पड़ते हैं। यह देख कर भी आपको सन्तोष और प्रतिश्रुति भङ्ग करनेका उत्साह नहीं होता ?

३७। यह मैं नहीं जान सकती, कि आपकी यह कैसी बुद्धि है ? आपकी चित्तवृत्ति अत्यन्त विचित्र है। किन्तु आपकी घोरतर विपत्तिकी चिन्ता करनेसे असह्य दुःख आ मेरे हृदयको विदीर्ण करता है।

३८। जो पहले आप बहुमूल्य शय्यामें शयन करते थे, गवैये मङ्गल-स्तुति गीति द्वारा आपको जगाते थे, वही आप आज कुशकी शय्या पर सोते और शिवाओंके अशुभ रवसे जगाये जाते हैं।

३९। हे नृप! पहले द्विजातियोंके भुक्तावशिष्ट अन्न द्वारा आपकी जो इस देहकी रमणीयता सम्पादित हुई थी, आज क्या वही शरीर आपके यशके साथ वन्यफल खानेसे दुर्बल नहीं हो रहा है।

४०। आपके जो दोनो पैर मणिमय पीठमें प्रतिष्ठित रहते और प्रणत राजाओंके शिरःस्थित मालाओंकी रजसे रञ्जित रहते थे, आज क्या आपके वही दोनो चरण अरण्य प्रदेशमें मृगों और ब्राह्मणोंके छिन्नाग्र कुशों पर नहीं पड़ते।

४१। आपकी यह दीन दशा शत्रुओं द्वारा ही हुई है, इसीसे मेरा हृदयक्षेत्र समूल उन्मूलित हो रहा है। आहा! शत्रु जिनकी वीर्य-सम्पद्‌की अतिक्रम नहीं कर सकते, ऐसे मानियोंका पराभव भी उत्सव कह कर ही विवेचित होता है।

४२। हे नृप! प्रसन्न हो, शान्तिको छोड़ शत्रुओंके मारनेके लिये फिर अपने उसी तेजको ग्रहण कीजिये। निस्पृह मुनि ही कामक्रोधादि-रिपुओंको जीत शान्ति द्वारा सिद्धिलाभ करते हैं, राजा नहीं।

४३। यशोधन! तेजस्विप्रधान! आप जैसे लोग ही यदि ऐसा दुःसह पराभव पा प्रसन्न रहें, अरे! तो निरभिमानता निराश्रय हो हत हो जायेगी।

४४। अथवा, यदि विक्रम परित्याग कर क्षमाको ही चिरसुखका साधन कह मनको बहलाते रहो तो इस राजचिह्न कार्म्मुकको छोड़ और जटाधारी हो इस वनमें होम करो।

४५। महाराज! आप असीम तेजःसम्पन्न विशेषतः प्रतिकारक्षम हैं; शाठ्यपरायण शत्रुओंसे आपने जो तेरह वर्ष वनवासकी प्रतिज्ञाकी है, उस प्रतिश्रुतिकी प्रतीक्षा करना आपके लिये युक्तियुक्त नहीं, कारण विजय चाहनेवाले राजा शत्रुको जीतनेके लिये छलका अवलम्बन कर, उसकी कोई न कोई त्रुटि प्रतिपादन कर सन्धिको तोड़ देते हैं।

४६। महाराज! विधि और समयके नियमानुसार जैसे सन्ध्याको सूर्य्य अगाध सागरमें डूब जाता है, प्रताप और किरणविहीन हो जाता है, फिर प्रातःकाल तिमिरराशिको समुच्छेद करने और उदय होने पर दिनश्री आ उसे आलिङ्गन करती है, आप वैसे ही घोरतर विपद्में गिर निष्प्रताप और निर्द्धन हो गये हैं, अब रिपुकुलको उन्मूलित कर उन्नत हो, राजलक्ष्मी फिर आ आपका आश्रय ग्रहण करेगी।

पहला सर्ग समाप्त ॥ १ ॥

## दूसरा सर्ग।

१। इसके बाद भीमसेन प्रियतमा द्रौपदीके कहे हितोपदेशपूर्ण मनोहर वाक्यकी अत्यन्त सारवत्ता उपलक्षितकर धर्म्मराज युधिष्ठिरसे उदार अर्थसे सम्बलित युक्तियुक्त वाक्य कहने लगे।

२। क्षत्रियकुलाभिमानिनी द्रौपदीने स्नेहपूर्ण ज्ञान चक्षुसे सब देख कर जो कहा है, बृहस्पति भी वह कहनेमें समर्थ नहीं। उनकी यह उपदेशवाणी सबको ही विस्मित करती है।

३। जैसे उतरनेके लिये सीढ़ियोंके होनेसे दुर्गम जलाशयमें पहुंच सकते हैं, वैसे ही अभ्यासादि प्रदर्शित होनेसे दुरभिगम्य नीतिपथमें भी लोग प्रवेश करनेको समर्थ हो जाते हैं। किन्तु जो स्नानार्थीसे गर्त्त पाषाण और कुम्भीरादिको विघ्नरहित जलाशय कह देता है, वैसे पुरुषकी भांति नीतिपथमें गमनेच्छु मानवको सन्धिविग्रहादिका देशकालोचित साधु उपदेश देनेवाला व्यक्तिविशेष दुर्लभ है।

४। परिणाममें हित करनेवाली, सन्ताप आदि दुःख उपजानेवाली और अतिवीर्य्यशालि थोड़ीसी भी औषधसे जैसे क्षीणबल रोगियोंको बल-पोषण आदि बहुतसे गुण दिखलाई देते हैं, वैसे ही द्रौपदीके परिणाम सुखकर, अर्थभूयिष्ठ, आपातकठोर, अल्पाक्षर वाक्यसे शक्तिहीन राजाओंके मान-त्राण-राज्यलाभादि प्रभूत गुण परिदृष्ट हो रहे हैं।

